निकटे समुपतस्थे अवालोकयच्च-यत् पूर्वस्यामस्ति विशाला पुष्प-वाटिका, यस्यामतिमुक्त-लताः सौरभेण विष्णुपदमपि मदयन्ति, यूथिकाः सुगन्ध-तरङ्गैर्हरितामपि हृदयं हरन्ति, पाटलि-पटलानि अलि-पटल-रसनाश्चटुलयन्ति, मालतिकाश्च मरन्द-बिन्दु-सन्दोहैः वसुमतीं वासयन्ति। तस्यां मन्दिर-पूर्वद्वार-सम्मुखे एवास्त्येका परम-रमणीया ज्योत्स्ना-स्पर्श-प्रकटित-द्विगुणतर-चाकचक्या

---

इत्यमर, अधः = निम्नादौ, स्तम्भारम्भस्य निकटे। अथस्तम्भेत्यत्र 'तटेरे वारि वा विसर्गलोप'। अतिमुक्तलताः माधवीलता, "अतिमुक्तः पुण्ड्रक स्याद्वासन्ती माधवी लता" इत्यमर। सौरभेण = सौगन्ध्येन। विष्णुपदम् = नभ। "वियद्विष्णुपद वा तु पुंस्याकाशविहायसी" इत्यमर। यूथिकाः = मागध्य। "अथ मागधी। गणिका यूथिकाऽम्बष्ठा" इत्यमर। हरिताम् = दिशाम्। हृदयम् = मध्यम्। अन्तरालप्रान्तमिति यावत्। हरन्ति = स्वायत्तीकुर्वन्ति। पाटलिपटलानि = मोघासमूहः। 'पाटलि पाटला मोघा काचस्थाली फलेरुहा। कृष्णवृन्ता कुबेराक्षी" इत्यमरः। अलिपटलरसना = द्विरेफमालाजिह्वा। चटुलयन्ति = चञ्चलयन्ति। मालतिकाः = जातय। "सुमना मालती जाति" इत्यमर। मरन्द-बिन्दु सन्दोहैः = मकरन्दकणसमूहैः। वसुमतीम् = वसुधाम्। वासयन्ति = सुगन्धयन्ति। परमरमणीया = नितान्तहृद्या। वेदिकाविशेषणमिदम्। ज्योत्स्नायाः = कौमुद्या, स्पर्शेन = संसर्गेण, प्रकटित द्विगुणतर चाक-

---

निकट खड़े होकर देखा कि पूर्व मे एक विशाल वाटिका है, जिसमें माधवी-लतायें अपने सौरभ से आकाश को भी मदमस्त बना रही है, जूही के पेड़ सुगन्धित तरङ्गो से दिशाओ के भी हृदय को हर ले रहे हैं, पाटरि के समूह भ्रमर कुलो की रसनाओ को चञ्चल बना रहे हैं और मालती लतायें मकरन्द बिन्दु के समूहो से पृथ्वी को सुगन्धित कर रही हैं। उस वाटिका मे मन्दिर के पूर्व द्वार के सामने ही एक परम सुन्दर, चाँदनी के स्पर्श से द्विगुणित चमचमाहट को प्रक-

सोपानत्रयालङ्कृत-चतुरवरोहा हंसपक्ष-वलक्ष-च्छवि-विजितवर-धवल-ग्राव-वेदिका। अस्यामागन्तुकानामुपवेशाय रचिताः पाषाणमया एव कतिचन मञ्चाः, तेषामन्यतमे उपविष्टा बालिकैका। सेयं वर्णेन सुवर्णम्, कलरवेण पुंस्कोकिलान्, केशैः रोलम्ब-कदम्बानि, ललाटेन कलाधर-कलाम्, लोचनाभ्यां खञ्जनान्, अधरेण बन्धुजीवम्, हासेन ज्योत्स्नां तिरस्कुर्वती, वयसा एकादशमिव वर्षं

---

च्छवयम् = कान्तिविशेषो यया सा। सोपानत्रयेण = आरोहणत्रयेण, "आरोहणं स्यात् सोपानम्" इत्यमरः, अलङ्कृता=विभूषिता, अत एव चतुर्षु = वेदस्रयाकरयानेषु, अवरोहः = स्थितिस्थानं यस्याः सा। हंसपक्षाणाम् = कादम्बपत्राणाम्, "गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम्" इत्यमरः, वलक्षायाः = सितायाः, छवेः = शोभायाः, विजितवराणाम् = जयनशीलानाम्, धवलानाम् = स्वच्छानाम्, ग्राव्णाम् = प्रस्तराणाम्, वेदिका। मञ्चाः = उच्छ्रितभूमयः, उच्छ्रायार्थकान्मञ्चेर्घञ्, "वृद्धोऽन्धः पतिरेव मञ्चकगतः" इत्यादौ प्रसिद्धम्। बालिका, इयमेव कथानायिका। "वर्णेन सुवर्णं तिरस्कुर्वती" इत्येवरूपेण सर्वत्रान्वयः। वर्णेन सुवर्णतिरस्कारोक्त्या सुवर्णरूपोपमानानादरप्रतीत्या प्रतीपालकारः सहृदयजनसवेद्यः। रोलम्बकदम्बानि = भ्रमरसमूहान्। बन्धुजीवम् = रक्तकम्, "रक्तकस्तु बन्धुको बन्धुजीवकः" इत्यमरः। "दुपहरिया" इति हिन्दी। हासेन, हासस्य

---

करनेवाली तीन सीढ़ियों से शोभित, चार अवरोहवाली, हंस के पक्ष की सी उज्ज्वल छवि को जीतनेवाले श्वेत पत्थरों से निर्मित, वेदी (चबूतरा) है। इस पर आगन्तुकों के बैठने के लिए पत्थर से ही बनी हुई कुछ कुर्सियाँ हैं जिनमें से एक पर एक बालिका बैठी है। यह बालिका अपने गौर वर्ण से सुवर्ण का, मधुर शब्द से पुरुष कोकिल का, बालों से भ्रमर-समूहों का, ललाट से चन्द्रमा की कला का, नेत्रों से खञ्जना का, अधर से दुपहरी पुष्प का, हास से चाँदनी का तिरस्कार करती हुई, वय से

स्पृशन्ती, श्याम-कौशेय-वस्त्र परिधाना, श्वेत-बिन्दु-सन्दोह-सङ्कुल रक्ताम्बर-कञ्चुकिका, कण्ठे एकयष्टिकां नक्षत्रमालां बिभ्रती, सिन्दूर-चर्चा-रहित-धम्मिल्लेन परिशिष्टं पाणिपीडनमिति प्रकटयन्ती, हस्ते पाटलि-कुसुमस्तवकमेकमादाय शनैः शनैर्भ्रामयन्ती, तमेव विलोकयन्ती च, अविदित-बहुल-तान-तारतम्यं मन्द-मन्दं मुग्ध मुग्ध मधुरं मधुरं किञ्चिद् गायतीति।

---

वर्णं श्वेतमय इति कविसमयख्यातिः। श्याम कौशेयवस्त्रम् = पट्टवसनम्, परिधानं यस्याः सा। श्वेतबिन्दूनां सन्दोहैः = समूहैः, सङ्कुलस्य = व्याप्तस्य, रक्ताम्बरस्य = रक्तवस्त्रस्य, कञ्चुकी = चोलिका यस्याः सा। बहुव्रीहौ "शेषाद्विभाषा" इति कपि "केऽण" इति ह्रस्वः। एकावलीम् = एकयष्टिकाम्। नक्षत्रमालाम् = सप्तविंशतिमुक्तामयीम्। "एकावल्येकयष्टिका। सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः" इत्यमरः। सिन्दूरचर्चारहितेन = कुङ्कुमसम्पर्कशून्येन, अनूढाः सीमन्ते सिन्दूरं न धारयन्तीति प्रथा। धम्मिल्लेन = संयतकेशसमूहेन, "धम्मिल्लः संयताः कचाः" इत्यमरः। पाणिपीडनम् = विवाहः। परिशिष्टम् = अवशिष्टम्। स्तबकः = गुच्छः, तम्। अविदित बहुल तानतारतम्यम् = तानोत्कर्षापकर्षौ, यस्मिंस्तत्, क्रियाविशेषणम्, अग्रेतनानि च।

---

एकादश वर्ष का स्पर्श-सा करती हुई, श्याम वर्ण के रेशमी वस्त्रों को पहने, सफेद बिंदियों के समूह से व्याप्त रक्त वर्ण की कञ्चुकी धारण किये, गले में सत्ताईस मोतियों से बनी हुई एकलरी ( आभूषण ) पहने, सिन्दूर-सम्पर्क से शून्य सीमन्त ( माँग ) के द्वारा 'अभी इसका विवाह अवशिष्ट है' यह प्रकट करती हुई, हाथ में गुलाब के फूलों का एक गुच्छा लेकर उसे धीरे-धीरे घुमाती हुई और उसी को देखती हुई, तानों के क्रम विचार से रहित कुछ मन्द-मन्द मनोहर-मनोहर और मधुर-मधुर गा रही है।

यद्यपि नैतया सरस्वती सरूपया अज्ञात-तातोत्सङ्ग शयनातिरिक्त सांसारिक-सुखया कदाऽपि गातुं शिक्षितम् , न वा गायकानां तास्ताः कर्ण-रसायन-मूर्छनाः कर्णातिथीकृताः, तथाऽपि भज्यमानमपि, त्रुट्यमानमपि, आम्रेड्यमानमपि, अदर्शित-रागविशेषमपि, आरोहावरोह-ध्रुवाभोगालङ्कारादि-कथा-शून्यमपि, निजकल्पनामात्रम् , तद्देशीय ग्राम्यस्त्री-गानानुकल्पम् , सुदीर्घ-स्वर-रणनं

अज्ञात तातोत्सङ्गशयनादतिरिक्तं सांसारिकं सुखम् = प्रियानन्दो यया तया । कर्णयोः = श्रोत्रयोः, रसायनानि = आनन्ददायिन्यः मूर्छनाः । कर्णातिथीकृताः = श्रोत्रगोचरीकृताः । मूर्छनाना श्रोत्रगोचरत्वे स्थिते कर्णातिथीकरणरूपे भक्त्या समारोप इति समाधिर्नाम गुणः ।

गानमिदं परमसरसादि आसीदिति सम्बन्धः । गान विशिनष्टि भज्यमानम् = स्खलत् । त्रुट्यमानम् = विच्छिन्नप्रायम्, पूर्वापरसम्बन्धशून्यमिति यावत् । आम्रेड्यमानम् = पुनः पुनरुच्चार्यमाणम् । यद्यपि गाने गुणताऽऽम्रेड्यमानतायास्तथाप्यनवसरे स्थितत्वे दोषत्वमेवेति वेदितव्यम् । न दर्शितः = न प्रकटीकृतः, रागविशेषः = ललिताद्यनेकभेदः, यस्मिंस्तत् । आरोहः = स रि ग-म-प ध-नीनामुच्चैस्त्वम् , अवरोहः = तन्नीचैस्त्वम् । ध्रुवः = स्थिरपदम् , आभोगः = रागविस्तारः, अलङ्कारः = रसादिः, तत्कथाशून्यमपि । तद्देशीयाना ग्राम्यस्त्रीणाम्=हालिकदाराणाम् , गानस्य = गीतेः,

यद्यपि सरस्वती के समान रूपवाली तथा पिता की गोद में सोने के अतिरिक्त किसी भी सांसारिक सुख को न जानने वाली इस बालिका ने न तो कभी गाना ही सीखा था और न गायकों की कानों में मधुर वर्षा करने वाली स्वर-लहरियों को ही सुना था, फिर भी स्खलिताक्षर होने पर भी, पूर्वापर सम्बन्ध शून्य होने पर भी, पुन-पुनः उच्चारित होने पर भी, किसी विशेष राग से रहित होने पर भी, आरोह, अवरोह, ध्रुव ( स्वर की स्थिरता ), राग-विस्तार एवं अलंकार आदि के तत्त्व से शून्य होने पर भी, केवल अपनी कल्पना-मात्र, उस प्रान्त की कृषक वधुओं के गाने के समान, ऊँची आवाज में गाया यह गीत,

गानमिदं परम-सरस परममधुरं परमहारि चाऽऽसीत्।

रघुवीरसिंहस्तु स्वरालाप-श्रवणेनैव परवशो विलोक्यैनां 'कोऽहम्? काहम्? केयम्? किमिदम्?' इत्यखिलं यौगपद्येनैव विसस्मार।

अहो! आश्चर्यम्, य एव फणि-फणा-फूत्कारेष्वपि सक्रोध हर्य्यक्ष-जृम्भारम्भेष्वपि मल्ल-वल्लजाग्र-परिस्पर्धि ...

---

अनुकल्पम्=तुल्यम्। मुक्तु दीर्घाणाम्=धाराणाम्, स्वराणां रणनम्=ध्वनि यस्मिंस्तत्। परमहारि=अत्यन्ताकर्षकम्।

अखिलम्=समस्तम्। यौगपद्येनैव=एककालमेव।

"विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारः कोऽप्यन्तर्जडयति च तापञ्च तनुते॥"

इति प्राचीनस्य तदवस्थावर्णनमनुचिन्तनीयम्।

अहो आश्चर्यम्, "ओम्" इति प्रशस्त्य प्रकृतिमावय। फणिफणा फूत्कारेषु=सर्पस्फटा-'फूं'-रवेषु। सक्रोधस्य=कुपितस्य, हर्य्यक्षस्य= केशरिण. "हर्यक्ष केशरी हरिः" इत्यमरः, जृम्भारम्भेषु=मुखव्यादानोपक्रमणेषु। मल्लवल्लजानाम्=प्रशस्तमल्लानाम्, "मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनि" इत्यमरः। अग्रस्य परिस्पर्धिनः=प्रतिद्वन्द्विनः, खराः=कठोराः, नखराः=नखाः, येषां ते च ते

---

परम सरस, परम मधुर और परम मनोहर था।

रघुवीर सिंह उस स्वर लहरी के श्रवण मात्र से परवश होकर, उस बालिका को देख कर, 'मैं कौन हूँ? कहाँ हूँ? यह कौन है? यह क्या है?' इत्यादि सभी कुछ एक साथ ही भूल गया।

अहो! आश्चर्य है। जिसने सर्पों के फनों की फुफकारों में भी, क्रोधाविष्ट सिंह की जमुहाई के समय भी, उत्तम भालों के अग्रभाग के प्रतिस्पर्धी तेज नाखून वाले रीछों के (मारने के लिये) दौड़ने के समय

धावनेष्वपि घन घनाघन-घर्षण-विघट्टित गैरिक व्रात जल प्रपात-गिरि-गह्वरोत्फालेष्वपि तरलतर-तरङ्ग-तोयावर्त्त-शताकुल-तरङ्गिणी-तीव्रतर-वेगेष्वपि गण्डक-मण्डल-घोणा-घर्षण घोर-घर्घराघोष-घोरतर-प्रान्तरेष्वपि च धैर्य नात्याक्षीत्, कार्यजात न व्यस्मार्षीत्, आत्मानं च न न्यगकार्षीत्; तस्याधुना स्विद्यन्त्यङ्गानि, रजते गात्र

भल्लाः = ऋक्षा, "भल्लो भल्लूकशस्त्रयो." इति कोष, तेषा धावनेषु = मार्गार्थत्वरितगतिषु। घनानाम् = सान्द्राणाम्, घनाघनानाम् = वर्षनिरत वारिदानाम्, "शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघन" इत्यमर, घर्षणेन = घट्टनेन, विघट्टितेषु = विदलितेषु, गैरिकव्रातेषु = गैरिकमिलितप्रस्तरखण्डेषु, जलप्रपाताः = आसारा, येषु तादृशानि यानि गिरिगह्वराणि तेषाम्। उत्फालेषु = उत्कूर्दनेषु। तरलतराः = अतिचञ्चला, तरङ्गाः = लहरय, येषु तादृशाना तोयानाम् = वारीणाम्, आवर्त्तशतैः = असख्य भ्रमरिकाभि, आकुलानाम् = क्षुभितानाम्, तरंगिणीनाम् = नदीनाम्, तीव्रतरेषु = अतितीव्रेषु, वेगेषु = ओघेषु। गण्डकमण्डलस्य = खड्गिसमूहस्य, घोणानाम् = नासानाम्, "घोणा नासा च नासिका" इत्यमर, घर्षणेन, घोरः = भयावह, यो घर्घराघोषः = घर्घररव, तेन घोरतराः = अतिकठोरा, प्रान्तराः = दूरशून्याध्वान, तेषु। अनुप्रासोऽत्र गद्यसमूहे। न-अत्याक्षीत् = न त्यक्तवान्। न व्यस्मार्षीत् = न विस्मृतवान्। न न्यगकार्षीत् = न न्यक्कारमकरोत्, न नीचैरमन्यतेति यावत्। स्विद्यन्ति =

भी, घने बरसते हुये बादलों के घर्षण से विदलित हुये और गेरू मिले हुये पत्थरों पर गिर रही जलधाराओं वाली पहाड़ी गुफाओं में कूदने में भी, अति चञ्चल तरग वाले जल में विद्यमान सैकड़ों भँवरों से भरी हुयी नदियों के तीव्रतर वेग में भी, गैंडों के समूह की नासिकाओं के घर्षण से उत्पन्न घोर घर्घर शब्द के कारण भयानक, दूर तक फैले शून्य मार्गों में भी धैर्य नहीं छोड़ा, अपना काम नहीं भुलाया, अपने को पतित नहीं किया, इस समय उसी के अग पसीने से तर हो रहे

यष्टिः, विमनायते हृदयम् अञ्चन्ति रोमाणि, क्षुभ्यति च मनः तत् कथमिदम् ? किमिदम् ? कुत इदम् ? अहह ! सत्यम् ! वीर बालोऽप्येष प्राप्यावसरम् आहतो मदन मृगयुना।

तावदकस्माद् "रघुवीर ! रघुवीर ! त्वं शिववीरस्य चरोऽसि गूढाभिसन्धिषु प्रेष्यसे, अल्पं तव वेतनम्, साधारणी तवावस्था, खड्ग-धारावलेहनमिव कष्टतरं तव कार्यम्, कैशोरं वयः, अतु

स्वेदयन्ति भवन्ति। एजते = कम्पते। विमनायते = वैक्लव्यमधिगच्छति। अञ्चन्ति = उद्गतानि भवन्ति। क्षुभ्यति = क्षोभमनुभवति। मदन मृगयुः = व्याधस्तेन। रूपकम्।

वीररसप्रधानेऽस्मिन् काव्ये तदङ्गतया विप्रलम्भशृङ्गारवर्णनमिदम्। सौवर्णी रघुवीरसिंहालम्बनविभावौ, रघुवीरधैर्यध्वंससमुद्भूताः स्वेदगात्र कम्पनादयोऽनुभावाः, निर्वेदादयश्चाग्रे वक्ष्यमाणा व्यभिचारिण इति विभावनीयम्।

तावदकस्मादन्तःकरणेन स्वयमेव प्रबोधितः पुनरतामेवेत्थिग्नेति सम्बन्धः। "शिववीरस्य चरोऽसि" इत्यनेनोपजनसम्पर्किणस्ते न युक्तमिदमिति व्यञ्जितम्। तथा च माघस्य पद्यम्—"न गणित यदि जन्म पयोनिधौ, हरशिरस्थितिभूः इति विस्मृता ?" गूढाभिसन्धिषु = गुप्तकृत्येषु। अल्पम् = सम्मीलनिर्वाहायोग्यम्। नागरव इव तदानीं दरिद्रा अलब्धभृतयश्चोद्वाह्य कामपि स्त्रियं स्वयं तस्याश्च जीवन व्यर्थयन्ति स्मेति विरायते। साधारणी तवावस्था, लोकोक्तिरियम्। अवस्था=दशा। वयोऽर्थकत्वे नु—"कैशोरं वयः" इत्यत्र वैयर्थ्यापात इति ध्येयम्। खड्गधाराया अवलेहनम्=रसनयाऽऽस्वादनम्।

हैं, शरीर काँप रहा है, हृदय अनमना हो रहा है, रोमाञ्च हो रहा है, और मन क्षुब्ध हो रहा है। यह कैसे ? यह क्या ? यह कहाँ से ? अरे ! सचमुच इस वीर बालक को भी शिकारी कामदेव ने अवसर पाकर घायल कर दिया।

तब तक अकस्मात् "रघुवीर ! रघुवीर ! तुम शिववीर के दूत हो। गूढ़ कार्यों में भेजे जाते हो, तुम्हारा वेतन अल्प है, स्थिति साधारण है तलवार की धार को चाटने की तरह अत्यन्त कठिन तुम्हारा काम है

दर्शि हृदयम्, सर्वत्र जागरूको राजदण्डः, अवितर्कणीया च भाविनी घटना। तन्मा स्म त्वं मुखचन्द्रावलोकनेऽधर-सीधु-तृषाभिः, कोमलाङ्गाऽऽलिलिङ्क्षिषाभिः, मधुरालाप-शुश्रूषाभिश्चाऽऽत्मानं विक्रीणीष्व"-इत्यन्तःकरणेन स्वयमेव प्रबोधितो नेत्रे प्रमृज्य, स्तम्भावष्टम्भं परिहाय, लोचनयोरुपरि स्फुरतः कुञ्चित-कचानपसार्य, शीतलं निःश्वस्य च, आत्मनो दशां स्मरन्नेव पुनस्तामेव कौमारात्परं वयश्चुचुम्बिषन्तीं कुसुम-कुड्मल-घूर्णन-व्याजेन यूनां

"राजसेवा मनुष्याणामसिधारावलेहनम्।
पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम्॥"

इत्युक्तेः। जागरूकः = अनिद्रितः। सर्वत्र लब्धप्रसर इति यावत्। इयमपि लोकोक्तिः। मा स्म मुखचन्द्रावलोकनादिभिरात्मानं विक्रीणीष्वेति सम्बन्धः। अधरस्थितस्य सीधुनः = ऐक्षवमद्यस्य, तृषाभिः = तृष्णाभिः। कोमलाङ्गालिलिङ्क्षिषाभिः = मृदुतन्वाश्लेषवाञ्छाभिः, मधुरालापशुश्रूषाभिः=हृद्यशब्दश्रवणमनोरथैः। प्रमृज्य=प्रोञ्छ्य। स्तम्भावष्टम्भम् = स्थगितताम्। सौवर्णीदर्शनोत्था जडतामिति यावत्। शीतलं निःश्वस्य, लोकोक्तिः। "ठण्डी सास लेकर" इति लोके, स्वदशास्मरणखेदसमुत्थमिदम्। कौमारात्परं वयः=यौवनम्। "कौमार यौवन जरा" इत्यमरयथानितयाभि-

अभी किशोर वय है, अल्पदर्शी हृदय है और राजदण्ड सभी ओर सतर्क है तथा भविष्य अचिन्तनीय है। तो तुम मुखचन्द्र के अवलोकन से, अधर वारुणी के पान की तृष्णा से, कोमल अङ्गों के आलिंगन की अभिलाषाओं से और मधुर शब्दों के सुनने की आकांक्षाओं से अपने को मत बेचो," इस प्रकार अन्तःकरण द्वारा स्वयं ही उद्बुद्ध होकर, आँखों को पोंछकर, (उस लड़की के दर्शन से उत्पन्न) जड़ता को त्याग कर, आँखों पर लहराते हुए घुँघराले बालों को हटाकर, ठंडी साँस लेकर, अपनी दशा का स्मरण करते हुए ही, फिर एक बार, उस यौवन के चुम्बन की आकांक्षिणी पुष्पकलिका को घूमने के बहाने युवकों के मन को

मनो घूर्णयन्तीं सौन्दर्य-सारावतार-स्वरूपामैक्षिष्ट ।

अथ सा तु "सौवर्णि ! सौवर्णि ! तातस्त्वामाकारयति" कस्यापि वटोरिव वाचमाकर्ण्य, आम् ! एषा आगच्छामि" मधुरमुदीर्य, उत्थाय, वेदिकातोऽवतीर्य, वाटिकायामेव ... सुधा-धवलमेकं गृहं प्राविशत् ।

रघुवीरसिंहस्य समीपत एव गतेति गमन-समये स्तगति-स्तम्भं परिवृत्त-ग्रीवं "कोऽयम् ?" इत्येनं ... मास । परतश्च "स्यात् कोऽपि" इति समुपेक्ष्य गृहं प्रविष्टेत्यपरो

प्रायम् । चुचुम्बिषन्तीम्=चुम्बितुमिच्छन्तीम् । स्प्रष्टुमभिलषन्तीमिति कुसुमकुड्मलघूर्णनव्याजेन=सुमकलिकापरिचालनकपटेन । परिचालयन्तीम् । सौन्दर्यसाररय=सुन्दरतातत्त्वस्य । देहधारिणीम् । पिण्डीभूतसौन्दर्यामिति यावत् । आगच्छामि, "वर्तमा सामीप्ये वर्त्तमानवद्वा" इति लट्, सुधाधवलम्=चूर्णक-सितम् । इ 'चूना' इति भाषायाम् । चकितेन=विस्मयेन सह वर्तते यस्या क्रियायाम् स्तगतिस्तम्भम्=उगमनावरोधम्, परिवृत्तग्रीवम्=परिवर्तितकन्धर

घूरती हुई सौन्दर्य के सार की अवतार स्वरूपा उस (कन्या) देखने लगा ।

और वह "सौवर्णि ! सौवर्णि ! दादा जी तुम्हें बुला रहे हैं" प्रकार किसी बटु की-सी आवाज सुनकर, "अच्छा आ रही हूं" मधुरता के साथ कह कर, उठकर तथा वेदी से उतर कर, वाटिका में दक्षिण की ओर स्थित एक चूने से पुते हुए स्वच्छ घर में घुस गई ।

वह रघुवीर सिंह के पास से होकर ही गई । अतः उस ... उसने कुछ चकित नेत्रों से निस्तब्ध हो, कुछ रुककर, गर्दन घुमा "यह कौन है ?" इस प्रकार क्षण भर रघुवीरसिंह को देखा, फिर "... होगा" इस प्रकार उसकी उपेक्षा करके घर में घुस गई । यह (...

ो वशीकार-प्रयोग-प्रचारः।

त रघुवीरश्च ततः प्रतिनिवृत्य, पुनः स्वाधिकृत-कोण-कोष्ठ-ऽऽयातः।

तत्र च गवाक्ष-जाल-प्रसारितैः राजत-मार्जनी-निभैः ानिधि-कर-निकरैः समूह्य संशोधित इवान्धकारे; पयः-ोधि-फेनैरिवाऽऽस्तृते शयनीय-पीठे उपविश्य, कदाचिदध इव ं विदधत्, कदाचित् कपोलं करे कलयन्, कदाचिज्जाला-

्याविशेषणानीमानि। वशीकारप्रयोगप्रचारः=स्वायत्तीकरणविधानप्रसारः। ्वीरविषयकमिदम्।

स्वाधिकृतकोणकोष्ठम् = निर्दिष्टस्वावासप्रान्तकक्षम्।

गवाक्षजालप्रसारितैः = वातायनरन्ध्रविकीर्णैः। रजतस्येव राजती= ्यमयी, मार्जनी=बहुकरी "झाड़ू" इति हिन्दी, तत्तुल्यैः। कलानिधि-रनिकरैः = चन्द्रकिरणसमूहैः, समूह्य = सञ्चित्य। "इकट्ठा कर" ति भाषायाम्। संशोधिते = दूरीकृते। "नक्षत्रमृक्षं भं तारा तारकाऽ-ुडु वाऽस्त्रियाम्" इत्यमरः। पयःपयोधिफेनैः = क्षीरवारिधिडिण्डीरैः। ास्तृते = विस्तीर्णे, शयनीयपीठे = पल्यङ्के। विदधत् = कुर्वाणः। नाभ्यस्ताच्छतुः" इति नुम्निषेधः। जालान्तरेण = वातायनरन्ध्रेण।

ुवक के लिए) एक और दूसरा वशीकरण के प्रयोग का अनुष्ठान हो ाया।

रघुवीर वहाँ से लौटकर फिर अपने अधिकृत कोने के कमरे में ही ला आया।

और वहाँ पर खिड़कियों की जाली से प्रविष्ट चाँदी की झाड़ू के मान चन्द्रमा की किरणो के समूह से इकट्ठा करके अन्धकार के साफ-ना कर दिये जाने पर, दुग्ध-समुद्र के फेन की तरह बिछे हुए बिस्तर र बैठकर कभी नीचे की ओर मुँह लटकाता, कभी हाथों पर

न्तरेण तारकमण्डलमवलोकयन्, कदाचित्किमिति मृषा चिन्तनैरि त्यात्मनैवाऽऽत्मानं सान्त्वयन्, कदाचिच्च 'निद्रे! कुत्र विद्रुताऽसि ?' इत्यशान्तिं बिभ्रत्, पार्श्वत पार्श्वे परिवर्त्तमानो होरामेकामयापयत्।

ततश्च 'अहह! शिववीरकार्यमसम्पादितमेकमवशिष्यत इति किञ्चित् सस्मृत्येव, कशयेव ताडितः सपद्युत्थाय, 'मन्दिर पुरोहितः क ?' इति काञ्चिदापृच्छ्य, केनाचिन्निर्दिष्टमार्गः वाटिकायां तदेव वालिकया प्रविष्टचरं गृहं प्रविवेश।

तत्र चैकस्मिन् प्रकाण्ड-काष्ठे निर्दिष्टं यद् एकस्यामारक्ट

तारकमण्डलम्=भगनम्। सान्त्वयन्=समादधत्। विद्रुता=निःसृतासि। पार्श्वतः पार्श्वे परिवर्त्तमानः, खेदस्वापे लोके "करवट बदलते हुए" इति समभिधीयते। लोकोक्तिः। होराम्=घटिकाम्। अयापयत्=व्यवाहयत्। कशया=अश्वताड़न्या, "चाबुक" इति भाषा। सपदि=सहसा, निर्दिष्टमार्गः=प्रदर्शितपथः।

प्रकाण्डकाष्ठे=विशाले कक्षे। "बड़े कमरे में" इति हिन्दी। आर

---

गाल रहता, कभी नाली के भीतर से तारामण्डल को देखता हुआ कभी "व्यर्थ के विचारों से क्या लाभ" इस प्रकार स्वयं अपने को सान्त्वना देता और कभी "निद्रे! तू कहाँ चली गई" इस प्रकार अशान्त होता हुआ, इधर-से-उधर करवटें बदलता रहा। इसी प्रकार एक घण्टा बीत गया।

तत्पश्चात् "अरे! शिवाजी के कामों में एक अभी बाकी रह गया" इस प्रकार कुछ स्मरण-सा करके, रघुवीरसिंह कोड़े से प्रताड़ित सा तुरन्त उठकर 'मंदिर के पुजारीजी कहाँ हैं?' इस प्रकार कुछ लोगों से पूछ कर किसी के द्वारा मार्ग बतलाये जाने पर उसी वाटिका में, जिसमें वह बालिका गई थी उसी घर में, प्रविष्ट हो गया।

वहाँ पर एक बड़े कमरे में देखा कि—पीतल की दीयट में एक

दीपिकायां प्रदीप एको ज्वलति, कुश-काशासनान्यनेकानि आस्तृतानि, आरक्त-वेष्टनेषु बहुशः पुस्तकानि पीठिका अधिष्ठापितानि, नागदन्तिकासु धौत वस्त्राणि पट्टाम्बराणि च लम्बन्ते, एकस्मिन् शरावे मसीपात्रम्, लेखनी, छुरिका, गैरिकम्, उपनेत्रं चाऽऽयोजितमस्ति। पात्रान्तरे च खादिरं चूर्णम्, आर्द्र-वस्त्र-वेष्टितानि नागवल्लीदलानि, पूगानि, शङ्कुला, देवकुसुमानि, एलाः, जाति-पत्राणि, कर्पूरं च निन्यस्तमस्ति। तन्मध्यत एव च महोपबर्हमेकं पृष्ठत

---

कूटदीपिकायाम्=धातुविशेषदीपिकायाम्। "रीति: स्त्रियामारकूटः" इत्यमरः, दीपिका-दीपस्थापनार्थं निर्मितं वस्तु। "दीयट" इति हिन्दी। आरक्तवेष्टनेषु=ईषद्रक्तबन्धनवस्त्रेषु। "खारुओं का बेठन" इति हिन्दी। पीठिका-अधिष्ठापितानि=उपवेशितानि, "अधिशीङ्स्थासां कर्म" इति पीठिकायाः कर्मत्वम्। शरावे=विस्तृत-पात्रे। "तस्तरी" इति हिन्दी। गैरिकम्, लिखितस्याशुद्धस्य दूरीकरणार्थमुपयुक्तम्। पात्रान्तरे=तथाविधेऽन्यपात्रे। नागवल्लीदलानि=ताम्बूलवल्लीपत्राणि "ताम्बूलवल्ली ताम्बूली नागवल्ली" इत्यमरः। पूगानि=क्रमुकाणि। शङ्कुला=पूगकर्त्री, "सरौता" इति हिन्दी। देवकुसुमानि=लवङ्गानि। एलाः=पृथ्वीकाः, "पृथ्वीका चन्द्रबालैला निष्कुटिर्बहुला" इत्यमरः, जातिपत्राणि=मालतीपत्राणि। कर्पूरम्=घनसारः। महोपबर्हम्=महदुपधानम्। "मसनद" इति हिन्दी। सत्रा-

---

दीपक जल रहा है, कुश और कास के अनेक आसन बिछे हुए हैं, रक्त-वेष्टनों (खारुओं का बेठन) में बहुत-सी पुस्तकें चौकियों पर रखी हुई हैं, खूँटियों पर धोती और दुपट्टे लटक रहे हैं, एक प्याले में दावात, कलम, चाकू, गेरू और चश्मा रखा हुआ है। दूसरे पात्र में कत्था, चूना, गीले कपड़े में लपेटे हुए पान, सुपारी, सरौता, लवंग, इलायची, मालती के पत्ते और कर्पूर रखा है।

उनके बीच में ही एक बड़े मसनद पर पीठ टेके हुए, पैरों को फैलाये

आश्रित्य पादौ प्रसार्य उपविष्ट एको वृद्धः, सम्मुखस्थश्च छात्र एक पादौ संवाहयति, अपरश्च किञ्चित् तालीपत्र-पुस्तकं दीप-समीपे पठति, वृद्धश्च किञ्चिन्निद्रा-मन्थरच्छात्र-प्रश्नानुसारेण मध्ये मध्ये आलस्यमुन्मुच्य, किमप्यर्द्ध विशिथिल-शब्दैरुत्तरयति-इति।

अथैनं पाद-संवाहन-परश्छात्रोऽवलोक्य 'को भवान्' इत्य पृच्छत्। एष च "श्रीमतां समर-विजयिनां महाराष्ट्र राजानां भृत्योऽस्मि" इति मन्दमभ्यधात्। तदवधार्य वृद्धोऽपि नेत्रे विस्फार्य निद्रामन्थरेण स्वरेण "आस्यतामास्यताम्" इति प्रण मन्तमुवाच। सोऽपि प्रणम्य, समुपविश्य, दत्त-निज परिचयः

---

हन करोति संवाहयति = मर्दयति। "संवाहनं मर्दनं स्यात्" इत्यमरः। तालीपत्रपुस्तकम् = तालपत्रपुस्तिकाम्। तदानीं नागरम् इव कागाधिक्य मासीत्। निद्रामन्थरः = निद्रयाऽलसः, निद्रोद्भूतालस्यवान्ति। अर्धविशिथिलशब्दैः=स्वल्पस्रस्ते पदे कियदक्षरविच्छिन्ने।

एनम्=रघुवीरसिंहम्। "निरैक्षिष्ट" क्रियाकर्तृत्वेनोपस्थितस्यावलोकन क्रियाकर्मत्वेन पुनरुपस्थित्याऽन्यादेशतेति द्रष्टव्यम्। एष च मन्दमभ्यधादिति

---

हुए एक वृद्ध बैठा हुआ है, सामने बैठा एक छात्र उसके पैर दबा रहा है और दूसरा किसी ताल्पत्र पर लिखी पुस्तक को दीपक के पास पढ़ रहा है, वृद्ध कुछ-कुछ निद्रा के आलस्य के वशीभूत होकर छात्र के प्रश्न के अनुसार बीच-बीच में आलस्य का त्याग कर टूटे फूटे एवं अस्ताक्षर शब्दों में कुछ उत्तर दे रहा है।

इसके अनन्तर पैर दबाने वाले छात्र ने इसे देखकर 'आप कौन हैं?' यह पूछा। 'मैं समरविजयी महाराष्ट्रराज का सेवक हूँ' उसने धीरे से यह उत्तर दिया। यह सुनकर वृद्ध ने भी आँखों को फैलाकर निद्रामन्थर स्वर से, प्रणाम करते हुए रघुवीर सिंह से 'बैठो, बैठो' यह कहा। रघुवीर सिंह ने प्रणाम कर, बैठकर, अपना परिचय देकर, कुशल

कुशलादि-वार्त्ता आलप्य, क्षणानन्तरं वृद्धादेशानुसारेण करौ सम्पुटीकृत्य न्यवेदयत्—

"भगवन्! प्रणम्य भवन्तं सम्रमवान् महाराष्ट्र-राजः कथयति यत्-साम्प्रतं शास्तिखान-द्वारा पुण्यनगरमपिहस्तितवता दिल्लीश्वरेण सह योद्धुमुपक्रान्तमस्ति, परमल्पीयसी अस्मत्सेना, असहयोगिनः पार्श्वस्थ पृथिवीपतयः, अङ्ग-वङ्ग-कलिङ्गेष्वपि समुद्धूत-ध्वजाः परिपन्थिनः, शैशवादेव यवनवराकैर्महाप्रवृद्धं मम वैरम्, सन्धेश्च कथामात्रमपि न सम्भोभवीति, यद्यप्यल्पेऽपि मामका युद्ध-विद्यासु कुश-

सम्वन्धः। अभ्यधात्=अकथयत्। करौ सम्पुटीकृत्य=हस्तौ संयोज्य। प्राञ्जलिर्भूत्वेति यावत्। नम्रतासूचकमिदम्।

हस्तितवता=स्वायत्तीकृतवता। "हथियाना" इति हिन्दी, पार्श्वस्थ-पृथिवीपतयः=निकटस्थभूमिपालाः, असहयोगिनः=साहाय्याकारिणः, समुद्धूतध्वजाः=समुड्डीनपताकाः। तेष्वाधिपत्यं लब्धमिति भावः। ध्वजोद्धूननं हि विजयोपलक्षणम्। परिपन्थिनः=शत्रवः। सम्भोभवीति=अतिशयेन वारं वारं वा भवति। यङ्लुगन्तम्। तदन्ताद्लत्लन-

आदि की बात-चीत करके, क्षण भर के बाद, वृद्ध की आज्ञानुसार, हाथ जोड़ कर निवेदन किया—

"भगवन्, आपको प्रणाम करके माननीय महाराष्ट्र-राज कहते हैं कि इस समय शाइस्ता खाँ के द्वारा पूना नगर को हस्तगत कर लेने वाले दिल्लीश्वर के साथ हमारा युद्ध छिड़ चुका है। किन्तु हमारी सेना थोड़ी है और पड़ोसी लोग साथ नहीं दे रहे हैं। शत्रुओं ने अंग बंग और कलिंग में भी अपनी विजयपताकायें फहरा दी हैं, बचपन से ही इन यवन नीचों के साथ हमारा वैर बढ़ता आया है और सन्धि की तो कथा मात्र की भी कभी सम्भावना नहीं है। यद्यपि थोड़े होने पर भी हमारे लोग युद्धविद्या में कुशल हैं, फिर भी, बीच-बीच में मन में, 'क्या होने वाला

ज्ञाः सन्ति, तथाऽपि किं भावीति मध्ये मध्ये संशेते हृदयम्, भवांस्तु प्रसिद्धोऽस्मद्देशे दैवज्ञः तद् विचार्य कथ्यतां किं भावि ?" इति।

तदवगत्य, पादावाकुञ्च्य "विजयतां शिवराजः" इत्यभिधाय, ताम्बूल-वाटिकां रचयितुं छात्रमेकमिङ्गितेनाऽऽदिश्य, पृष्ठस्थद्वाराभिमुखं ग्रीवां परिवर्त्य, "वत्से ! सौवर्णि ! वत्से ! सौवर्णि !" इत्याकार्य, "इयमस्मि तात !" इत्यागतां च तां "वत्से ! तासां यूथिकामालिकानामेकां मालां प्रसाद-मोदकं चैकमानय"-इत्यभिधाय, बाढमित्युक्त्वा तया विहितवत्यां च तत्याम्, रघुवीराभिमुखं "गृहाण, भुक्त्वेदं प्रसाद-मधुरान्नं निद्रामनुभव, यादृशं च स्वप्नमवलोकयि-

मिहित प्राक्। संशेते = सन्देहमापद्यते। दैवज्ञः = ज्यौतिषिकः। "दुगुपदशाप्रीकिर. कः"। "दैव दिष्ट भागधेय भाग्य स्त्री नियतिर्विधिः" इत्यमरः।

आकार्य = आहूय। यूथिकामालिकानाम् = मागधीस्रजाम्, प्रसादमोदकम् = भगवदर्पितमिष्टान्नम्। यद्यपि "प्रसादस्तु प्रसन्नता" इत्यमरेण प्रसन्नताभिधायकत्वमेव, तथापि लोकप्रसिद्धया भगवदर्पितत्वार्थकत्वमेवैदृशेषु स्थलेषु। व्यवहारो हि सर्वतो बलीयान् पदार्थनिर्णायक इति ध्येयम्।

है' यह शंका होती है। आप हमारे देश के प्रसिद्ध ज्योतिषी हैं, अतः विचार करके यह बताइये कि क्या होगा ?

यह जान कर, पैरों को सिकोड़ कर, "शिवराज महाराज की जय हो" यह कह कर, पान का बीड़ा बनाने के लिए इशारे से एक छात्र को आदेश देकर, पीछे के द्वार की ओर गर्दन घुमाकर, "पुत्रि सौवर्णि ! पुत्रि सौवर्णि !" यह कर कन्या को पुकार कर, "आई, पिताजी" कह कर उसके आने पर, उससे "पुत्रि ! उन जूही की मालाओं में से एक माला और एक प्रसाद का लड्डू ले आ" ऐसा कहकर, 'अच्छा' यह कह कर उसके वैसा कर लेने पर, रघुवीर की ओर मुख करके "लो इस प्रसाद के मधुर मिष्टान्न को खाकर सो जाओ, जैसा स्वप्न देखना, वैसा मुझे प्रातः बतलाना,

तासि, तथा प्रातरेव मां कथयितासि, व्येति रजनी, तद् गच्छ, शेष्व" इत्युदीर्य समागतां सौवर्णीमिव मोदकमर्पयितु मालां च कण्ठे निक्षेप्तुमिङ्गितवान्।

सा चावलोक्य तमेव पूर्वावलोकितं युवानम्, व्रीडा-भर-मन्थराऽपि ताताज्ञया बलादिव प्रेरिता ग्रीवां नमयन्ती, आत्मनाऽऽत्मन्येव निविशमाना, स्वपादाग्रमेवाऽऽलोकयन्ती, मोदक भाजन-सभाजितं सव्येतर-करं तदग्रे प्रासारयत्। स चाऽऽत्मनो भावं कष्टेन संवृण्वं-स्तद्धस्तादुदतूतुलत्। पुनश्च सा अञ्चलकोण कटि-कच्छ-प्रान्ते

मधुरान्नम् = मोदकम्। व्येति = अतियाति। रजनी = निशीथिनी। शेष्व = स्वपिहि। उदीर्य = उक्त्वा। निक्षेप्तुम् = निधातुम्। इङ्गितवान् = चक्षुरादिचेष्टया बोधितवान्।

व्रीडाभरमन्थरा = लज्जाधिक्यादिगतमान्द्या। ताताज्ञया बलादिव प्रेरिता, तथा चोक्तं महाकविना कालिदासेन "आज्ञा गुरूणां ह्यविचारणीया इति। निविशमाना, "नेर्विशः" इत्यात्मनेपदत्वे शानच्। मोदक-भाजनेन = मिष्टान्नभाण्डेन, सभाजितम् = पूजितम्। सहितमिति वाच्योऽर्थः। सव्येतरकरम् = दक्षिण हस्तम्। आत्मनो भावम्, रतितामापन्नम्। संवृण्वन् = समाच्छादयन्, उदतूतुलत् = उत्थापयामास। अञ्चलकोणम् = वस्त्रदशाम्। कटिकच्छप्रान्ते = कटिकच्छ भागे,

रात बीती जा रही है, तो जाओ, सो जाओ," यह कह कर वृद्ध ने, आई हुई सौवर्णी को ही मोदक देने और माला पहनाने के लिए संकेत किया।

वह उसी पहले देखे गये हुये युवक को देख कर, लज्जा के भार से धीरे धीरे चलती हुई भी पिता की आज्ञा से बलपूर्वक प्रेरित की गई, गर्दन झुकाती हुई, अपने मे ही सिमटती हुई, अपने पैर के अग्रभाग को ही देखती हुई, आगे बढ़ी और उसने लड्डू के पात्र से सुशोभित अपने दाहिने हाथ को उसके आगे बढ़ाया। रघुबीर सिंह ने कष्टपूर्वक अपने भाव को छिपाते हुए उसे उसके हाथ से ले लिया। फिर उसने

आयोज्य, हस्ताभ्यां मालिकां विस्तार्य नत-कन्धरस्य रघुवीरस्य ग्रीवायां चिक्षेप, ईषत्कम्पित-गात्रयष्टिश्च शनैर्यथागतं निववृते।

सैवेयं गौर श्याम सिंहयोरनुजा सौवर्णी, या शैशव एव यवन तनयेनापहृता, यस्याश्च वास्तविकं नाम कोशलेति, स चायं देव शर्म्मा ब्राह्मणः, यो गौरसिंहस्य कुल-पुरोहितः कोशलायाश्च रक्षकः।

ततः प्रणम्य, देवशर्म्मच्छात्रदत्तां वीटिकामादाय प्रतिनिवृत्त, रघुवीरोऽपि तथैव सुप्तः। को जानाति कोशलारघुवीरयोः काभि भावनाभिरद्यतनी रजनी व्यत्येतीति।

---

आयोज्य = निवेश्य। विस्तार्य = प्रसार्य। ईषत् = अल्पम्, कम्पिता = वेपमाना, गात्रयष्टिः = शरीर, यस्याः सा। सात्त्विकभावोदयप्रदर्शनमिदम्। यथाऽऽगतम्, आगतम् = आगति, तदनतिक्रम्य यथागतम्। क्रियाविशेषणम्। यथा समागता तथैव निवृत्तेति यावत्।

सैवेयमित्यादि-रक्षक—इत्यन्तं कविवाक्यं सौवर्णीपरिचयदानपरम्। अनुजा = अवरजा, शैशवे = बाल्ये।

को जानाति, कः = ब्रह्मा, स एव जानाति, नान्यः कश्चिदसर्वज्ञ इति तत्त्वम्। काकुर्वा तथात्वे न कोऽपि जानातीत्यर्थः। आत्मनैव विज्ञातत्वप्रत्वेन नान्यो ज्ञातेति सूक्ष्मवेदिन। भावनाभिः = विचारैः।

---

आँचल के छोर को कमर में खोंसकर दोनों हाथों से माला को फैला कर, सिर झुकाये हुए रघुवीर के गले में डाल दिया और कुछ काँपते हुए शरीर से धीरे धीरे, जैसे आई थी वैसे ही चली गई।

यही गौरसिंह और श्यामसिंह की छोटी बहन सौवर्णी हैं, जिसे बचपन में ही एक यवन युवक हर ले गया था और जिसका वास्तविक नाम कोशला है और यही वह देवशर्मा ब्राह्मण हैं, जो गौरसिंह के कुलपुरोहित और कोशला के रक्षक हैं।

उसके बाद प्रणाम कर, देवशर्मा के छात्र द्वारा दिये गये पान के बीड़े को लेकर, लौटकर, रघुवीर भी वैसे ही सो रहा। कौन जानता है कि कोशला और रघुवीरसिंह की आज की रात किन भावनाओं में बीत रही है।

अथोपस्येवोत्थाय नित्यकृत्यानि निर्वर्त्य, यावद्देवशर्म्मणः समीपमुपतिष्ठासते ; तावद्दौर्गिक-दूतेनाऽऽकारितो दुर्गाध्यक्षमासाद्य, तद्दत्तं पत्रादिकं वाचनिक-सन्देशं चाऽऽदाय, पुण्यनगरमधिवसतः शास्तिखानस्य प्रकृत वृत्तान्तं तत्प्रश्नानुसारं व्याहृत्य, निवृत्य, देवशर्म्माणं प्रणम्य, सङ्क्षिप्य स्व-स्वप्न-वृत्तान्तमकथयत्, यद्—

"यथा मया प्रभुणा च खड्गः समुत्तोलितः, शास्तिखानश्च दृष्ट्वैवैतत्पलायितः" इति।

स चाङ्गुलिपर्वसु किमपि गणयित्वेव प्रोवाच-यद् 'यवनैः सह विजयः, आर्यैश्च पराजयः !"

पुनश्च तं प्रणम्य, जिगमिषन्तमुवाच, यत्—

"तावद् बहिरेवोद्याने पर्य्यट, यावद् हनूमत्प्रसाद-सिन्दूरं प्रेषयामि, यत्कृततिलको दुर्द्धर्षो भवति शत्रूणाम्" इति।

---

उपसि=प्रातः। निर्वर्त्य=समाप्य। उपतिष्ठासते=उपस्थातुमिच्छति। दौर्गिकदूतेन=दुर्गाध्यक्षभृत्येन। वाचनिकसंदेशम्=वाचिकम्, "सन्देशवाग् वाचिकं स्यात्" इत्यमरः। अङ्गुलिपर्वसु=करजावयवेषु, पर्व=अङ्गुलिग्रन्थिः, 'ग्रन्थिर्ना पर्वपरुषी" इत्यमरः। "पोर" इति हिन्दी।

---

तत्पश्चात् सवेरे ही उठकर, नित्यकृत्य से निवृत्त होकर, रघुवीर, देवशर्मा के समीप जाना ही चाहता था कि दुर्ग के दूत के द्वारा बुलाये जाने पर दुर्गाध्यक्ष से मिल कर उनके द्वारा दिये गये मौखिक सन्देश और पत्रादि को लेकर, पूना में स्थित शाइस्ता खाँ का समाचार दुर्गाध्यक्ष के प्रश्नों के अनुसार बता कर, लौटकर, देवशर्मा को प्रणाम कर उसने संक्षेप में अपने स्वप्न का वृत्तान्त कहा कि "ज्यों ही मैंने और मेरे स्वामी ने खड्ग उठाया, शाइस्ता खाँ उसे देखते ही भाग गया।"

उँगली के पोरों पर कुछ गिन कर वह बोला, "यवनों से युद्ध हो तो विजय होगी, आर्यों से हो तो पराजय।" फिर प्रणाम करके जाने के इच्छुक रघुवीर सिंह से कहा, "तब तक बाहर उद्यान में ही टहलो, अभी हनुमानजी के प्रसाद का सिन्दूर भेजता हूँ, जिसका तिलक लगा लेने पर मनुष्य शत्रुओं के लिए दुर्द्धर्ष हो जाता है।"

स च तथेत्युक्त्वा बहिरागत्य पर्य्यटन् पूर्वेद्युः सौवर्ण्या सनाथितां वेदिकां समायातः, स्मृतवांश्च पूर्वदिन-वृत्तान्तम्, अवालोकयच्च सौवर्ण्यध्युषित-चरं पाषाण-मञ्चम्। तावन्निपुणं निरीक्ष्य दृष्टवान्-यदेका एकयष्टिका मौक्तिकमाला तत्र पतिताऽस्तीति, ताञ्चोत्थाप्य तस्या एवेयमिति निश्चित्य, तस्यै समर्पयामीति विचार्य इतस्ततश्चक्षुर्निचिक्षेप।

अथ व्यलोकयद्-यद् वाटिकायामेव कोशलाऽपि कदलीदल-पुटकमेकं वामकरे संस्थाप्य, दक्षिण-कर-पल्लवेन कुसुमपतङ्गान् उद्धूय कुसुमान्यवचिनोति।

ततश्च क्षणं विचार-भारैर्निरुद्ध-गतिरपि शङ्कातङ्कमपास्य, मालां हस्ते आदाय शनैस्तदभिमुखमेव प्रतस्थे। सा च तस्मिन्नवि-

---

सनाथिताम् = अधिष्ठिताम्। सौवर्ण्या, अध्युषितचरम् = पूर्वमुपविष्टम्। पाषाणमञ्चम् = प्रस्तरवेदिकाम्। एकयष्टिका = एकावली, मालाविशेष 'एकावल्येकयष्टिका' इत्यमरः। निचिक्षेप = निदधे। कुसुमपतङ्गान् = पुष्पभ्रमरिकाः। "तितली" इति हिन्दी। निरुद्धगतिः-अवरुद्धगमनः। शङ्काऽऽतङ्कम्-सदेहं भयञ्च। प्रत्यर्पयितुम्-

---

रघुवीरसिंह 'बहुत अच्छा' कह कर, बाहर आकर, घूमता हुआ, पिछले दिन सौवर्णी से सनाथ की गई वेदी तक आया, पिछले दिन के वृत्तान्त को स्मरण किया और जिस पत्थर की चट्टान प सौवर्णी बैठी थी उसके दर्शन किये। ध्यान से देखने पर देखा कि मोतियों की एक एकल्डी माला वहाँ गिरी पड़ी है, उसे उठाकर, यह उसी की है यह निश्चय करके, 'इसे उसी को दे दूँ' यह सोचकर इधर-उधर दृष्टिविक्षेप किया।

उसके बाद उसने देखा कि कोशला भी बगीचे में ही बाएँ हाथ में केले के पत्ते का एक दोना लिए, दाहिने हाथ से तितलियों को उड़ाकर, फूल चुन रही है।

विचार के भार से क्षण भर रघुवीर की गति रुद्ध हो गई, पर सन्देह के आतङ्क को दूर कर, माला को हाथ में लेकर वह धीरे-धीरे उसी की ओर

समीपमायाते पादाहतिमाकर्ण्य अवालुलोकत् । तस्याञ्चातिचकितायामिव स्तब्धायामिव च रघुवीरोऽवादीत्—

"भगवति ! भवत्या इयं मालिका तत्र पतिता, मया लब्धेति प्रत्यर्पयितुमायातोऽस्मि–इति, अनुमन्यसे चेदेना यथास्थानं निवेशयामि"

सा च व्रीडया कुलाङ्गनाङ्गीकृत-महाव्रतेन च स्तब्धवाग् न किञ्चन प्रावोचत् । रघुवीरश्च वाचंयमतामप्यङ्गीकारभङ्गीमङ्गीकृत्य तदन्तिकमागत्य, सौवर्णीचित्रं मानस-भित्तिकायामालिख्य नक्षत्रमालां तत्कण्ठे प्राक्षिपत्, पवित्रतमानि स्फुटतम-यौवनोद्भेद

---

प्रतिदातुम् । त्वया ह्यो मह्यमर्पिता माला, मया चाद्यतुभ्यमर्प्यत इति विचार्य प्रत्यर्पणाभिधानम् । अनुमन्यसे=स्वीकरोषि । कुलाङ्गनाभिः=सदन्वयजन्मीभिः, अङ्गीकृतेन=स्वीकृतेन, महाव्रतेन=ब्रह्मचर्यरूपेण । गुह्यभाषणस्यापि ब्रह्मचर्यविघातकतेति मौनावलम्बनम् । वाच यच्छतीति तद्भावो वाचंयमता=तूष्णीम्भवनम् । अङ्गीकारभङ्गीम्=स्वीकारप्रकारम् । "मौनं स्वीकारलक्षणम्" इत्युक्तत्वात् । नक्षत्रमालाम् = सप्तविंशतिमौक्तिकमयीं पूर्वोक्तामेकावलीम् । स्फुटतमस्य = नितान्तप्रकटस्य, यौवनस्य =

---

चला । रघुवीर सिंह के बहुत समीप आ जाने पर उसकी पदचाप सुनकर, कोशला ने उसे देखा । कोशला के चकित और स्तब्ध-सी हो जाने पर रघुवीरसिंह ने कहा—

"देवि ! आपकी यह माला वहाँ गिर गई थी, मैंने इसे पाया है, अब इसे लौटाने आया हूँ । यदि आपकी अनुमति हो तो इसे यथास्थान रख दूँ ।"

लज्जा और कुलाङ्गनाओं के महाव्रत से मौन कोशला कुछ न बोल सकी । रघुवीरसिंह ने उसके मौन को भी स्वीकृति का ही सूचक समझ कर, उसके पास आकर, मन की दीवार पर सौवर्णी का चित्र बना कर, उस मुक्तामाला को उसके गले में डाल दिया, पर स्फुट यौवन के स्पष्ट

लक्ष्म-रहितानि च तदङ्गानि नास्प्राक्षीत् ।

ततस्तस्यां मौनेनैवैकतः प्रयातायाम्, स्वयं पुनर्मन्दिरद्वारमागत्य देवशर्म्मणोऽन्यतमच्छात्रेणाऽऽनीतं सिन्दूरमादाय पुनरश्वमारुह्य मारुत-नन्दनं संस्मृत्य तोरणदुर्गात् सिंहदुर्गं प्रतस्थे ।

इति चतुर्थो निश्वासः

॥ इति प्रथमो विरामः समाप्तः ॥

---

लावण्यस्य, उद्भेदस्य=आविर्भावस्य, लक्ष्मभिः=चिह्नैः, शून्यानि, न अस्प्राक्षीत् = स्पृष्टवान् । मारुतनन्दनम् = वायुसुतम् ।

प्राप्त-शास्त्र-प्रयाचार्य-पदवीकेन धीमता ।
भगवत्या गर्भजेन विद्-भागवत-सूनुना ॥
विद्वत्‌निराठि मिश्र्येण रामजीशर्मणा मया ।
शिवदत्तपादतन्यावशास्त्राबभासिना ॥
पाण्डेयशास्त्रीत्यपराभिधेयेन सदक्षरा ।
शिराजस्य विजये वैजयन्ती विकाशिता ॥

इति श्रीशिवराजविजयवैजयन्त्यां चतुर्थनिश्वासविवरणम् ।

आदिमविरामविवरणं समाप्तम् ।

---

चिह्नों से रहित उसके पवित्र अंगों का स्पर्श नहीं किया ।

तदनन्तर, कोशला के मौनपूर्वक ही दूसरी ओर चले जाने पर, स्वयं पुनः मन्दिर के द्वार पर आकर, देवशर्मा के प्रिय छात्र द्वारा लाये गये सिन्दूर को लेकर, पुनः घोड़े पर सवार होकर, हनुमानजी का स्मरण कर, तोरण दुर्ग से सिंह दुर्ग की ओर चल पड़ा ।

शिवराजविजय का चतुर्थ निश्वास समाप्त ।

शिवराजविजय के प्रथम विराम का हिन्दी अनुवाद समाप्त हुआ ।

॥ श्री ॥

महाकविश्रीमदम्बिकादत्तव्यासविरचित

# शिवराजविजयः

## द्वितीयो विरामः

'वयं नो ते विप्राः प्रतिदिवसमासाद्य कृपणान्,
धनं ये याचन्ते प्रतिगणित-नक्षत्र तिथयः।"

—जगन्नाथपण्डितराजः

---

### शिवराज-विजय-वैजयन्ती

वागीश्वर्यै नमः

मनोन्नमदमन्येन मदमादधानो भव
स्वयं भवति विष्टरो विनत एव यस्याः कृते।
समर्चिन-पदद्वया त्रिदश मण्डली-मण्डनै
स्तमालदल-भासुरा भवतु काऽपि बुद्धिप्रदा॥

पञ्चमे निश्वासे हिन्दु धर्म-ध्वंस विध्वंसन पटुना शिववीरेण साकं महाकवेर्भूषणस्य सम्बन्धं विवर्णयिषुरुपक्षिपति पण्डितराजोक्तिम्-वयं नो ते विप्रा इति। यद्यपि तदात्वे बहवो ब्राह्मणब्रुवा धर्माधर्म-

---

### शिवराज-विजय का हिन्दी अनुवाद

ज्ञानप्रतीकशुभपुस्तकवामहस्ता
वीणागुणक्वणनरञ्जितसर्वलोका।
मन्मानसाच्छमुकुरार्पितविग्रहा सा
देवी स्मृता स्पृशतु मां स्वकृपाकटाक्षैः॥

"हम तिथि-नक्षत्रादि गिनने वाले उन ब्राह्मणों में नहीं हैं जो प्रतिदिन कञ्जूसों के पास जाकर उनसे धन माँगते हैं।"

—पण्डितराज जगन्नाथ

"हरेरस्य द्वारे शिव ! शिव ! शिवानां कलकलः"
—जगन्नाथपण्डितराजः

इतस्तु दृश्यतां किं भवति पुण्यनगर इति। ज्ञाल्म-यवनाखेट-व्यसनिनः शिववीरस्य शनैः शनैर्दिल्लीश्वरेणापि सह वैरं ववृधे। दिल्लीश्वरस्तु शास्तिखान-नामानं कञ्चिद् यवन-चौरं प्रेष्य पुण्य-नगरं तद्धस्तादाचिच्छिदे। सम्प्रति हि पुण्यनगरे शिववीराध्युषितचरे महाप्रासादे सपरिवारः शास्तिखानः प्रतिवसति। आसन्ने

विवेक विधुरास्तात्कालिकावस्थितिमात्रदृष्टयोऽप्यभवन्, तथापि तेषामेव ब्राह्मणानां विशिष्टा सख्याऽऽसीद् ये जीविका-निर्वाह प्रकारेऽदृष्टदृष्टयस्त्यागिनो धर्म-रक्षण-मान-व्रता इति सूचयति पद्यखण्डेनानेन। वक्ता चास्य दिल्ली वल्लभ-पाणि पल्लवतले नवीनस्य वयसो यापक इति परम वैशिष्ट्यम्। अपरा चात्र कथाऽऽगमिष्यति शिववीरहस्ताद् "शास्तिखान-" द्वारा दिल्लीवल्लभेन स्वायत्तीकृतस्य पुण्यनगरस्य, तत्र सिंहपराक्रमस्य शिववीरस्य द्वारि शृगाल-खद्वृणात्मातिरिच्यते यवनहतस्संवरणमिति समुपक्षिपति द्वितीयेन तदीयेनैव पद्यखण्डेन-हरेरस्येति। शिवानाम् = शृगाल-शृगालीनाम्। "पुमान्स्त्रिया"त्येकशेष। जाल्मानाम् = असमीक्ष्यकारिणाम्, यवनानाम्, आखेटस्य व्यसनिनः। ववृधे = एधामास। तद्धस्तात् = शिववीरकरात्। आचिच्छिदे=प्रसह्य जग्राह। स्व यत्तीचकारेति यावत्। "छीन लिये" इति हिन्दी। "छिदिर् द्वैधीकरण" इत्यस्य लिटि रूपम्। अध्युषित भूतपूर्वमध्युषितचरम्, "भूतपूर्वे चरडि"ति चरट्।

"शिव ! शिव ! आज सिंह के दरवाजे पर गीदड़ कोलाहल कर रहे हैं।"
—पण्डितराज जगन्नाथ

इधर देखिये पूना नगर में क्या हो रहा है। जालिम यवनों का शिकार खेलने के शौकीन महाराज शिवाजी का, धीरे-धीरे दिल्ली सम्राट् औरंगजेब के साथ भी वैर बढ़ गया। औरंगजेब ने शाइस्ता खाँ नामक किसी यवन चोर को भेजकर शिवाजी के हाथ से पूना नगर छीन लिया। इस समय पूना नगर के उस राजमहल में जहाँ पहले महाराज शिवाजी रहा करते थे, सपरिवार शाइस्ता खाँ रह रहा है। समीप में ही स्थित

सिंहदुर्गे च ससैनः शिववीरो विराजते। परस्परं च च्छलाशङ्का युद्धाशङ्काश्च जरीजृम्भन्ते।

अथैकदा रजन्यां सिंहदुर्गाविदूर एव सुकोमल-शादायां कलित-प्रसादायां केकि-केका-विहित-प्रहरि-प्रातिनिध्यायां भुवि, निष्कृप-कृपाण-पाणिः, कञ्चुकाच्छादित-कठिन-कवचः, कलित-सैनिक-भट-वेषः श्रीशिववीरो गुप्तवेषेण परितः पर्यटन्, दुग्ध-धारयेव

शिववीरेणाध्युषितचरम् तस्मिन्निति निग्रहः। छलाशङ्काः = चौर्यानङ्काः। जरीजृम्भन्ते = मुखं व्यादायेव वृद्धिमतिशयेन गच्छन्ति। "जृम्भी गात्रविनामे" इत्यस्य यङ्लुकि रूपम्। सुकोमलाः शादाः = हरिततृणानि यस्या तस्याम्। "शादो जम्बालशष्पयोरि"त्यमरः। कलितः = सम्पन्नः, प्रसादः = नैर्मल्यं यया तस्याम्। केकिकेकाभिः = मयूरवाणीभिः, "केका वाणी मयूरस्य" त्यमरः। विहितम् = सम्पादितम्, प्रहरिणाम = यामिकानाम्, प्रातिनिध्यम् = प्रतिनिधिकर्म यस्या तस्याम्। 'गुणवचन-ब्राह्मणादिभ्यः कर्मणीति" ष्यत्र्। भुवो विशेषणानि त्रीणि। शिववीरं विशिनष्टि—निष्कृपः = कृपाशून्यः, कृपाणः पाणौ यस्य सः। कञ्चुकेन = चोलकेन, आच्छादितः = प्रावृतः, कठिनः = दृढः, कवचः = तनुत्रं, यस्य सः। कलितः सैनिकभटस्य वेषः=नेपथ्यं येन सः। "सेना-रक्षास्तु सैनिका" इत्यमरः, "सेनाया समवेता ये सैन्यास्ते सैनिकाश्च त" इति

सिंहगढ़ में अपनी सेना के साथ महाराज शिवाजी रह रहे हैं। शाइस्ता खाँ और शिवाजी में परस्पर छल और युद्ध की आशङ्कायें बढ़ती जा रही हैं।

एक दिन रात में सिंहगढ़ से थोड़ी ही दूर पर सुकोमल हरी-हरी घास वाली निर्मल भूमि पर—जहाँ मयूर मानों बीच-बीच में बोल कर पहरा दे रहे थे—हाथ में निर्दय कृपाण लिये, कञ्चुक के नीचे लोहकवच पहने, एक सैनिक के छद्मवेष में घूमते हुए महाराज शिवाजी, दूध की धारा

क्षालितैर्ज्योत्स्नया प्रकाशितैः पथिभिरासन्नात् शिवमन्दिरादारादा जगाम। तत्र च द्वारि रेणु-रूषित-रोम-कुहरम्, शफोत्फालित-मृत्स्ना-स्नातम्, त्वरितगति-श्वास-प्रश्वास-सहचरित-हिणत्कार-सूचित-क्लमम्, उत्थायोत्थाय पृष्ठमुत्कम्प्य, ग्रीवामुद्धूय, पौनः पुन्येन पतित्वा, भुवि विलुण्ठन्तं कञ्चनाश्वमद्राक्षीत्। 'कस्यायम्? कुतोऽयम्?' इति मनसि विचिन्वंश्च समीपमागत्य, चुचुत्कारैरश्वं सान्त्वयन्तं

चामरः, "रक्षति" इति ठक्। जोत्स्नया = कौमुद्या। प्रकाशितैः = प्रद्योतितैः। उत्प्रेक्षते–दुग्धधारया=पयःप्रवाहेण। क्षालितैरिव = धौतैरिव। "आराद्दूरसमीपयो"रित्यमरः, तद्योगे "अन्यारादि"ति पञ्चमी। तत्र च द्वारि कञ्चनाश्वमद्राक्षीदिति सम्बन्धः। अश्व विशिनष्टि– रेणुभिः = धूलिभिः, रूषितानि = छुरितानि, रोम्णां कुहराणि=छिद्राणि, यस्य तम्। शफोत्फालितया = खुरोद्धूलितया, मृत्स्नया = प्रशस्तया मृदा, स्नातम् = अनुलिप्तम्। त्वरितगतीनाम् = शीघ्रगमनानाम्, श्वासप्रश्वासानाम्, सहचरितेन = सहवासिना, हिणत्कारेण = हेषारवेण, सूचितः = प्रकटीकृतः, क्लमः = दूरमार्गानुधावनोत्थः श्रमो येन तम्। अश्वाना दीर्घश्वासप्रश्वासौ हेषासहितावेव भवतः। उत्थायेत्यादि भुवि विलुण्ठन्तमित्यन्त स्वभावोक्तिः। उत्कम्प्य=कम्पयित्वा। विवर्णवदनम् =

से धुले हुए से लगने वाले, चन्द्रमा के प्रकाश से प्रकाशित मार्गों से समीपवर्ती शिवमन्दिर के पास पहुँचे। मन्दिर के द्वार पर उन्होंने धूल-धूसरित रोमकूप वाले किसी घोड़े को देखा, जिसका शरीर खुरों से उछलने वाली मिट्टी से लथपथ था। उसकी श्वास-प्रश्वास की गति तेज थी, साथ-ही-साथ वह हिनहिनाता भी था, जिससे प्रकट होता था कि वह थका है। वह उठता था, पीठ हिलाता था, गर्दन उठाता था और पुनः पृथ्वी पर गिर कर लोटने लगता था। उसे देख कर मन ही मन यह सोचते हुए कि "यह घोड़ा किसका है", "कहाँ से आया है" शिवाजी ने समीप आकर, चुमकार कर उस घोड़े को सान्त्वना दे रहे और उसके आगे

हरित-तृण-भारं च पुरतः प्रक्षिपन्तं कमपि शूद्र-युवकमप्यवालोकयन्। तं च विवर्णवदनम् आजानु-धूलि-धूसरित-चरण-युगलम्, मन्थरितशरीरम्, स्वेद-क्लिन्नञ्चावलोक्य, "दूरतः कश्चन समायातोऽस्ति, तद्भृत्य एवायम्" इति निश्चित्य शनैरप्राक्षीत्-'कियान् पन्थाः?' इति। स तु स्वकार्य-संलग्नोऽन्यमनस्क इव, "समायातः कोऽपि" इत्युदतरत्। पुनरपि 'कुत आगता यूयम्?" इति पृच्छति शिववीरे च, 'किमिति निरर्थं प्रश्नानुद्भावयसि, आलपितुमिच्छसि चेद् घटिका-युगलमनिवाह्य समायास्यसि, यदा पूरित-जठर-पिटकः, ताम्रकूट-धूमपानैर्गलनलं कवोष्णयन्, त्वया सह वार्त्ताभिरदूष्य-परि-

---

निष्प्रभाननम्। आजानु = जानुपर्यन्तम्, धूल्या = रजसा, धूसरितम् = मलिनम्, चरणयुगलं यस्य तत्। मन्थरितम् = स्थगितम्, शरीरम् = देहो यस्य तत्। स्वेदेन = घर्मजलेन, क्लिन्नम् = आर्द्रम्। शूद्रयुवक-विशेषणानीमानि। अन्यमनस्क इव = खिन्न इव। प्रश्ने प्रश्नकर्तरि च ध्यानमददतेति यावत्। निरर्थम् = प्रयोजनरहितम्। पूरितः = भरितः, जठरमेव पिटकः = मञ्जूषा येन तादृशः। 'पिटकः पेटकः पेटा मञ्जूषे' त्यमरः। गलनलम् = कण्ठरन्ध्रम्, कवोष्णयन् = ईषदुष्णं कुर्वन्।

---

हरी घास डाल रहे एक शूद्र युवक को भी देखा। उस शूद्र युवक का उतरा हुआ मुँह, घुटनों तक धूलधूसरित पैर और थका तथा पसीने से लथपथ शरीर देख कर महाराज शिवाजी ने यह अनुमान कर कि "कोई अश्वारोही दूर से आया है और यह उसका नौकर है" उससे पूछा "यह थोड़ा कितना है?" अपने काम में लगे हुए उसने अन्यमनस्कतापूर्वक उत्तर दिया 'कोई आया है।" पुनः महाराज शिवाजी के यह पूछने पर कि "तुम लोग कहाँ से आये हो?" वह बोला, "क्यों बेकार के प्रश्न पूछ रहे हो। यदि बातचीत करना चाहते हो तो दो घड़ी बाद आना; तब अपना पेट पिटारा भर कर, तम्बाकू पीना (अपनी नाड़ची का कुछ गर्म करना) हुआ तुम्हारे साथ बातचीत कर के गले की थकावट दूर

श्रममल्पयिष्यामि।" तदाकर्ण्यान्तर्विहसन्निव शिववीरः "तथा करिष्यामः, किन्तु कथय तावत्, कुत आगता यूयम्?"—इति पुनरप्राक्षीत्। स तु घोटके दत्तदृष्टिरेव सकोपमवादीत्—"कुत आगता यूयम्? कुत आगता यूयमिति कुतःकारैः स्फोटितौ मे कर्णौ, वयं दिल्लीत आगताः, दिल्लीतो दिल्लीतो दिल्लीतः, कथय किं गजं ददासि घोटकं वा?" तदाकर्ण्य, शिववीरस्तत्प्रकृतिं परिज्ञाय, शनैः परिसृत्य, मन्दिरस्य पश्चिमदेशे पर्य्यटितुमारेभे।

'कोऽयं, कुतोऽयं, चरो वा संदेशहरो वा, कपटपथिको वा, अस्मत्पक्षपाती वा, शत्रुपदातिर्वा, कोऽप्युभयपक्षोदासीनो वेति सद्य एव विज्ञेयम्" इति विचारयन्, मन्दिर-पाश्चात्य प्राचीर-गवाक्षादायान्तं कञ्चिदस्पष्टालाप-ध्वनिमश्रौषीत्। क्षणं विरम्य च, गवाक्ष-समीपमा-

मन्दिरस्य=देवालयस्य, पाश्चात्यः=पश्चाद् भवः, यः प्राचीरगवाक्षः=प्रान्ततोवृति वातायनम्, तस्मात् "प्राचीरं प्रान्ततो वृतिः" इत्यमरः। अस्पष्ट० = अव्यक्तः यः, यथा कथंचिदेवमेवमिति निश्चितः आलापस्य =

करूँगा।" यह सुन कर मन-ही-मन हँसते हुए शिवाजी ने पुनः पूछा "अच्छा, ऐसा ही करेंगे, पर तब तक यह तो बताओ कि तुम लोग आ कहाँ से रहे हो?" वह घोड़े की ही ओर देखता हुआ झुँझला कर बोला "तुम लोग कहाँ से आये हो, तुम लोग कहाँ से आये हो, 'कहाँ कहाँ से तो तुम मेरे कान फोड़े डाल रहे हो, हम दिल्ली से आये हैं दिल्ली से, दिल्ली से, दिल्ली से, कहो, हाथी देते हो कि घोड़ा!" यह सुन कर शिवाजी उसका स्वभाव समझ कर, धीरे से लौट कर, मन्दिर के पश्चिम की ओर टहलने लगे।

"यह कौन है, कहाँ से आया है, गुप्तचर है या दूत, छद्मवेषी पथिक है या हमारे ही पक्ष का कोई व्यक्ति, शत्रुसेना का कोई सैनिक है या दोनों पक्षों से उदासीन कोई तटस्थ व्यक्ति, यह शीघ्र ही जानना चाहिये" यह विचार करते हुए शिवाजी ने मन्दिर की पश्चिम ओर की चहारदीवारी की खिड़की से आती हुई फुसफुसाहट (बातचीत की अस्पष्ट और मन्द ध्वनि) सुनी। क्षण भर रुक कर, खिड़की के पास आकर, शिवाजी ने, ध्वनि-

गुणग्रहणासमर्थान्, मिथ्या-मोद-रतान्, वाराङ्गना-व्रात-चरण-पाताघात-सहान्, मद्य-कीटान्, द्यूतानन्यभक्तान्, नृपम्मन्यान् स्वप्नेऽपि समुपास्महे। दिल्लीश्वर पद-विडम्बनमपि चाहं तादृशेष्वेवान्यतममवगत्य क्षणेनैव तत्सम्बन्ध-सूत्रं त्रोटयित्वा रसिकान्तरं कमपि वीरमन्विष्यन् दक्षिणां दिशं प्रस्थितोऽस्मि। पथि चामेर-देशाधीशेन बहुशः प्रार्थ्यमानोऽपि स तस्यैव दिल्ली-वलय-कलङ्कस्य लालाटिक इत्यवगत्य, गिरमीर-वीत्ताश्च श्रावं श्रावं कर्ण-

---

फनल कल्पनयैव समुपस्थापिते, रतान् = सक्तान्। वाराङ्गनाव्रातस्य = वेश्यानिकरस्य, चरणपाताघातम् = अङ्घ्रिनिपातताडनम्, सहन्ते च तान्। मद्यकीटान् = आसवभृङ्गान्। अतिमात्रं सुरापायिन इति यावत्। आत्मानं नृपं मन्यन्त इति नृपम्मन्यास्तान्। स्वप्नेऽपि = जागदवस्थायामस्तु नत्वेव का, निद्रायामपि नेदृशान् सेवामहे। रसिकान्तरम् = भिन्नं रसिकम्। न हि कवितानिवेदनमरसिकेषु युज्यते। तथा च प्राक्तनं पद्यम्—

"इतरपापफलानि निजेच्छया वितर तानि सह चतुरानन!।
अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख॥"

आमेरदेशाधीशेन = जयपुराधीश्वरेण। अद्यतनं जयपुरराज्यं तदानीम् "आमेर" इति ख्यातमासीत्। "अम्बर" इत्यपि व्यवहारस्तत्र। लालाटिकः = भालदर्शिसेवकतुल्यः। यथा कार्याकार्ये कुरुते प्रभुभालावलोक

---

वाले, काल्पनिक आनन्द में ही रमण करने वाले, वेश्याओं के पादप्रहार को सहनेवाले, मदिराकीट और जुए के अनन्य भक्त हैं तथा अपने को राजा समझते हैं। मैं दिल्लीश्वर पद की विडम्बना करने वाले औरंगजेब को भी उक्त प्रकार के नृपाभिमानियों में से ही एक समझकर, तत्क्षण उससे सम्बन्ध सूत्र तोड़ कर किसी अन्य वीर रसिक को खोजता हुआ दक्षिण दिशा की ओर चल पड़ा। रास्ते में आमेर (आधुनिक जयपुर) के राजा ने बार-बार प्रार्थना की, पर उसे दिल्ली साम्राज्य के कलङ्क औरंगजेब का लालाटिक (भाग्यदर्शी और असमर्थ सेवक) जानकर

योराकृष्ट इव इतः समायातोऽस्मि, द्रक्ष्यामि किं भावि ?"—

—इति वक्तारं कमपि कविं त्यक्त-दिल्लीश्वरद्वारं निजं दिदृक्षुमत्राऽऽगतमूरीकृत्य, पुनः परिक्रम्य, द्वार-मार्गेण मन्दिरं प्रविश्य, शिवं प्रणम्य, घण्टामाहत्य, बिल्व-दलमुत्थाप्य, नेत्रयोः संस्पृश्य शिखायां संस्थाप्य, मृत्तिका-शरावस्थं भस्मालिके विलिप्य, प्रदक्षिणच्छलेन पान्थाध्युषित प्रदेशमागत्य, तेनाऽऽलपन्तं शिवमन्दिराध्यक्षं प्रणम्य, बद्धाञ्जलिरागन्तुकमपि—'कुतः श्रीमान् ? कः श्रीमान् ?"—इति सादरं समपृच्छत्।

---

मात्र निरता भवन्ति कुत्सिता भूत्वा एवमयमपि दिल्लीकलङ्कस्य क्रोधप्रज्वालनकारणात् केवल तदीयभाल समयलोकयति, न स्वतन्त्रतया किमपि विधातु शक्नोति। ह्राऽ दुर्वारः कश्चो वञ्चलेशादितो मानसिंहदुरन्वयमनुगा जयपुरीयाणां इत्यादरत्यामलम्।

निजं दिदृक्षुम् = शिववीरदर्शनाभिलाषिणम्। "न लोकाव्ययनिष्ठाखलर्थतृनामि" ति षष्ठीनिषेधः। शिवम् = शङ्करम्। आहत्य = ताडयित्वा। वादयित्वेति यावत्। भस्म = भसितम्। अलिके = ललाटे। "ललाटमलिकं गोधिरि" त्यमरः। आगन्तुकम् = प्राघुणिकम्।

---

महाराज शिवाजी का यश सुनकर, उससे आकृष्ट होकर ही इधर आया हूँ, देखूँ क्या होना है।' ऐसा कहने वाले किसी व्यक्ति को, दिल्लीश्वर औरंगजेब का दरबार छोड़कर, अपने ( शिवाजी ) को देखने के लिये यहाँ आया हुआ कोई कवि समझ कर, पुनः घूमकर, दरवाजे के रास्ते से मन्दिर में घुसकर, शिवमूर्ति को प्रणाम कर, घण्टा बजा कर, बिल्वपत्र उठा कर आँखों से लगाकर, शिखा में बाँध कर, मिट्टी के सकोरे में रखी भस्म को ललाट में लगाकर, प्रदक्षिणा के बहाने उस स्थल पर—जहाँ वह पथिक था—आकर, उस पथिक के साथ बातचीत करते हुए शिव मन्दिर के अध्यक्ष को प्रणाम कर, हाथ जोड़कर, आगन्तुक से भी सादर पूछा, "आप कहाँ से आये हैं और कौन हैं।'

मन्दिराध्यक्षस्तु स्वरेण आकृत्या च तं परिचिन्वन्नपि तन्नियमं संस्मृत्य न तथाऽचेष्टत; यथा स विज्ञातः स्यादपरैः ।

शिववीरस्तु तेन सह चिरमालप्य, तस्य वृत्तान्तमवस्थां प्रकृतिं चावगत्य, चिराय श्रुतचरं 'भूषण'-कविरित्यभिधानं चोररीकृत्य "श्वो द्रष्टा भवान् शिवराजम्" इत्यभिधाय न्यवर्तिष्ट ।

निवर्तमानश्च तेनापि "को भवान्?" इति पृष्टः "एतद्देशीयः कोऽपि वीरोऽस्मि" इत्युदतीतरत् ।

प्रातरेव च नित्य-नियमान्निर्वर्त्य स्वेष्ट-जन-सहितः संभासंस्थ एव स्वभृत्येन भूषण-कविमाकारयत् ।

---

परिचिन्वन् = शिववीरत्वेन जानन् ।

प्रकृतिम् = स्वभावम् । अवगत्य = बुद्ध्वा । उररीकृत्य = स्वीकृत्य, ज्ञात्वेति यावत् । न्यवर्तिष्ट = निवृत्तोऽभूत् । गतवानित्यर्थः । वीरः = राजभटः । "सिपाही" इति हिन्दी । उदतीतरत् = उत्तरं दत्तवान् ।

---

मन्दिर के अध्यक्ष ने स्वर और आकृति से शिवाजी को पहचानते हुए भी उन ( शिवाजी ) के नियम की याद करके कोई ऐसी चेष्टा नहीं की जिससे अन्य लोग उन्हें ( शिवाजी को ) पहचान सकें ।

शिवाजी ने उस पथिक के साथ काफी देर तक बातचीत कर के, उसका वृत्तान्त, अवस्था और स्वभाव जानकर, और उसका नाम 'भूषण' कवि—जिसकी प्रसिद्धि उन्होंने बहुत दिनों से सुन रखी थी—जान कर "आप कल शिवाजी के दर्शन करें" ऐसा कह कर लौट पड़े । लौटते समय, भूषण कवि के "आप कौन हैं" यह पूछने पर, "इसी देश का एक वीर हूँ" यह उत्तर दिया ।

प्रातःकाल ही नित्यकर्म से निवृत्त होकर, अपने सभासदों के साथ सभा में बैठे शिवाजी ने सभा में ही अपने सेवक से भूषण कवि को बुलवाया ।

स तु बद्धमहोष्णीषः, पादाग्र-पर्य्यन्त-विलम्बमान-कञ्चुकः, नारिकेल-फल-सार-सहितं यज्ञोपवीत-युगलं हस्ते आदधानः, द्वारपाल-दर्शितेन पथा सभां प्रविश्य "विजयतां महाराजः"-इति सिंहगर्जनमवधीरयता स्वरेणोच्चैरुक्त्वा स्वोपहारं महाराजहस्ते आर्पयत् ।

निर्दिष्टस्थान उपविश्य च, स एवायं पूर्वदृष्टो वीर इति निरीक्ष्य, "अहो ! वीरो वीरो वीरः । वीरमेवान्विष्यन् दिल्लीत इतो यावत् समायातोऽस्मि, वीरमेव च प्राप्तवानस्मि । विजयतां धर्मोद्धारण-धीरः, सपत्नोत्सारण-समीरः, वीरो महाराज" इत्युदीर्य

---

नारिकेल-फलस्य सारेण = तत्स्थांशेन, "गरी का गोला" इति हिन्दी, सहितम् । आदधानः = धारयन् । स्वोपहारम् = स्वोपायनम् । आर्पयत् = आदरेण दत्तवान् । 'ऋ गतिप्रापणयोः' स्यस्माण्णिचि "अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इति पुकि रूपम् । वीरो वीरो वीरः = सम्भ्रमेऽनेकशब्दोच्चारणमिति बहव । सपत्नानाम् = शत्रूणाम्, "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इत्यमर. । उत्सारणे = दूरीकरणे, समीरः =

---

बड़ी-सी पगड़ी बाँधे, पैरों तक लटकने वाला लम्बा कुर्ता पहने, हाथ में गरी का गोला और यज्ञोपवीत की जोड़ी लिये महाकवि भूषण ने द्वारपाल द्वारा दिखाये गये रास्ते से सभाभवन में प्रविष्ट होकर, सिंहगर्जन को भी तिरस्कृत कराने वाले गम्भीर स्वर से "महाराज की जय हो" यह कह कर अपना उपहार महाराज शिवाजी के हाथ में रख दिया ।

तदनन्तर दिखाये गये स्थान पर बैठ कर भूषण ने "यह तो वही पहले ( कल ) देखा हुआ वीर है" यह देखकर, "अहा वीर ! वीर !! वीर !!! वीर की खोज में ही दिल्ली से यहाँ तक आया और वीर से ही आ मिला । जय हो, धर्म के उद्धार में धीर, शत्रुओं को उखाड़ने में समीर के समान महाराज शिवाजी की जय हो" यह कह कर, कुछ

किंचित् स्मयमानस्य महाराजस्य मुखमवलोकयंस्तत्प्रशंसायां वीररसमयीं कवितामेकामपठत् ।

महाराजस्तु "साधु साधु" इति व्याहृत्य, पुनः पठितुमाज्ञप्तवान् । पठितवति च तस्मिन् सर्वेषु प्रसन्नेषु पुनरप्यादिशत् । इत्येवं विंशतिवारं तेन सा व्रज-भाषामयी 'कवित्वकाम'-नामिका वृत्तिरपाठि । महाराजेन च तस्मै गजानां विंशतिर्वितीर्णा-इत्यद्यापि प्रसिद्धं कविता-रसिकानां मण्डले ।

तदेव च दिनमारभ्य तेन भूषण-कविः स्व-सभायां संस्थापितः ।

अथ दृश्यतां ततः शास्तिखानस्य काऽवस्थेति ।

---

साधु । स्मयमानस्य = ईषद्धास्यनिरतस्य । व्रजभाषामयी = व्रजभाषाया निर्मिता । तुलसीदासजन्मनः पूर्वं व्रजभाषैव कविताभाषात्वेन गणिता । यहोः कालादनन्तरमपि तस्यास्तद् गौरवं सुरक्षितमेवाभवत् । अधुना तु प्रायो हिन्द्यामेव कविता कुर्वन्ति । कवित्वकामनामिका = लोके "कवित्त" इत्यपभ्रंशतया ख्याता । वृत्तिः = छन्दः । विंशतिः, "विंशत्याद्याः सदैकत्वे सर्वा सङ्ख्येय-सङ्ख्ययोरि"त्यमरः । गजशब्दस्य प्रथमान्तत्वेऽपि गजा विंशतिरित्येव ।

---

मुस्कराते हुए महाराज शिवाजी के मुख की ओर देखते हुए उनकी प्रशंसा में एक वीररसमयी कविता पढ़ी ।

महाराज ने "साधु साधु" कह कर पुनः पढ़ने की आज्ञा दी । भूषण के पढ़ने पर तथा सबके प्रसन्न होने पर पुनः आज्ञा दी । इस प्रकार भूषण ने बीस बार व्रजभाषा का कवित्त सुनाया । महाराज ने उसे बीस हाथी दिये, यह बात आज भी कविता-रसिकों की मण्डली में प्रसिद्ध है । उसी दिन से महाराज ने भूषण कवि को अपनी सभा में रख लिया ।

अब देखें, उधर शाइस्ता खाँ की क्या हालत है ।

अस्तमिते भगवति मरीचिमालिनि, अन्धकारेण व्याप्तासु हरित्सु, किञ्चित् किञ्चिच्चमत्कुर्वत्सु नक्षत्रेषु, शिववीरेणाध्युषितचरस्य महाप्रासादस्याट्टालिकायामात्मीयैः शास्तिखानः समुपविष्टोऽस्ति। परितश्चानेके योद्धारो मौद्गलाः पर्यवातिष्ठन्त। परितो दीपमाला चकास्ति। पुष्पवाटिकाभ्यश्च प्रस्फुटदतिमुक्त-कुसुमसौरभमादाय धीरः समीरः प्रवहति। शास्तिखानस्तु महदुपधानं पृष्ठेनाऽऽक्रम्य, सम्मुखस्थ-रत्न-जटित-धूमपान-यन्त्र-नलिकां हस्ते

---

अस्तमिते = अस्ताचलं गते। व्याप्तासु = सङ्कुलासु। हरित्सु = दिक्षु। चमत्कुर्वत्सु = प्रभां वितरत्सु। नक्षत्रेषु = उडुगणेषु। महाप्रासादस्य = विशाल राजमन्दिरस्य। अट्टालिकायाम् = तल्पिन्याम्, "अटारी" इति हिन्दी। आत्मीयैः = स्वीयैः। मौद्गलाः = मौद्गल्याः। "मोगल" इति हिन्दी पूर्वप्रदर्शितनयेनैतन्मते मौद्गल्यगोत्रा इमे क्षत्रिया इति मन्तव्यम्। साहित्याचार्यरामावतारशर्मादयोऽप्येतन्मतपथिका इति न विस्मरणीयम्। पर्यवातिष्ठन्त = परितः स्थिता अभूवन्। चकास्ति = दीप्यते। प्रस्फुटताम् = विकसताम्, अतिमुक्तकुसुमानाम् = माधवीपुष्पाणाम्, सौरभम् = शोभनं गन्धम्। सम्मुखस्थस्य = पुरःस्थापितस्य, रत्नजटितस्य = हीरकादिखचितस्य, धूमपानयन्त्रस्य = "हुक्का" इति ख्यातस्य, नलिकाम् = "नली" इति लोके ख्याताम्। यूथिकानीरकाणाम् = मागधीक-

---

भगवान् सूर्य अस्ताचल की ओर गमन कर चुके हैं, दिशाओं में अन्धकार फैल गया है, तारे कुछ कुछ टिमटिमाने लगे हैं। शाइस्ता खाँ उसी राजप्रासाद में, जिसमें पहले महाराज शिवाजी रहा करते थे, अपने मुसाहिबों के साथ बैठा है। चारों ओर अनेक योद्धा मुगल बैठे हैं। चारों ओर दीपक जल रहे हैं। फुलवाड़ी से, खिलते हुए माधवी पुष्पों की सुगन्ध लेकर, मन्द-मन्द वायु चल रही है। शाइस्ता खाँ एक बड़े मसनद पर पीठ रखे, सामने रखे हुए रत्नजटित हुक्के की नली को हाथ में

सह समायान्तं महाराष्ट्रराजमद्राक्षीत्। यावदेव तत्प्रभाधर्षितः उत्थाय किमपि विमृशति स्म, तावत्स स्वयमेव सादरमुवाच यद्—"भद्रं भवतु राजकुमारस्य। न मां पूर्वमपश्यद् भवान्—इति सूचयामि, मां जनाः शिवराज—इति कथयन्ति। कुमारस्यापि पित्रा सह मम बहूनि युद्धानि जातानि, भवन्ति च। श्रूयते श्रीमानपि मया योद्धुमेव प्रेषित इति, परं स्वच्छतया वा, साधुतया वा, मुग्धतया वा अल्पवयस्कतया वा, संग्राममननुष्ठायैव मम गृहमायातः—इति स्वागतम्। कच्चिद् यथासमयं यथोचिताचारैरुपतिष्ठन्ते दासेराः? कच्चित् प्रसीदति वा भवान्? उपविश्यतामुपविश्यताम्"—इत्युक्त्वा, तमुपवेश्य स्वयमप्युपविष्टः। एवं साम्रेडमापृच्छयमानः कुमारोऽपि ह्रीरवशः कथ-

---

क्षीत् = अवालोकयत्। तस्य प्रभया = कान्त्या, धर्षितः। विमृशति स्म = व्यचारयत्। भद्रम् = कल्याणम्। स्वच्छतया = निर्मलतया। साधुतया = परोपकृतिपटुतया। मुग्धतया = सरलतया। अल्पवयस्कतया = न्यूनावस्थात्वया। अननुष्ठाय = अविधाय। स्वागतम् = शुभागमनम्। दासेराः = भृत्याः। उपतिष्ठन्ते = सेवां कुर्वन्ति, "उपाद्देवपूजासङ्गतिकरणे" त्यादिनाऽऽत्मनेपदम्। प्रसीदति = तुष्यति। साम्रेडम् = अनेकवारम्। ह्रीपर-

---

आते देखा। उनके तेज से दबा हुआ सा वह, उठकर अभी कुछ सोच ही रहा था कि उन्होंने स्वयं ही आदर पूर्वक कहा "राजकुमार का कल्याण हो, आपने मुझे पहले नहीं देखा है अतः मैं अपना परिचय दे रहा हूँ, मुझे लोग शिवाजी कहते हैं। आप के पिता जी के साथ मेरे बहुत से युद्ध हुए हैं और अब भी हो रहे हैं। सुना जाता है कि आप भी मुझसे लड़ने के लिए ही भेजे गये थे, परन्तु निर्मलता या सज्जनता या सरलता, या अवस्था कम होने से बिना युद्ध किये ही मेरे घर आ गए, अतः आप का स्वागत है। समयानुसार यथोचित आचार से नौकर आप की सेवा तो करते हैं न? आप प्रसन्न तो हैं! 'बैठिये-बैठिये' यह कह कर उसको बैठाकर शिवाजी स्वयं भी बैठ गए।

मपि सम्मुखं मुखं विधायोक्तवान्-राजन्! अहं शत्रुपुत्रोऽस्मि, योद्धुं चाऽऽयातोऽस्मि इति निगृहीतश्चेद्धन्तव्यः, दण्डयितव्यश्च, न तु सत्कारैस्तिरस्करणीयः, स्वागत-वाणी बाणैश्च मर्मसु वेधनीयः।

ततस्तावेवमालापिष्टाम्।

शिव०—कुमार! केयं कथा? राज्ञां पारस्परिकाः सन्धिविरोधरूपा भवन्त्येव सम्बन्धा इति दैवान्मे विरोधस्तव पित्रा। त्वं तु यथा दिल्लीनायकस्य लालनीयस्तथा ममापि-इति दर्शं दर्शं तव यौवनोद्भेदसुभगान्यङ्गानि प्रीतिरेव मे वर्द्धतेतराम्।

---

वशः = वराधीनः। सम्मुखम् = पुरः। निगृहीतः=वारके कृत। दण्डयितव्यः = दण्डविषयीकर्त्तव्यः। सत्कारैः = आदरैः। स्वागतवाण्य एव बाणाः = इषवः, तैः। मर्मसु = कोमलेषु रक्षणीयेषु स्थानेषु च। वेधनीयः = प्रहरणीयः।

आलापिष्टाम् = वार्त्तामकुरुताम्। लुङ् प्रथम-पुरुषद्विवचनम्।

पारस्परिकाः = अन्योन्याः। दैवात् = अदृष्टात्। लालनीयः = सुखेन पालनीयः। यौवनोद्भेदसुभगानि = तारुण्योद्गमसुन्दराणि।

---

इस प्रकार बार बार पूछने पर कुमार ने भी लज्जित होते हुए किसी प्रकार मुख सामने कर के कहा—" राजन्! मैं शत्रु का लड़का हूँ और युद्ध करने के लिये आया हूँ अतः यदि पकड़ लिया गया हूँ तो आप मुझे मार डालें और दण्ड दें, न कि सत्कारों से तिरस्कृत करें और स्वागत की वाणी के बाणों से मर्माहत करें।"

तदनन्तर उन दोनों ने इस प्रकार वार्तालाप किया।

शिवाजी—कुमार! यह क्या बात है! राजाओं के परस्पर सन्धि और विग्रह के सम्बन्ध तो होते ही है, और संयोग से हमारा आपके पिता से विरोध है। आप तो जैसे दिल्ली के बादशाह के लिए स्नेहपात्र हैं वैसे ही मेरे भी, इसलिए यौवन के प्रस्फुटित होने से सुन्दर लगने वाले आपके अंगों को देख-देख कर मुझे अत्यधिक प्रसन्नता हो रही है।

कुमा०—एवं चेत् कथं निगृहीतोऽस्मि ? स्वतन्त्रः कथं न क्रिये ?

शिव०—कोऽत्र निग्रहः ? केवल मम साक्षात्कारायात्र वासितो भवान्। अधुना तु यथा रोचेत ; तथा विधातुं शक्यते। अस्मिन् देशे न कदाऽप्यायातो भवान्—इति कुतूहलं चेदवलोकयन्तां विविधानि दुर्गाणि पर्वतानां वनानाञ्च रामणीयकानि। निविवर्त्तिषते चेत् सुखेन गम्यतां स्वदेशे, निर्विघ्नमास्माकीनाः सादिनः प्रतियापयिष्यन्ति आयुष्मन्तम्।

कुमा०—[ तदौदार्येण चकित इव ] महाराष्ट्रराज ! किमिव व्यामोहयसि ? न भवति मे निश्चयो यन्महत्या वाहिन्या सह भवतो राज्यमात्मसात्कर्तुमायाते मादृशे श्रीमानेवं दयिष्यते—इति।

---

निग्रहः=बन्धनम्। साक्षात्काराय=अवलोकनाय। अवलोकयन्ताम्=दृश्यन्ताम्। रामणीयकानि=सौन्दर्याणि। निविवर्त्तिषते=निवर्तितुमिच्छति। प्रतियापयिष्यन्ति=तत्र प्रापयिष्यन्ति। आयुष्मन्तम्=चिरायुषम्।

व्यामोहयसि=बुद्धिभेदं जनयसि। वाहिन्या=सेनया। आत्मसात्कर्तुम्=स्ववशीकर्तुम्। दयिष्यते=दया करिष्यते।

---

कुमार—यदि ऐसा ही है तो मैं कैद क्यों किया गया हूं ? स्वतन्त्र क्यों नहीं कर दिया जाता हूं ?

शिवाजी—यहाँ बन्धन क्या है ? केवल मुझसे भेंट करने के लिये आप यहाँ ठहराये गये हैं। अब आप जो चाहें कर सकते हैं। इस प्रदेश में आप कभी नहीं आये हैं अतः यदि उत्सुकता हो तो विविध दुर्गों, पर्वतों और वनों की शोभा देखिये। यदि लौटने की इच्छा हो तो सुख पूर्वक अपने देश चले जाइये। हमारे घुड़सवार आपको निर्विघ्न पहुँचा देंगे।

कुमार—[ उनकी उदारता से आश्चर्य में पड़ा हुआ सा ] महाराष्ट्र नरेश ! भ्रम में क्यों डाल रहे हैं ! मुझे विश्वास नहीं हो रहा है कि बहुत बड़ी सेना के साथ आपके राज पर अधिकार करने के लिये आये हुये मुझ जैसे व्यक्ति पर आप इस प्रकार दया करेंगे।

शिव०—आः! कोऽत्र सशयः? नैतद्भवतस्तातचरणानां राज्यम्; यत्र विश्वासघातो विध्वंसो लुण्ठनं दाहश्च वशंवदानामपि क्रियते। राज्यमिदं महाराष्ट्राणाम्। नात्र दारापहरणम्, नात्र 'रक्ष रक्षेति' व्याहरमाणानां वधः, न चात्र वशमागतैः सह विश्वासघात-व्यापारः। सुखेन स्वगृहे इव यथेच्छं विहरतु भवान्।

तदखिलमिदं सदाचार-सौष्ठवाधिक-मधुरं वचनामृतं कर्ण-पुटाभ्यां पीत्वा स्वपितुर्दौरात्म्ये घृणामावहन्, महाराष्ट्रराजस्य निगृहीतेष्वपि सदाचारं बहु मानयन् चिरमालपत् शिवराजेन मायाजिह्मः।

---

वशंवदानाम् = अधीनानाम्। व्याहरमाणानाम् = कथयताम्। यथेच्छम् = यथाभिलषितम्। विहरतु = क्रीडतु, 'शेषे प्रथमः' इति प्रथमपुरुषत्वम्।

सदाचारसौष्ठवेन, अधिकम्, मधुरम् यद्। वचनामृतम्=उक्तिपीयूषम्। दौरात्म्ये = दुष्टतायाम्। आवहन् = धारयन्। मानयन् = मानितं कुर्वन्।

---

शिवाजी—आः! इसमें क्या सन्देह है? यह आपके पिताजी का राज्य नहीं है, जहाँ आधीन लोगों के साथ भी विश्वासघात, विध्वंस, लूटपाट और आग लगा देने आदि के दुष्कर्म किये जाते हैं। यह मराठों का राज्य है। यहाँ स्त्रियों का अपहरण नहीं होता, यहाँ 'रक्षा करो—रक्षा करो' कहकर शरण में आए लोगों का वध और अपने वश में कर लिये गये लोगों के साथ विश्वासघात का काम नहीं होता है। आप यहाँ अपने घर की भाँति सुखपूर्वक विहार करिए।

तब सदाचार के सौष्ठव से अत्यधिक मधुर शिवाजी के वचनामृत को कर्णपुटों से पीकर अपने पिता की दुष्टता पर घृणा करता हुआ, शिवाजी के कैदियों से किये गये अच्छे व्यवहार की मन ही मन प्रशंसा करता हुआ 'मुआज़िम' शिवाजी से देरतक वार्तालाप करता रहा।

ततः-"अद्य सपदि समायास्यति कश्चिन्मया प्रेषितोऽधिकृतः, भवन्तं च पुण्यनगरं कानिचिच्च दुर्गाणि दर्शयिष्यति"-इत्यभिधाय प्रस्थिते महाराष्ट्र-राष्ट्र त्रिविष्टपनाथे, कैश्चिन्नर्तितकाम्बोजैरश्वारोहैरनुसृतः, श्यामेनैकेन सुवर्ण-वल्गेन राजत-खलीनेन मौक्तिक-स्तवक-राजि-राजित-निगालेन रत्न-निचय रुचिर रोचिः-प्रचय-च्छुरित-वालधिना सुवर्ण-सूत्र-ग्रथित-प्रान्त-पीत कौशेयोप-

---

अधिकृतः = नियुक्त । महाराष्ट्राणां राष्ट्रम् = राज्यम्, तदेव त्रिविष्टपम् = सुरलोकः, तन्नाथे = तदधीशे । नर्तिताः = सुगत्या चालिताः, काम्बोजाः = कम्बोजदेशोद्भवा अश्वा यैस्तैः । अनुसृतः = अनुगतः । सुवर्णवल्गेन = हिरण्यरश्मिना । राजतखलीनेन = रौप्यकविकेन । मौक्तिकस्तवकानाम् = मणिगुच्छानाम्, राज्या = श्रेण्या, राजितः = शोभितः, निगालः=गलोद्देशो यस्य तेन । रत्ननिचयस्य = हीरकादिसमूहस्य, रुचिरेण = मनोहारिणा, रोचिःप्रचयेन = तेजोव्रातेन, छुरितः = रूषित, वालधिः = पुच्छ यस्य तेन । सुवर्णसूत्रग्रथिता = हिरण्यतन्तुस्यूता । प्रान्ते = चरमांशे, पीताः=पीतवर्णाः, 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इत्यभिधानात् शुक्लादीनां गुणगुण्युभयवाचकत्वं घटते।

---

तदनन्तर, आज अभी मेरा भेजा हुआ कोई अधिकारी आयेगा, और वह आपको पूनानगर तथा कुछ दुर्गों को दिखाएगा, यह कहकर महाराष्ट्र देशरूपी स्वर्ग के अधीश के चले जाने पर कम्बोजदेश के घोड़ों को नचा रहे कुछ घुड़सवारों से अनुगत, सुवर्णसूत्र निर्मित रास वाले, चाँदी की लगाम (खलीन) वाले, मोती के गुच्छों की माला से सुशोभित गले वाले, रत्नों के समूह की मनोहर कान्ति के पुञ्ज से अङ्कित पुच्छ वाले, सोने के तारों से कढ़े हुए किनारे वाले पीले रेशमी चारजामा (गद्दी) से आच्छादित मध्यभाग वाले, काले रंग के एक अरबी घोड़े को—जिसे

वेशनिकाऽऽच्छन्न-मध्येन कशाङ्कितकक्षेण धृतरश्मिनैकेन नियन्त्रा मन्दं मन्दमानीयमानेन वनायुजेन सहितः श्यामसिंहः समुपतस्थे ।

मायाजिच्चास्य तेनाऽऽलप्य हयमेनमारुह्य श्यामेन सह प्रथमं पुण्यनगरं प्राविक्षत् । तत्र च गृहे गृहे गीतानि द्वारि द्वारि रम्भा-स्तम्भान् कुट्टिमे कुट्टिमेऽवलम्बित-माणिक्य-दीपिकानुल्लोचान् वीक्ष-माणः, ग्रैवेयकालङ्कृतकन्धरान् सिन्धुरान्, उच्चैःश्रवस इव बान्ध-

---

या कौशेयस्य=पट्टवस्त्रस्य, उपवेशनिका=आसनिका, "चारजामा" इति हिन्दी, तया, आच्छन्नं मध्यं यस्य तेन । कशया=अश्वताडन्या, "कोड़ा चाबुक" इति हिन्दी, अङ्कितः=चिह्नितः, कक्षः=बाहुमूल यस्य तेन । धृतरश्मिना = गृहीतप्रग्रहेण, नियन्त्रा = सारथिना, "नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः" इत्यमरः । आनीयमानेन = प्राप्यमाणेन, वनायुजेन=वनायुदेशे जातेन सदश्वेन । "अरबी घोड़ा" इति हिन्दी ।

एनम्=पूर्वोक्तगुणगणयुतम् । प्राविक्षत्=प्रविवेश । कुट्टिमे कुट्टिमे = प्रतिनिबद्धभूमि । अवलम्बितमाणिक्यदीपिकान् = धारितमणिप्रदीपान् । उल्लोचान् = मण्डपानि । ग्रैवेयकालंकृतकन्धरान् = ग्रीवाभूषणभूषित-ग्रीवान् । सिन्धुः=मदजलम्, अस्ति येषां तान् सिन्धुरान् =

---

अपनी काँख में चाबुक दबाये हुये एक साईस रास पकड़े हुये धीरे धीरे ला रहा था—साथ लेकर श्यामसिंह उपस्थित हुआ ।

मुआजिम ने श्यामसिंह से बात करके उसके द्वारा लाये गये घोड़े पर सवार होकर उसके साथ पहले पूना नगर में प्रवेश किया । वहाँ घर घर में गीतों की ध्वनि सुनकर, द्वारों पर केले के खम्भों और फर्शों पर जिनमें मणिमय दीप लटक रहे थे ऐसे तम्बुओं, गले के आभूषण से अलंकृत गर्दन वाले हाथियों, उच्चैःश्रवा के बन्धु बान्धवों के समान अश्वों, नूतन वस्त्र धारण किये पुरवासियों और फहराती हुई विजयपताकाओं से सुशोभित घरों को देखकर, भेरी, नगाड़े, झाँझ आदि के शब्दों को, सुनकर श्यामसिंह से

वान् सैन्धवान् , धारिताभिनववस्त्रान् पौरान् , समुद्धूत-विजयध्वजा-श्चाखिलान् गेहान् उपलभमानः, भेरी पटह-झर्झरादि-नादांश्चाऽऽक-र्णयन् , "अद्यास्ति कोऽप्यद्य उत्सवविशेष: ?"—इति श्यामम-पृच्छत् । स च 'अद्य एकपदमेव महाराजा दिल्लीश्वर सौरतान् विद्रोहिणः पोतयोधिनः सामुद्रांश्च पराजितवान्—इति महोत्सवोऽस्मिन् राज्ये" इति समुदतारीत् , मायाजिश्च सलज्जमश्रौषीत् ।

अथ ततो निवृत्त. सिंहदुर्गमायातस्तत्रत्यान् विजयध्वजाना-लोक्य किञ्चिदन्तर्गत्वा च शाहिस्तखान-शिरोभूषणादीनि बहूनि विजित्याऽऽच्छिद्याऽऽनीतानि वस्तूनि दृष्ट्वा ह्रीण इव हतोत्साह इव चकित इव च ततोऽपि निवृत्तः, पथि महदेक महाप्रघण शारद-

करिणः । उच्चैः श्रवस. = इन्द्रघोटकस्य । बान्धवानिव = भ्रातृनिवेत्यु-पमा । सैन्धवान् = हयान् । धारिताभिनववस्त्रान् = परिहितनूतनवस-नान् । पौरान् = नागरिकान् । समुद्धूतविजयध्वजान् = समुच्छ्रित-जय-वैजयन्तीकान् । उपलभमानः = समवलोकयन् । आकर्णयन् = शृण्वन् । उत्सवविशेषः = महोद्भवः । एकपदमेव=एकदैव । सौरतान = सूरतदेशीयान् । पोतयोधिन = नौसंग्रामकारिणः । सामुद्रान् = उदधिसम्बन्धिन । पराजितवान् परास्तवान् ।

विजयध्वजान् = विजयवैजयन्तीः । ह्रीण इव = सलज्ज इव । महा-प्रघण = बृहद्बहिर्द्वारप्रकोष्ठक, यस्मिस्तादृशम् , "प्रघाणप्रघणालिन्दा बहिर्द्वार-प्रकोष्ठक" इत्यमरः । शारदस्य = शरदि भवस्य, घनस्य=वारिदस्य, घनाघ-

पूछा, 'आज कोई विशेष उत्सव है क्या ?' उसने उत्तर दिया कि आज एक साथ ही महाराज ने दिल्लीश्वर को, सूरत के विद्रोहियों को और समुद्री लुटेरों ( नौका से संग्राम करने वाले समुद्रियों ) को पराजित किया है, इसलिये इस राज्य म महोत्सव है मुआजिम ने लज्जापूर्वक यह उत्तर सुना । तदनन्तर मुआजिम वहाँ से सिंह दुर्ग लौट आया । वहाँ की ( सिंह दुर्ग की ) विजय पताकाओं को देखकर और कुछ अन्दर जाकर शाइस्ताखाँ के मुकुट आदि बहुत सा जीतकर छीनकर लाई गई वस्तुओं को देखकर वह लज्जित

घन-घनाघन-विडम्बन भवनमद्राक्षीत् तत्र प्रविश्य च, रजतेन कनकेन च निर्मीयमाणा: शिवराजनामाङ्किता मुद्रा निष्काणि च दृष्ट्वा ततः प्रचलितो राजदुर्गमाससाद। दूरादेव दुर्गस्य समीपवर्तिनि प्रशस्ते शाद्वले च परस्सहस्रानश्वारोहान् उन्मुखयन्त भ्रामयन्तश्च महान्त कर्कमारूढं युवानमेकं समलुलोकत्। कोऽसाविति पृष्टश्च श्यामसिंह–कुमार! एष मे ज्येष्ठो भ्राता, महाराष्ट्रराजस्यान्यतमः सेनापतिरस्ति–इति व्याहार्षीत्।

तावदेकतो धौरितकेनाश्वारोह-शतकेनानुगम्यमानः, स्वयमपि पारसीकमेकमारूढः तथैव धावमानोऽनिल-लोलकुन्तलो नवीने

नस्य = वर्षुकमेघस्य, "वर्षुकाब्दो घनाघन" इत्यमरः। विडम्बना = अनुकृतिर्यस्य तत्, अभूतोपमालङ्कारः। निर्मीयमाणाः = विरच्यमाना। निष्काणि=सुवर्णमुद्रा। उन्मुखयन्तम्=अभिमुखयन्तम्, भ्रामयन्तम् = चालयन्तम्। 'कवायद करानेवाले' इति हिन्दी। यूनो विशेषणम्। कर्कम्=श्वेतमश्वम्। "शुक्लोऽश्व कर्क उच्यते" इत्यभिधानम्।

धौरितकेन = हयगतिविशेषेण। अश्वारोहाणाम् = सादिनाम्, शतकेन। पारसीकम् = पारस्यदेशोद्भवम्, अनिलेन लोलाः = चञ्चला, कुन्तलाः = चिकुरा, यस्य स, अनिलवत् लोला इति वा, "चिकुर कुन्तलो

सा, हतोत्साह सा, और चकित सा वहाँ से भी लौट पड़ा और रास्ते में उसने शरत्काल के घनी वर्षा करने वाले मेघ की विडम्बना करने वाले एक विशाल भवन को देखा जिसके बरामदे बहुत बड़े थे। उस भवन में जाकर चाँदी और सोने से बनाई जा रही शिवाजी के नाम से अङ्कित मुहरों और सिक्कों को देखकर, वहाँ से चलकर राजदुर्ग पहुँचा। दूर से ही दुर्ग के पास वाले साफ सुथरे घास के मैदान ( नीव ) में सहस्राधिक ( हजारों ) अश्वारोहियों को कवायद कराते हुए एक विशाल काय श्वेत अश्व पर आरूढ़ एक युवक को देखा। 'यह कौन है' यह पूछने पर श्यामसिंह ने कहा—'कुमार! ये मेरे बड़े भाई हैं जो महाराष्ट्र नरेश के सेनापतियों में से एक हैं'।

उसी समय एक ओर से दुलकी चाल से आ रहे सौ घुड़सवारों से अनुगत,

रुणैर्वासोभिरपरिचीयमानो रघुवीरसिंहः समागत । समादर-मुद्रया कुमार सम्भाव्य, श्यामेन भ्रूसञ्ज्ञयैव पृष्टो "मान्य ! शास्तिखान-युद्धे मयि प्रसन्नेन प्रभुणा शतमश्वारोहान ममाधिकारे निरूप्य, तदध्यक्षताया नियोजितोऽस्मि" इति समस्तकनमनमभ्यधात्। तेन "भद्रम, दिष्ट्या दिष्ट्या"—इति सप्रसादमुक्तश्च पुरत प्रचलित ।

अथ मायासिंहो राजदुर्गं परितः परिकाम्यन्, कुत्रचित् सेना निवेशान्, कुत्रचित् पदाति-निकर-विरचिता व्यूह-रचना, कुत्रचिद् धड्धड्ध्वनिपुरःसरं विहायसि प्रयुज्यमाना भुशुण्डिकाः, कुत्रचित् ह्रादिनी निर्ह्रादं ह्रेपयतीः शतघ्नीः, कुत्रचिन्मिथ्यायुद्धरचनया

---

बाल" इत्यमर । अरुणै = ईषद्रक्तैः । अपरिचीयमानः = अनवबुध्यमान । स्व प्रामस्वाधिकारानुरूपनवीनवेषधारित्वादिति भाव । समादरमुद्रया = गौरवप्रदर्शनभङ्ग्या । कुमारम् = मायासिंहम् । समस्तकनमनम् = सशिरोनति । दिष्ट्या = भागधेयेन ।

सेनानिवेशान् = शिविराणि । पदातिनिकरेण – पदगसमूहेन, विरचिताः = सघटिता । विहायसि = नभसि । ह्रादिनीनिर्ह्रादम् = वज्र-गर्जनम्। "ह्रादिनी वज्रमस्त्री स्यादि" अमरः। ह्रेपयतीः = लज्जयती ।

---

स्वयं भी एक पारसी घोड़े पर सवार हो उसी प्रकार घोड़े को दौड़ाता हुआ, हवा से हिल रहे बालों वाला, नवीन हल्के लाल वस्त्रों के कारण पहचान मे न आनेवाला रघुवीरसिंह आ गया। उसने आदर सूचक मुद्रा से कुमार को सम्मानित किया। श्याम ने भौंह के ईशारे से ही कुछ पूछा, उत्तर में उसने सिर झुका कर कहा—मान्य ! शास्ता खाँ के साथ युद्ध में मुझ पर प्रसन्न होकर महाराज ने सौ घुड़सवारों को मेरे अधिकार में देकर मुझे उसका नायक नियुक्त किया। श्यामसिंह ने हर्ष पूर्वक कहा "बहुत अच्छा, सौभाग्य है, सौभाग्य।" रघुवीर सामने की ओर ही चला गया।

तदनन्तर राजदुर्ग के चारों ओर घूमता हुआ, कहीं शिविरों को, कहीं पैदल सैनिकों द्वारा बनाई गई व्यूह रचनाओं को कहीं धड़ धड़ शब्द के

चन्द्रहास-चालन-चातुरीं प्रासासन-साहसं, पट्टिश-प्रयोग-पाटवं इषु-वर्षण-कौशलं च दर्शयतोऽनेकान् वीरान्, क्वचिच्च ध्वज-मुत्थाप्य भारतस्य सनातनधर्मस्य महाराष्ट्रराजस्य च जयनुद्‌घोषयतः प्रमोदपूरप्रफुल्लान् पौरान् पश्यन्, विविध-विभावना भङ्ग-भज्यमान-हृदयः पुनर्माया-प्रासादं निववृते ।

श्यामसिंहस्तु तं तत्र प्रवेश्य, स्वयमपि महाराष्ट्रराजस्य विजयोत्सवे राजदुर्गे समागतानां सम्भावित-मण्डलानां साकारे प्रताप-

शतघ्नीः = तोपान् । प्रासासनसाहसम् = कुन्तवेगपराक्रमं । पट्टिशस्य प्रयोगे = चालने, पाटवम् = कौशलम् । प्रमोदपूरप्रफुल्लान् = प्रसन्नताप्रवाहविकसितान् । विविधविभावनाभङ्गेन = अनेकविधविचारतरङ्गेण, 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्यमरः, भज्यमानम् = क्षुभ्यमानम्, हृदयं यस्य सः । मायाप्रासादम् = मायादुर्गम् । मायानिवासार्थं निर्दिष्टं भवनम् । सम्भावितमण्डलानाम् = प्रतिष्ठितवर्गाणाम् । साकारे = दर्शनीया-

साथ आकाश में छोड़ी जा रही बन्दूकों को, कहीं वज्रपात की ध्वनि या बिजली के गर्जन को लजाने वाली तोपों को, कहीं कृत्रिम युद्ध की रचना करके तलवार चलाने की निपुणता, भाला फेंकने का पराक्रम, पट्टिश के प्रयोग की पटुता और बाणों की वर्षा करने की कुशलता दिखा रहे अनेक वीरों को, कहीं झण्डा उठाकर भारत की, सनातन धर्म की, महाराष्ट्र नरेश की जय का उद्‌घोष कर रहे हर्ष प्रवाह से खिले हुए नगरवासियों को देखता विभिन्न विचारों की तरङ्गों से टूटते हुये हृदय वाला [illegible] पुनः माया-महल में लौट आया ।

श्यामसिंह उसे वहाँ पहुचा कर स्वयं भी महाराष्ट्र नरेश के [illegible] के अवसर पर राजदुर्ग में आये हुये सम्मानित लोगों के [illegible] ।

इव महति स्वर्ण-सिंहासने समारूढं मूर्तिमता यशसेव च्छत्र-मण्डलेन सुशोभितं प्रजाभिराद्रियमाणं महाराष्ट्रराजं द्रष्टुं राजदुर्गं प्रचलितः ।

इत्यष्टमो निश्वासः ।
इति द्वितीयो विरामः समाप्तः ।

---

रिणि । प्रताप इवेत्युत्प्रेक्षा । मूर्तिमता = आकृतिमता । यशसेव = कीर्त्यैवेत्युत्प्रेक्षा । आद्रियमाणम् = सत्क्रियमाणम् । जयजय-ध्वनि गोचरीक्रियमाणमिति यावत् ।

अशेष भूमीतल विद्यमान यम्दश लोकार्चित - पादयुग्म. ।
नारायण श्रीहरशब्दपूर्वस्त्रिपाठिवयो गुरुरस्ति यस्य ॥ १ ॥
अध्यानिरुद्धीशिवदत्तमिश्रतर्कांश्च य तार्किकमण्डलीशः ।
सिराहवासी भगवत्पुदीतो वेदान्तविद्यागयतोऽद्भवो यः ॥ २ ॥
श्यामा-पदद्वन्द्व मरन्द लुब्ध. स रामजीशर्मपद प्रसिद्धः ।
प्रादर्शयद्वीर-जये द्वितीये विरामके नूतनवैजयन्तीम् ॥ ३ ॥

इति श्रीशिवराजविजयवैजयन्त्यामष्टमनिश्वासविवरणम् ।
द्वैतीयीकविरामविवरणं समाप्तम् ।

---

समान स्वर्ण सिंहासन पर बैठे हुये शरीरधारी यश के से छत्रमण्डल से सुशोभित, प्रजा द्वारा समादृत हो रहे महाराष्ट्र राज के दर्शन के लिये राज दुर्ग को चल पड़ा ।

शिवराजविजय का आठवाँ निश्वास समाप्त ।
शिवराजविजय के द्वितीय विराम का हिन्दी अनुवाद समाप्त हुआ ।

डाक्टर भगवान्दास

शान्तिसदन, सिगरा,
( बनारस कैण्ट )
तिथि १३ आश्विन २००३ वि०

श्री अम्बिकादत्तव्यासजी का "शिवराज विजय' नाम का गद्य-काव्य, बहुत वर्ष हुए, मैंने आद्योपान्त पढ़ा कुछ वर्षों के पीछे पुनः आद्योपान्त पढ़ा—इधर उसका पाँचवाँ संस्करण निकला—इस नये संस्करण की एक प्रति में इस काव्य को तीसरी बार पढ़ रहा हूँ—प्रत्येक आवृत्ति में आनन्द अधिक आया—

संस्कृत के, पण्डित-मण्डली में, प्रायः तीन गद्यकाव्यों की चर्चा अधिक होती रही है, सुबन्धु की 'वासवदत्ता', बाण की 'कादम्बरी', दण्डी का 'दशकुमारचरित'—दण्डी का गद्यकाव्य तो निश्चयेन, अन्य दोनों की अपेक्षा से अच्छा कहा जा सकता है,—यद्यपि 'अ-लौकिक' असम्भाव्यसी घटनाएँ उसमें कई बेर आई हैं, तथापि भाषा, ओजस्विनी होती हुई भी कुछ अर्थ रखती है, और राजनीति, लोकचातुरी, ललितकला आदि विषयक ज्ञान भी उसमें रखता है—पर वासवदत्ता और कादम्बरी के शब्दों की अरण्यानी में तो बेचारा अर्थपथिक सर्वथा भूलभटक कर खो जाता है; उसका पता ही नहीं लगता कविता के गुणों में प्रसाद गुण एक मुख्य गुण है; वह इन दो काव्याभासों में मिलता नहीं—

विपरीत इसके, शिवराजविजय में, भाषा उत्तमोत्तम, ओजस्विनी भी, अर्थपूर्ण भी, सुबोध्य भी, यथास्थान, यथावसर, उद्दाम भी, कोमल भी। नवो रस भी इसमें बहुत औचिती और दक्षता से रक्खे हैं, वीररस, जिसका अर्वाचीन, संस्कृत-साहित्य में प्रायः अभाव ही है, वह इस ग्रन्थ में प्रधान है, शृङ्गार भी है, और सर्वथा सात्त्विक, सुशील, कोमल, प्रीति रूप; कहीं भी अश्लीलता आने नहीं पाई है; युद्धों के प्रसंग में रौद्र, भयानक, बीभत्स का और वीर के सम्बन्ध में अद्भुत का, रूप बहुत पर्याप्त मात्रा में दिखा दिया है। राजनीति और चार-चातुर्य और रणकौशल का भी निरूपण बहुत सुन्दर है। सर्वोपरि गुण इसका यह है कि विषय ऐतिहासिक, अधिकांश वास्तविक है, कपोल-कल्पित नहीं, और देशभक्ति, जन्म-भूमि-भक्ति, प्रजा की राज-भक्ति, राजा की प्रजा भक्ति, दोनों की धर्म-भक्ति, और भारतीय राष्ट्रीय-भाव से भरा है, जिन भावों का अर्वाचीन संस्कृत ग्रन्थों में सर्वथा अभाव है।

मैं जान नहीं सकता कि क्यों पण्डित मण्डली में अश्लीलतापूर्ण, 'हठाद्-आकृष्ट पद-पूर्ण' माघ किरात आदि काव्यों की इतनी महिमा है; और इस रत्नभूत ग्रन्थ से ईर्ष्या नहीं तो विमुखता है। इसका जितना अधिक प्रचार हो उतना अच्छा है—

भगवान्दास—

॥ श्रीः ॥

महाकविश्रीमदम्बिकादत्तव्यासविरचितः

# शिवराजविजयः

## अथ तृतीयो विरामः

"दैवी विचित्रा गतिः" —स्फुटकम्

येनामन्दमरन्दे दलदरविन्दे दिनान्यनायिषत।
कुटजे खलु तेनेहा तेने हा! मधुकरेण कथम्? ॥ —जगन्नाथः

या सत्त्वैकगुणाश्रया भगवती वाणीति सम्बोधिता
लीना राजसहृतौ सुरवरैर्लक्ष्मीति चाभ्यर्थिता।
या कालीति तमोगुणा मधुमदोन्माथे चिरादर्चिता
सेयं काचिदनूतनाऽपि युवती वोभूयता भूतये ॥ १ ॥

नवमे निश्वासे वृद्धिं गच्छतः शिववीरमहिम्नः प्रबलबलसमवेतबल-समवेतजयपुरन्दरजयसिंहमहाराजतोऽवरोधं विवर्णयिषुस्तन्मूलाद्यामे भाविनीं दिल्लीवल्लभाधीनतामाशङ्कमानस्तदुभयमुपक्षिपति पद्यखण्डेन पण्डितराजी-येन पद्येन च।

दैवी = देवसम्बन्धिनी, अदृष्टाधीना वा।

येन = मधुकरेण, अमन्दमरन्दे = प्रचुरमकरन्दे, दलदरविन्दे = विकसत्पद्मे, दिनानि, सुखमयानि रसानुसेवनपराणि, अनायिषत=व्यति-यापितानि, हा! = कष्टम्, खलु = निश्चितम्, तेन, न ■ परेण, कुटजे = पार्वतमल्लिकायाम्, ईहा = इच्छा, अपि, कथम् = केन प्रकारेण, तेने =

"भाग्य की गति विचित्र होती है!" —मुक्तक

"हाय! पराग से ओत-प्रोत एवम् विकसित कमलिनी के बीच ही अपना सारा जीवन व्यतीत करनेवाले मधुकर ने आज कुटज-पुष्पों के बीच रहने की इच्छा क्यों की?" —जगन्नाथ

ऋतुरेव शरत्। साम्प्रतं पुण्यनगरप्रान्तेऽकालेऽपि वसन्त इव पुंस्कोकिलाः काकली-कलकलैर्दिगन्तं बधिरयन्ति। मिलित-मलयानिल-लोला लवङ्ग-लता दोलन्ति। मधु-गन्धान्ध-मधुव्रत-व्रात-विधुरा माकन्द-मञ्जर्यो माञ्जुल्यं वमन्ति। नितान्त-

---

विवृद्धिं गाता। धीरवीरस्वभावेन परमोदात्तेन नायकेन श्रीशिववीरेण अफजलखानवधयोगात्मके महति विपद्गणे समुपस्थितेऽपि सन्धित्सा कथमकारि, यन्मूलाऽऽवेदनो बन्धनादिरूपा दुर्यशोज्वाला धूमायितेति मधुकराव्याक्याऽवसरमाविर्दैवगतन्नैव या यन्त्रणेयेति प्राथमिकपद्यखण्डेन च दन्यन्यते।

ऋतुरेव शरत्, शरच्छब्दो नित्यस्त्रीलिङ्गो विधेयभूतः, उद्देश्यभूतश्च ऋतुशब्दो नित्यपुंलिङ्गः, उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तत्तल्लिङ्गमाप्नोति सर्वनाम्नि पुंस्त्वमुद्देश्यगतमाश्रित्य प्रयोग इति वेदितव्यम्। अकाले=असमये। पुंस्कोकिलाः=पिकाः। काकली-कलकलैः=पञ्चमस्वरैः। दिगन्तम्=हरिदन्तरालम्। बधिरयन्ति=शब्दश्रुतिरहितं कुर्वन्ति। निकरवो व्याप्ता इति यावत्। मिलितेन=संयुक्तेन, मलयानिलेन=मलयवायुना, लोलाः=चञ्चलाः। लवङ्गलताः=देवकुसुमलतयः। दोलन्ति=कम्पन्ते। मधुगन्धेन=मकरन्दपरिमलेन, अन्धानाम्=मत्तानाम्, मधुकराणाम्=द्विरेफाणाम्, व्रातेन=व्रजेन, विधुराः=व्याकुलिताः। माकन्दमञ्जर्यः=रसालपुष्पगुच्छाः। माञ्जुल्यम्=कोमलतामिश्रां सुन्दरताम्। वमन्ति=उद्गिरन्ति। नितान्त-

---

शरद् ऋतु का समय था। पूना के आस-पास असमय में ही कोकिल अपने काकली-कलकल से दिगन्त को उसी प्रकार गुञ्जित कर रहे थे जिस प्रकार वसन्त ऋतु में किया करते हैं। मलयानिल के मिलन से चञ्चल लवङ्ग-लतायें हिल रही थीं। पराग की सुगन्धि के आस्वाद में अन्ध मधुकरों के समूह से कम्पित हो रही आम की मञ्जरियाँ मञ्जुलता को उगल रही थीं।

विरह–क्लान्त–परम–श्रान्त–शून्य–स्वान्त–कान्ताजन–ज्वाला–जटाल–दाव–ज्वलन–जाज्वल्यमानाङ्गारक–कदम्बमिव पाटलपटलमुल्लसति। पुष्पपरागैः पीत–मकरन्द–बिन्दु–सन्दोहैरार्द्रः प्रफुल्लतालिङ्गनैः शीतः कुञ्जसंश्लेषैश्च धीरः समीरः प्रवहति स्म। दुःशकुनरूपत्वादागामि–भय–सूचकेऽपि वसन्तप्रायत्वात् सुखमयेऽ-

विरहक्लान्तः = अतिशयितवियोगखिन्नः, परमश्रान्तः = अत्यन्तं स्थगितः, शून्यस्वान्तः = विरहितचित्ताः, विक्षिप्तप्राय इति यावत्, यः कान्ताजनः = प्रेमिलोक एव ज्वालाजटालः = कीलालालङ्कृतः, दावज्वलनः = वनाग्निः; तेन जाज्वल्यमानानाम् = अतितरां ज्वलताम्, अङ्गारकाणाम् = वह्निदग्धकाष्ठखण्डानाम्, कदम्बमिव = समूहमिव। कान्ताजनेषु दावदहनत्वमारोपितं तदीयश्वासेषु ज्वलदङ्गारत्वनिमित्तमिति विशेषशोभाधायकत्वम्। पाटलपटलम् = पाटलासमूहः। पाटलम् "गुलाबफूल" इति भाषाप्रसिद्धम्। पुष्पपरागैः = कुसुमरजोभिः। पीतः = पीतवर्णः। मकरन्द-बिन्दु-सन्दोहैः = पुष्परसपृषत्समूहैः। आर्द्रः = क्लिन्नः। प्रफुल्लतालिङ्गनैः = विकसितव्रततिसमाश्लेषैः। शीतः = शीतलः। कुञ्जसंश्लेषैः = निकुञ्जसम्पर्कैः। धीरः = मन्दगतिः। समीरः = वायुः। प्रवहति स्म = सरति स्म। दुःशकुनरूपत्वात्, असामयिकत्वेन दुःशकुनत्वम्। आगामिभयस्य = भाविभीतेः, निग्रहात्मकानिष्टस्य, सूचके = बोधके। सुख-

[1] विरह से अत्यन्त सन्तप्त, परम श्रान्त तथा शून्य हृदय वाली कामिनियों की ज्वालाओं से विभूषित दावानल के फूल खिले हुए थे। पराग के सम्पर्क से पीला, पुष्परस की बिन्दुओं के समूह से भींगा हुआ, प्रफुल्लित लताओं के आलिङ्गन से शीतल तथा कुञ्जों के सम्पर्क से धीर समीर (वायु) बह रहा था। असामयिक और इसीलिए अपशकुन होने के कारण आगामी भय के सूचक होने पर भी वसन्तऋतु जैसे मनोरम दृश्य को प्रस्तुत करने से

रस्मिन् समये तोरणदुर्गादनतिदूरं पूर्वस्यां कुसुमवाटिकायां स्वयं महाराष्ट्रराज एकाकी पर्यटति स्म।

तत्र च भ्रमद्भ्रमरैश्चोचुम्ब्यमाना मल्लिकाः पश्यन्, दोदुल्यमानैः कर-पल्लवैरिव पल्लव-तल्लजैः पार्श्व-परिवर्ति-द्रुमान् स्पृशतीर्वासन्तीरवलोकयन्, पुंस्कोकिल-काकली-प्रतिवचनानीव कोकिल-कलरव-कुहूकारानाकर्णयन् अहरहः "जय महाराष्ट्रराज!" इति साम्रेडमाकर्णनेन विहित-तदनुकरण-विरावाभ्यासाः सारिका विभावयन्, अस्मान् परस्पर-ग्रथितं कुसुम-भार-निबिडं

मये = आपातरमणीये। अनतिदूरम् = अन्तिकम्। "दूरान्तिकार्थेभ्यश्च" इति द्वितीया। पर्यटति स्म = विहरति स्म।

भ्रमद्भ्रमरैः = सञ्चरद्द्विरेफैः। चोचुम्ब्यमानाः = समाश्लिष्यमाणाः। मल्लिकाः = मालतीः। दोदुल्यमानैः = उत्क्षिपद्भिः। करपल्लवैरिव = हस्तकिसलयैरिव। पल्लवतल्लजैः = प्रशस्तैः किसलयैः। पार्श्वपरिवर्तिनः = समीपस्थान्, द्रुमान् = वृक्षान्। स्पृशतीः = आश्लिष्यन्तीः। वासन्तीः = माधवीलता। पुंस्कोकिल-काकलीप्रतिवचनानीव = पिकोक्तिप्रत्युक्तीरिव, कोकिल कलरव-कुहूकारान् = पिकमधुरोक्ति कुहूरवान्। आकर्णयन् = शृण्वन्। अहरहः = प्रतिदिनम्। विहित तदनुकरण-विरावाभ्यासाः = कृतत[illegible]ः नशब्दावृत्तीः। सारिकाः = शारिकाः। विभावयन् = अवलोकयन्। परस्परग्रथितम् = अन्योन्यसंसक्तम्। कुसुम-

आपातत रमणीय उस समय में प्रवेश द्वार के समीप पूर्व दिशा में स्थित पुष्प वाटिका [illegible] महाराष्ट्रराज अकेले घूम रहे थे।

उस पुष्पवाटिका में घूमते समय चञ्चल भौंरों से पुनः पुनः चुम्बित होने वाली मालती पुष्प को देखते हुए, कर-पल्लव के समान हिलने पल्लवों से पास के वृक्षों का स्पर्श करती हुई वासन्ती लता का अवलोकन करते हुए, कोकिल की काकली (मधुरध्वनि) के प्रतिवचन की तरह कोयल की कूक को सुनते हुए, प्रतिदिन "महाराष्ट्रराज की जय हो, महाराष्ट्रराज की जय हो" इस जयध्वनि के भूयोभूयः सुनने के कारण उस (जयध्वनि) के अनुकरण करने के लिए बारम्बार उसी तरह का शब्द करने वाली सारिकाओं का निरीक्षण करते

मिलिन्द-व्याप्तं लता-प्रतान-निचयं हस्ताभ्यामुभयतोऽपसार्य निविशमानाम्, अष्टादशवर्षदेशीयाम्, धारित-हारित-परिधानाम्, कण्टकाकर्ष-श्लथद्वसन-दरीदृश्यमानमीषदुन्मिषितमुरोज-युगलमञ्चलेनाऽऽच्छादयितुं यतमानाम्, प्रफुल्ल-कमल-भ्रमेणेव वदनमभिपततो मधुकरान् ससम्भ्रमं सभ्रूभङ्गमीक्षमाणाम्, कपोल पालि लग्न पराग रागेण होलिका महोत्सव-नेपथ्येनेवावतर-

---

भारनिबिडम् = पुष्पभरघनम्। मिलिन्दव्याप्तम्=द्विरेफयुतम्। लताप्रताननिचयम् = प्रततिविस्तृतिसमूहम्। अपसार्य = दूरीकृत्य। निविशमानाम्-प्रविशन्तीम्। अष्टादशवर्षदेशीयाम्=प्रायोऽष्टादश-वर्षवयस्काम्। धारित-हारित-परिधानाम्=परिहितहरितवर्णवसनाम्। कण्टकानाम्, आकर्षण = आकृष्ट्या, श्लथतः = पतमानात्, वसनात्=वासस., दरीदृश्यमानम् = भृशं अवलोक्यमानम्। ईषदुन्मिषितम् = किञ्चिदुन्नतम्। उरोजयुगलम् = कुचद्वन्द्वम्। अञ्चलेन = वसनकोणेन। आच्छादयितुम् = गोपयितुम्। यतमानाम् = यत्नमादधतीम्। प्रफुल्ल-कमल-भ्रमेणेव=विकसितारविन्दभ्रान्त्येव। वदनम् = आननम्, अभि-पततः = समीपमुपसर्पतः। सभ्रूभङ्गम् = भ्रूपातपुरस्सरम्। ईक्षमाणाम्= अवलोकयन्तीम्। कपोलपाली = गण्डस्थलप्रान्ते, लग्नेन=सम्बद्धेन, परागरागेण = पुष्पधूलिलौहित्येन। होलिकामहोत्सवनेपथ्येन =

---

हुए महानुराग ने परस्पर-सम्बद्ध फूलों के भार से घनी ( लदी हुई ) और भौंरों से परिपूर्ण लताओं के कुञ्ज को दोनों हाथों से हटाकर घुसती हुई, करीब करीब अठारह साल की, हरे रङ्ग की साड़ी पहनी हुई, काँटों में फँस जाने के कारण साड़ी के नीचे खिसक जाने से अन्य व्यक्तियों द्वारा देखे जाने योग्य अपने नव विकसित स्तन-युगल को अञ्चल से ढकने में व्यस्त, खिले कमल के भ्रम से अपने मुख पर टूट पड़नेवाले मधुकरों को सम्भ्रम पूर्वक त्यौरी चढ़ाकर देखती हुई, गालों पर लगी पराग की लालिमा से मानो होली मनाने के वेश में आनेवाली, मालतीलता के सम्पर्क से उन्मथित

न्तीम्, मल्ली-वल्ली-सङ्घर्षोन्मथितेनाधररागेणाधिकमधिकं तर्षमिव जनयन्तीम्, शुक-शावक-रावानुकारि-मञ्जु-मन्द-शिञ्जिताम्, गृहीत-कुसुम-स्तबकां कामपि यवन-कामिनीमद्राक्षीत्।

सा तु दृष्ट्वैव महाराष्ट्रराजं द्वाकरमुत्थाप्य शिरो नमयित्वा अंसस्थान-वसन-दर्शित-ताटङ्क-निचया, रसना निःस्वनेनेव किञ्चन वचनीयमिति सूचयन्ती, लोलल्लटन्तिका, सूक्ष्मवसनान्तर्दीप्य-

---

हस्तोदकवत् । अवतरन्तीम् = आविर्भवन्तीम् । मल्ली वल्ली-संघर्षोन्मथितेन = मल्लीलता-घर्षणमर्दितेन । अधररागेण = ओष्ठलौहित्येन । तर्षम् = पानेच्छाम् । कर्षादधरमधुनः । जनयन्तीम् = उत्पादयन्तीम् । शुकशावकरावानुकारि = कीरशिशुशब्दविडम्बकम्, मञ्जु = सुन्दरम्, मञ्जीरयोः = नूपुरयोः, शिञ्जितम् = भूषणध्वनिः, यस्यास्ताम् । 'भूषणानां तु शिञ्जितम्' इत्यमरः । गृहीतकुसुमस्तबकाम् = धृतपुष्पगुच्छाम् । यवनकामिनीम् = म्लेच्छवनिताम् ।

द्वाकरम् = द्विहस्तम् । अंसस्थानात् = स्कन्धतः, वसनात् = वस्त्रात्, दर्शितः = प्रकाशितः, ताटङ्कनिचयः = कर्णभूषणसमूहो यया सा । रसनानिःस्वनेनेव = काञ्चीशिञ्जितेनेव । वचनीयम् = वक्तव्यम् । सूचयन्ती = बोधयन्ती । लोलन्ती = चपला, लटन्तिका = ज्ञानातिशयितचरित्रा, चपलः सा । सूक्ष्मवसनस्य = सूक्ष्मवस्त्रस्य, शुभ्र,

---

अधरोष्ठलाली से अधर पान की तृष्णा को बढ़ाती-सी, मधुर झङ्कार से तोतों के बच्चों की मधुरध्वनि के अनुकारी नूपुरों की ध्वनि से सुशोभित और हाथ में फूलों के गुच्छे लिए आ रही किसी यवनयुवती को देखा।

महाराष्ट्रराज को देखते ही उस यवनी ने दोनों हाथ उठाकर सिर झुकाकर उन्हें प्रणाम किया और साड़ी के खिसक जाने के कारण दृष्टिपथ में आ जाने वाले कर्णालङ्कारों [कुण्डलों] से सुशोभित, करधनी के शिञ्जित से अपने वक्तव्य को प्रकाशित सा करती हुई, लटकते हार से मनोरम,

मात-श्यालपादपा, भद्रकरसम्पुटा, एकतः समवतस्थे ।

महाराजस्तु तां तथाभूतामालक्ष्यैवमालपत् ।

महाराजः—भद्रे ! का त्वम् ? कुतः समायाता ? किमीहसे ? किं विवक्षसि ? कथमेकाकिनी वनेषु भ्रमन्ती न लज्जसे ? न बिभेषि ? रमणीया तवाऽऽकृतिः, वरणीयं वयः—इति कथं न स्वकीये स्वकुटुम्बेन सार्धं वससि ? किमिति चाञ्चल्यमङ्गीकृतवत्यसि ? स्फुटं वद ।

यवनी—महाराज ! अवगम्यतां दिल्लीवल्लभस्य तनयायाः शाह-घटी मामवैतु श्रीमान् । श्रीमती [illegible] चन्द्रशाला-गवाक्ष-जालिकातो

"झूल, जाल" इति प्रसिद्धस्य, अन्तः-मध्ये, वैदीप्यमाना = भासमाना प्रकाशमाना, श्यालपादपा-विरालद्समुदा [illegible] ।

भद्रकरसम्पुटा-कृताञ्जलिः । समवतस्थे = स्थिता ।

आलक्ष्य = अवलोक्य ।

भद्रे ! = कल्याणि । विवक्षसि = वक्तुमिच्छसि । एकाकिनी = असहाया । बिभेषि = भयम् आप्नोषि । आकृतिः = अवयवसंस्थानम् । वरणीयम् = विवाहयोग्यम् ।

सह्यवर्णम् = सर्वकार्येषु सम्मिलन्ती पुत्र्याम् । चन्द्रशालाया =

पतले वस्त्र ( जाल ) के भीतर चमकते हुए चंचल पाओं वाली यह यवन-कामिनी हाथ जोड़कर एक ओर खड़ी हो गई ।

महाराज—तुम कौन हो ? कहाँ से आ रही हो ? तुम्हारी अभिलाषा क्या है ? क्या बोलना चाहती हो ? अकेली इस जङ्गल में घूमने में तुम्हें लज्जा नहीं आती ? (किसी चीज का) डर भी नहीं होता ? देखो—तुम्हारी आकृति बहुत ही मनोहर है और उम्र भी ब्याहने की ( नव यौवन ) है, फिर अपने परिवार के साथ अपने घर ही क्यों नहीं रहती ? तुम आज भी इतना चञ्चल क्यों हो ? ठीक ठीक बताओ ।

यवनी—महाराज ! मैं दिल्ली नरेश की पुत्री की दासी हूँ । राजमहल

घनानीक्षमाणा श्रीचरणानपश्यदिति किमपि सन्दिश्य मां प्रेषितवती। अहञ्च केवलं तदाज्ञा-पालन-व्रतं शिरसा वहन्ती समायाताऽस्मि। कस्या वाऽपरस्याः साहसं भवेद् महाराजस्य समीपे एवमुपस्थातुम् ?

महा०—अपि राजकुमार्याः सहचर्य्यसि ?

सहचरी-[ साभिवादनम् ] आम् , महाराज !

महा०—कच्चित् कुशलिन्यत्र भवती ?

सहचरी—महाराज ! कुतः कुशलम् ?

महा०—किं तत् ?

सहचरी०—महाराज ! अत्यन्तं खिद्यते सा !

---

शिरोगृहस्य, "चन्द्रशाला शिरोगृहम्" इत्यमरः। गवाक्षजालिकाद्वः = वातायनिकारन्ध्रतः। श्रीचरणान् = भवतः। सन्दिश्य = सन्देशं दत्त्वा। तस्याः, आज्ञापालनमेव व्रतम् = नियमम्। वहन्ती = धारयन्ती। अपरस्याः = अन्यस्याः, भवती भवदीयाया वाऽवरोधिन्याः।

---

के चौबारे की खिड़कियों से वन की ओर झाँकते समय राजकुमारी ने श्रीमान् को देख लिया है और इसलिये उन्होंने कुछ सन्देशा पहुँचाने के लिये मुझे आपके पास भेजा है। राजकुमारी की आज्ञा का पालन करना ही मेरा काम है, इसलिए मैं उनकी आज्ञा को शिरोधार्य समझ कर आपके पास आई हूँ। मुझ जैसी दूती को छोड़ कौन सी दूसरी स्त्री हो सकती है जो आपके पास इस प्रकार सहसा आ जाने का साहस कर सके ?

महाराज—अच्छा, तुम राजकुमारी की सेविका हो ?

यवनी सहचरी—( प्रणामपूर्वक ) जी हाँ, श्रीमन् !

महाराज—क्या राजकुमारी सकुशल हैं ?

सहचरी—महाराज ! सकुशल कैसे रह सकती हैं ?

महाराज—क्या बात है ?

सहचरी—महाराज ! राजकुमारी तो आज-कल बहुत ही खिन्न हैं।

महा०—तत्किम् ? किं भृत्या नावहन्ति तदाज्ञाम् ? सत्कारे नियुक्ता न सत्कुर्वन्ति ? समये नोपस्थाप्यते साममीजातम् ? विनय न रक्षन्ति रक्षकाः ? दिल्ली-गमनाभिलाषो वा विकलयति राजकुमारीम् ?

सहचरी—महाराज ! नेदं किमप्याशङ्कनीयम् ।

महा०—तर्हि एतद्देशीय-वायु-जलादिकं न भवति तदनुकूलमिति शिथिला राजकुमारी ?

सहचरी—दीनबन्धो ! नास्ति सोऽपि हेतुः खेदस्य ।

महा०—तर्कि मयैव किमप्यपराद्धम् ?

सहचरी—आः ! शान्तं पापम् ! नैतत्स्वप्नेऽप्याशङ्क्यते आतिथेयेषु कोङ्कणचक्रवर्तिषु ।

---

नावहन्ति = न पालयन्ति । विकलयति = खेदयति ।
शिथिला = खिन्ना ।
आतिथेयेषु = अतिथिषु साधुषु ।

---

महाराज—खिन्नता क्यों ? क्या सेवक लोग उनकी आज्ञा नहीं मानते या उनके सत्कार के लिए नियुक्त अनुचर उनका उचित सत्कार नहीं करते ? या समय पर उन्हें आवश्यक चीजें नहीं मिल पातीं ? अथवा उनके रक्षक औचित्य का निर्वाह नहीं कर रहे हैं ? या दिल्ली जाने की उत्कण्ठा ही उन्हें सता रही है ?

सहचरी—महाराज ! इन स्थितियों का तो नाम भी नहीं लिया जा सकता ।

महाराज—तो क्या यहाँ की जलवायु की प्रतिकूलता के कारण ही राजकुमारी खिन्न हैं ?

सहचरी—नहीं महाराज ! उनकी खिन्नता का यह भी कारण नहीं है ।

महाराज—तो क्या मुझसे ही कुछ अपराध हो गया है ?

सहचरी—आप जैसे अतिथिसेवक कोङ्कण-देश सम्राट् के विषय में तो इस तरह स्वप्न में भी नहीं सोचा जा सकता है ।

महा०–[ क्षणं चिन्तयित्वा ] अथापनयतु मे सन्देहं सहचरी, किमिति खिन्ना राजकुमारी ?

सहचरी–महाराज ! न विद्मः को नाम व्याधिर्धुनोति राजकुमारीम्। साऽस्माभिरतिसावधानतया सेव्यमानाऽपि प्रतिक्षणमनिमिषपात-निरुद्ध-निःश्वास वीक्ष्यमाणाऽपि रोमाञ्चति, स्विद्यति, सीत्करोति, ताम्यति, विलपति, वेपते, उद्भ्रमति, रोदिति, ग्लायति, क्लिश्यति, मुह्यति, मूर्च्छति च। धीरं समीरमासाद्याधिकं खिद्यते, शीतमयूखमालोक्याधिकं तप्यते, कोकिल-कलरवमाकर्ण्य कर्णयोस्तोद्यमानेव कराभ्यां कर्णकुहरं पिधायान्तर्निविशते, अस्माभिर्हास्य-

---

व्याधिः = रोग, व्यथा। विशिष्ट आधिर्व्याधिः, स चात्रत्या मानसिकव्यथैव। अग्रे च लक्षणेभ्योऽपि स्पष्टयति। प्रतिक्षणम् = क्षणे क्षणे। अनिमिषपातनिरुद्धनिश्वासम् = निर्निमेषश्वासरोधपुरस्सरम्। ईक्ष्यमाणा = अवलोक्यमाना। रोमाञ्चति = पुलकं बिभर्ति। धीरम् = मन्दगतिम्। आसाद्य = लब्ध्वा। शीतमयूखम् = हिमदीधितिम्। तप्यते = ज्वरनाति। कोकिलकलरवम् = पिककुहूशब्दम्। कर्णयोः = श्रोत्रयोः। तोद्यमानेव = पीड्यमानेव। कर्णकुहरम् = श्रोत्रशष्कुलीम्। अन्तर्निविशते = अन्तरगाले गच्छति। हास्यमाना = नर्मवचसां गोचरीक्रियमाणा। न हसति = न

---

महाराज—( कुछ देर सोचकर ) अच्छा, तो अब तुम ही मेरी शङ्का को दूर करो। यह बतलाओ कि राजकुमारी किस कारण से खिन्न हैं।

सहचरी—महाराज ! मैं नहीं जानती कि राजकुमारी को कौन सा मनारोग सता रहा है। यद्यपि हम लोग अत्यन्त सावधान होकर उनकी सेवा में लगी रहती हैं और श्वास-प्रश्वास क्रिया को भी रोक कर सर्वदा एकटक दृष्टि से उनको देखती रहती हैं, फिर भी उनके शरीर पर कभी रोमाञ्च हो उठता, कभी पसीना आ जाता, कभी जोरों से सांस लेने लग जाती है, कभी उतावली हो जाती है, कभी विलाप करने लग जाती हैं, कभी कांपने लग जाती हैं, कभी चक्कर खाने लग जाती हैं, कभी रोने लग जाती हैं, कभी हतोत्साह मालूम पड़ती हैं, कभी क्लेश का अनुभव

मानाऽपि न हसति, विविध-विलास-रामणीयकेष्वपि न रमते, पाटलि-पटल-कलिका-मालामपि ज्वलन-ज्वाला-जालावलीमिव वेवेत्ति। किं कथयामि? केवलं दक्षतो वामतश्च परिवर्तनैः, दीर्घ-निश्वासैः, सजृम्भाऽङ्गुलिस्फोटनैश्च सा क्षपां क्षपयति।

महाराष्ट्रराजः [ स्वस्मिन्नेव ] तन् किं मदन-व्याधिरेषः? अस्तु, शृणोमि तावत्।

---

क्नति। विविधेषु = अनेकप्रकारेषु, विलासरामणीयकेषु = क्रीडासौन्दर्येषु। पाटलिपटलकलिकामालाम् = पाटलासमूहकोरकस्रजम्। ज्वलनज्वालाजालावलीम् = दहनशीलाग्निज्वालापङ्क्तिम्। वेवेत्ति = अवधारयति। परिवर्त्तनैः = वलनैः। दीर्घनिश्वासैः = लम्बोच्छ्वासैः। सजृम्भाङ्गुलिस्फोटनैः = गात्रविनामाङ्गुलिमोटनपुरस्सरम्। क्षपाम् = निशीथिनीम्। क्षपयति = यापयति।

---

करती हैं, कभी मोहित हो जाती हैं, और कभी तो मूच्छित भी हो जाती हैं। मन्द पवन को पाकर तो और भी खिन्न हो जाती हैं, चन्द्रमा की चन्द्रिका को देखते ही अधिक क्लेश पाने लग जाती हैं, कोयल की मन्द मधुर काकली को सुनकर तो अपने दोनों कानों को बन्द कर इस तरह भीतर घुस जाती है जैसे उसे सुनने से उनके कानों मे पीड़ा उत्पन्न होने लग जाती हो। हम लोगों के परिहास पर भी उन्हें हँसी नहीं आती, अनेक प्रकार के मनोरञ्जक खेल मे भी उनका मन नहीं लगता, पाटर के फूलों की कलियों की माला को तो अग्निशिखा जैसी समझती हैं। मैं क्या कहूँ! राजकुमारी तो केवल दाँयी-बाँयी करवटें बदल कर लम्बी साँसें भर कर, जँभाई लेकर अङ्गुलियों को फोड़कर किसी प्रकार रात गमाती है।

महा०—( मन ही मन ) तो क्या यह काम-रोग है! अच्छा, और भी सुन लूँ।

सहचरी—महाराज ! सा साञ्जन-वारिधारा-सम्पात-सम्मर्द मलिनौ पाण्डुरौ कपोलौ, ताप-तपन-तप्त-निश्वासाहति-शुष्कमधरम्, कर्पूर-पूर-चूर्ण-मञ्जिम्ना केनचिद् धवलिम्ना कृशिम्ना च समालिङ्गितान्यङ्गानि वहति। कदाचिद् विमनायमाना किञ्चित्पुस्तकमादाय पिपठिषन्त्यपि बाष्प-जलैः पत्राण्याविलयति। कर्हिचिच्चक्षुषी निमील्य विरहमयानि कानिचिच्छन्दांस्याम्रेडते। कदाचन कोणात् कोणं पर्यटन्ती कुड्ये लग्नमानं महाराज-चित्र-फलकमालोकमालोकं बाष्प-बिन्दु-व्रज-व्याजेन धैर्यमिव वमति।

---

साञ्जनस्य = सकज्जलस्य, वारिधारासम्पातस्य = जलप्रवाहपतनस्य, सम्मर्देन = सम्पर्केण, मलिनौ = कज्जलाविलौ। पाण्डुरौ = पीतवर्णौ। ताप एव = कामज्वर एव, तपनः = सूर्यः, तेन तप्तस्य = उष्णीकृतस्य, निश्वासस्य आहतिभिः = ताडनैः, शुष्कम् = नीरसम्। कर्पूर-पूर-चूर्ण-मञ्जिम्ना = हिमवालुकापुञ्ज-क्षोद शोभया। केनचित् = अवर्णनीयेन। धवलिम्ना = श्वैत्येन। कृशिम्ना = दौर्बल्येन। विमनायमाना = उत्का। पिपठिषन्ती = पठितुमिच्छन्ती। बाष्पजलैः = अस्रैः। आविलयति = दूषयति। विरहमयानि = विप्रलम्भशृङ्गारवर्णनपराणि, छन्दांसि = पद्यानि। पारसीके 'शेर'' इत्यभिहितानि। कुड्ये = भित्तौ। बाष्पबिन्दुव्रजव्याजेन = अश्रुकणसमूहच्छद्मना। वमतीव = उद्गिरतीव।

---

सह०—महाराज ! राजकुमारी के दोनों गाल अञ्जन से मिली हुई अश्रुधारा के गिरने से मलिन हो गये हैं, उनका अधरोष्ठ कामज्वररूपी सूर्य से सन्तप्त निःश्वास के आघात से सूख गया है और उनके सम्पूर्ण शरीर में कर्पूर चूर्ण की शोभा की तरह शोभा को उत्पन्न करनेवाली एक वर्णनातीत श्वेतिमा ( उजलापन ) और दुर्बलता छा गई है। कभी उद्विग्न होकर किसी पुस्तक को पढ़ने की इच्छा से हाथ में तो ले लेती हैं पर उनके आँसुओं से उसके पन्ने धुल जाते हैं। कभी कभी आँखें मूँद कर कुछ विरह गीतों को बार-बार गाती हैं। कभी कभी अपने कमरे में इधर-उधर घूमती हुई जब दीवार में लटकते हुये महाराज के चित्र को देखती हैं तो आँसू गिराने के

कहिचन फलकार्पितामेवात्रभवतो मूर्ति सम्बोध्य चिरमालपति, उपालभते, स्तौति, प्रार्थयते, वन्दते च। अथ फलकमिदमवतारयति, करे करोति, वक्षसि धत्ते, निपुणमीक्षते, गाढं चुम्बति, चिरमालिङ्गति, शिरसा च वहति। क्वचन स्वहस्तेनापि श्रीचरणानामिव मूर्तिमालिखति, आत्मनश्च प्रतिमां तद्वामत एव विन्यस्यति, ततश्च क्षणं मोदते, क्षणं हसति, क्षणं विषीदति, क्षणं क्रन्दति, क्षणमालपति, क्षणञ्च विलपति–इति किमिव कथयामि ?

---

नियात्प्रेक्षा। फलकार्पिताम् = चित्रलिखिताम्। उपालभते = उपालम्भं ददाति। 'उलाहना देती हैं।' स्तौति = स्तुतिं करोति। वन्दते = नमस्करोति। अवतारयति = अवरोहयति। वक्षसि = उरसि। धत्ते = धारयति। गाढम् = घनं यथा तथा। मूर्तिम् = बिम्बम्। आत्मनः = स्वस्याः। प्रतिमाम् = मूर्तिम्। विन्यस्यति = स्थापयति। वामाङ्गस्थापनेन हिन्दुधर्मव्यवहारस्वीकरणपूर्वकं पत्नीत्वाङ्गीकरणं व्यनक्ति। क्रन्दति = रोदिति। आलपति = आलापं करोति। विलपति = परिदेवनं करोति।

---

वहाने वे अपने पैरों को ही गिरा देती हैं। कभी कभी तो आपकी चित्र लिखित मूर्ति को ही सम्बोधित करती हुई चिर-काल तक बातें भी करतीं, उलाहना भी देतीं, स्तुति भी करतीं, प्रार्थना भी करतीं और प्रणाम भी करती हैं। फिर बाद में उस चित्र को नीचे उतारकर कभी हाथों में लेतीं तो कभी अपने हृदय पर रखतीं, कभी टकटकी लगाकर देखतीं तो कभी चूमतीं और कभी गले लगातीं तो कभी माथे पर रखती हैं। कभी कभी तो अपने हाथ से ही आपका चित्र बनाकर उसकी बायीं ओर अपना भी चित्र बना डालती हैं और फिर कभी प्रसन्न होती हैं, कभी हँसने लग जाती हैं, कभी खिन्न हो उठती हैं, कभी रोने लग जाती हैं, कभी आलाप करती हैं और कभी विलाप भी किया करती हैं। और मैं कहाँ तक कहूँ ? राजकुमारी की

कुमार्या आदेशो मां मुखरितवानित्यपराधश्चेत् क्षन्तव्यो महाराष्ट्रराजैः।

महाराष्ट्रराजस्तु तां तथाऽभिधाय शिरो नमयित्वा बद्धकर-सम्पुटामेकतः स्थितामालोक्य, रसनायांश्च स्वस्मिन्ननुरागमवधार्य, तत्क्षणमेव प्राप्तावसरेण धैर्यघस्मरेण स्मरेण व्याकुलीक्रियमाणः क्षणं किञ्चिदपि नोक्तवान्। मार-विकार-प्रसार-भार-जर्जरितमाकारञ्च कथं कथमपि कुसुम स्तबकावचयैः कल-कूजित-पूजित-पतत्रि कुल-कलित-शाखाऽनुसन्धानैः, तत्क्षण-त्रोटित-कदली दल-वीजनैः स्वेदापनोदनैश्च निगूढवान्। तां सहचरीन्तु—

---

मुखरितवाम् = बहुभाषणवतीमकृत।

अभिधाय = निगद्य। शिरो नमयित्वा = प्रणम्य, कथनसमाप्तिसूचकमिदम्। बद्धकरसम्पुटाम् = कृताञ्जलिम्। प्राप्तावसरेण = लब्धसन्दर्भेण, धैर्यघस्मरेण = धीरताभक्षकेण। 'भक्षको घस्मरोद्मरः" इत्यमरः। स्मरेण = मदनेन। व्याकुलीक्रियमाणः = विनेतरकता नीयमानः। मारविकारस्य = कामविघ्ने, स्वदादे, प्रसारस्य = प्रसरणस्य, भारेण= आधिक्येन, जर्जरितम् = जीर्णप्रायम्। आकारम् = शरीरम्। कुसुमस्तबकावचयैः = पुष्पगुच्छसङ्कलनैः। कलकूजितेन = मधुररवेण, पूजितेन =

---

आज्ञा के कारण ही मुझे आपसे इतना कहना पड़ा। यदि मेरी कुछ गलतियाँ हुई हों तो कृपया आप क्षमा करें।

सारी स्थिति का वर्णन करने के पश्चात् नतमस्तक एवं करबद्ध मुद्रा में एक ओर खड़ी सहचरी को देखकर और रोशनआरा का अपने प्रति अनन्य प्रेम जानकर महाराष्ट्रराज तत्क्षण ही धैर्यहारक अवसरप्राप्त कामदेव की वेदना से व्याकुल होकर क्षण भर कुछ नहीं बोले। कामवेदना के अत्यधिक प्रसार से जर्जरित अपने स्वरूप को महाराष्ट्रराज ने फूलों के गुच्छे चुनने, कलरव करनेवाली पक्षियों के समूह से सम्बद्ध शाखाओं के देखने और

"त्रायतां महाराजः; त्यक्ष्यति प्राणानत्रभवती यदि न रक्ष्यते श्रीचरणैः"–इत्यभिदधानाम्, "ओम्! निवेदय भवतीमेषोऽहमायामि" इत्यभिधाय विसृष्टवान्।

तस्यां प्रयातायां च चिरं बहुशश्चिन्तयन् मुहूर्तमतिवाह्य, स्वयमपि शनैः शनैस्तोरणदुर्ग–शिरोगृहं सनाथयामास। तत्र च तथाभूतया रसनार्या सादरमुपवेशितः, स्वयं सखीजनेऽपसृते वारं वारं रसनार्या मुखं पश्यन्, करतल–न्यस्त–कपोला रसनारी व्यजिज्ञपद्, यद्

सङ्केन, पतत्रिकुलेन विहगनिवहेन, कलितानाम् = ध्यातानाम्, शाखानाम् = वृक्षावयवानाम्, अनुसन्धानैः = विचारणैः, समवलोकनैरिति यावत्। तत्क्षणम् = तत्कालम्, त्रोटितस्य = भञ्जितस्य, कदलीदलस्य = रम्भापत्रस्य, वीजनैः = व्यजनव्यापारैः। स्वेदापनोदनैः = घर्मबिन्दुदूरीकरणैः। निगूढवान् = गोपितवान्।

अभिदधानाम् = कथयन्तीम्। आयामि = आगच्छामि। "वर्त्तमानसामीप्ये वर्त्तमानवद्वा"। विसृष्टवान् = त्यक्तवान्, गमनाय।

तोरणदुर्गस्य, शिरोगृहम् = चन्द्रशालाम्। स्वयम् = आत्मनैव। अप्रेरित एवेति यावत्। अपसृते = दूरीभूते। विज्ञाताभिप्रायत्वात्सहचरीणां स्वयं दूरीभवनम्। तदुक्तम् "परेङ्गितज्ञानफला हि बुद्धयः"। एतेन सहचरीणामतिनिपुणत्वं विज्ञाकलितम्। करतलन्यस्तकपोलाम् = हस्त-

तत्क्षण तोड़े कदली दल को झेलकर पसीना दूर करने के छल से किसी प्रकार व्यक्त न होने दिया और "रक्षा करें महाराज! यदि श्रीमान् राजकुमारी की रक्षा न करेंगे तो वे प्राणान्त कर देंगी" इस प्रकार अनुनय-विनय करती हुई उस सहचरी को "अच्छा, उनसे जाकर कह देना कि मैं अभी आ रहा हूँ" यह कह कर वहाँ से भेज दिया।

उस सहचरी के वहाँ से प्रस्थान के पश्चात् महाराजराज सोचने-विचारने में कुछ समय व्यतीत कर सिंहद्वार के चौबारे में घुस गये। वहाँ घुसते ही विरहिणी रोशनआरा ने उन्हें आसन पर आदरपूर्वक बैठाया और बाद में वहाँ से रोशनआरा की सहेलियों के चले जाने पर एकान्त में बारम्बार

"भद्रे ! श्रुतवानस्मि सहचरीमुखादखिलं वृत्तान्तम्, तथाऽपि भवत्या मुखादपि शुश्रूषे कोऽयं कथमयं कीदृशश्चायं खेदः ?"—इति ।

सा तु अतरल-तारकेण क्षुण्णपक्ष्मणेक्षणेन क्षणं राजमुखमैक्षिष्ट । ईक्षमाणैव च स्वेद-सलिल-सन्दोहैः स्नपितेव, महाराष्ट्र-मण्डलाखण्डलाय बाष्प-बिन्दु-मौक्तिकावलिमिवोपहरन्ती, श्वास-प्रश्वास-झञ्झावातोज्झित-धैर्या, शोकाङ्कुरैरिव रोम-निकरैर्निगूढांगा, भयेनेवाकम्पत ।

तालिकास्थापितगण्डाम् । व्यजिज्ञपत् = विज्ञापितवान् । शुश्रूषे = श्रोतुमिच्छामि । "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मनेपदम् ।

अतरलतारकेण = अचञ्चलकनीनिकेन । क्षुण्णपक्ष्मणा = अनिमीलितनेत्रलोम्ना । ईक्षणेन = नयनेन । ऐक्षिष्ट = अलोकयत् । स्वेद सलिलसन्दोहैः = घर्म-जल व्रातैः । स्नपितेव = कृतनिर्णेजनेव । बाष्पबिन्दुमौक्तिकावलीम् = अश्रुपद्ललमालिकाम् । उपहरन्ती = ददती । श्वासप्रश्वासयोः, झञ्झावातेन = सवृष्टिकेन पवनेन, अत्र रोदनसहितेन; उज्झितम् = विलुप्तम्, धैर्यं यस्याः सा । शोकाङ्कुरैरिव = खेदोद्गमनैरिव । रोमनिकरैः = लोमचयैः । भयेनेव = भीत्येव ।

उसके मुखमण्डल को देखते हुये करतल पर गाल रख कर बैठी हुई रोशनआरा से उन्होंने पूछा—"भद्रे ! यद्यपि आपकी सहचरी के मुख से मैं सारा वृत्तान्त सुन चुका हूँ तथापि आपके मुख से भी मैं जानना चाहता हूँ कि आपको क्यों और किस प्रकार का कष्ट है ?"

रोशनआरा तो क्षणभर महाराज के मुखमण्डल की ओर टकटकाती ही रह गई । टकटकाते समय ही पसीने के जल से धुले शरीरवाली, आँखों से बहते आँसू की बूँदों से महाराष्ट्रराज के प्रति मोतियों का उपहार-सा समर्पित करती हुई, लम्बी साँस की आँधी से च्युत धैर्यवाली, शोकांकुर-से रहनेवाले रोमपुंजों से जकड़ी वह राजकुमारी मानो भय से ही काँपने लग गई ।

अथ "कथ्यतां, कः क्लेशः कुमार्याः ? किं वाऽभीप्सितम् ?–" इति वदति महाराष्ट्रराजे, सा वेपमानैरङ्गैरिव निवार्यमाणा, मन्मथोन्मथितेन मनसेव मूकीक्रियमाणा, उद्वेल्लितैर्बाष्पैरिव कण्ठे रुध्यमाना, अवहेलितया ह्रियेवावहेल्यमाना, अनासादितचरेण साहसेनेव हास्यमाना, मदन-मदेनेव च मामद्यमाना, न कञ्चन वाचो प्रचारमूरीचकार।

अथ क्रियासमभिहारेण महाराजेन सान्त्व्यमाना, अभ्यर्थ्यमाना च, अञ्चलान्तेन स्वेदैः सह लज्जामिवापसार्य, कदली-दलैः

अभीप्सितम् = अभिलषितम्। वेपमानैः = कम्पमानैः। निवार्यमाणा = निरुध्यमाना। मन्मथोन्मथितेन = कामजर्जरितेन। मूकीक्रियमाणा = मौनं नीयमाना। उद्वेल्लितैः = उच्छलद्भिः। रुध्यमाना= वार्यमाणा। अवहेलितया = तिरस्कृतया। ह्रिया = त्रपया। अवहेल्यमाना = तिरस्क्रियमाणा। अनासादितचरेण = पूर्वमप्राप्तेन। साहसेन = मानसिकेन बलकर्मणा। हास्यमाना = उपहस्यमाना। मदनमदेन = कामजविकारेण। मामद्यमाना = अतितरां माद्यन्ती। वाचां प्रचारम् = वाक्प्रसारम्। ऊरीचकार = स्वीचकार।

क्रियासमभिहारेण = पौनःपुन्येन। सान्त्व्यमाना = साम्ना प्रतिबोध्यमाना। अभ्यर्थ्यमाना = प्रार्थ्यमाना।

उसके बाद जब महाराष्ट्र राजा ने पूछा—"कहिये, आपको कौन-सी तकलीफ है ? आप क्या चाहती हैं ?" तो राजकुमारी ने कुछ उत्तर ही नहीं दिया, ऐसा लग रहा था कि उसका काँपता हुआ शरीर उसे बोलने से रोक रहा था, कामवेदना-व्यथित चित्त ने उसे मूक बना दिया था, अश्रुपात से उसका गला रुन्ध गया था, लज्जा से तिरस्कृत हो रही थी, अभूतपूर्व साहस करने के कारण उसका लोग उपहास कर रहे थे और काम-मद से अधिकाधिक उन्मत्त हो गयी थी।

फिर जब महाराज ने बारम्बार सान्त्वना पूर्वक पूछा तो अपने आँचल से पसीने के साथ-साथ लज्जा को भी पोंछ कर, पंखे के रूप में कदली-दल

योञ्चन-व्याजेन किञ्चनावशिष्टं धैर्यमप्युद्धूय, बाष्पापहरण-कैतवेन विवेकमपि च सम्मर्द्य, कर्णार्पित-कर्णिकार-पापत्यमान-मधुकर-निकर-विधूनन-च्छलेन निर्मक्षिकमिव विदधती, परितोऽवलोकन-च्छद्मना वास्तुदेवी-श्रवणमिवाऽऽशङ्कमाना, वक्तुकामाऽपि स्वाशयं प्रकटयितुं यतमानाऽपि स्फुरितोत्तराऽपि च विरह-ज्वालावलीढ-वसनया प्रकाशमनाऽऽजिगमिषन्त्या भगवत्या सरस्वत्या

अञ्चलान्तेन = वसनप्रान्तेन। स्वेदैः सह = घर्मबिन्दुभिः साकम्। लज्जामपसार्य = त्रपां दूरीकृत्य। सहोत्थितः = सहोदिताः। कदलीदलवीजन-व्याजेन = रम्भापत्रहिल्लोलनच्छद्मना। अवशिष्टम् = शेषम्। उद्धूय = दूरीकृत्य। बाष्पापहरणकैतवेन = अश्रुमार्जनव्याजेन। विवेकम् = विचारम्। सम्मर्द्य = विनाश्य। कर्णयोः = श्रोत्रयोः, अर्पितेषु = स्थापितेषु, कर्णिकारेषु = तन्नामकपुष्पेषु, पापत्यमानानाम् = बार बार पततान्, मधुकराणाम् = भ्रमराणाम्, निकरस्य = समूहस्य, विधूननच्छलेन = दूरीकरणव्याजेन। निर्मक्षिकम् = जनसञ्चारशून्यम्। वास्तुदेवीश्रवणम् = देहल्यधिष्ठातृदेवीश्रुतिम्। आशङ्कमानेव = शङ्कमानेव। एतेन वक्तव्यस्य परमगोप्यत्वं ध्वनितम्। वक्तुकामाऽपि = कथयितुमभिलषन्त्यपि। स्वाशयम् = स्वाभिप्रायम्। प्रकटयितुम् = व्यक्तीकर्तुम्। यतमाना = चेष्टमाना। स्फुरितोत्तरा = चञ्चलितोत्तरोष्ठा। किञ्चिदुक्तुं प्रवृत्तेव। विरहज्वालावलीढवसनया = वियोगवह्निज्वालाकवलितवाससा। प्रकाशम् = स्फुटम्। अनाजिगमिषन्त्या = आगन्तुमनभिलषन्त्या। निर्वसनत्वादिति

के झेलने से कुछ अवशिष्ट धैर्य को भी उड़ा कर, आँसू पोंछने के बहाने अपने विवेक को भी उड़ा कर, कानों में लटकते कर्णिकार की कलियों पर टूट पड़ने वाले मधुकरों के उड़ाने के छल से उस स्थान को एकान्त-सा बनाकर चारों तरफ देखने के कपट से वास्तुदेवी के सुन लेने की आशङ्का-सी करती हुई बोलने की इच्छा रखती हुई भी, अपने अभिप्राय को प्रकट करने के लिए चेष्टा करती हुई भी, फड़कते अधरोष्ठ वाली भी वह मौन ही रही, मानो विरहानल से उसकी साड़ी के जल जाने के

परतश्च निश्वासानुपातिभिर्मधुपैरिव परिपीतायाम्, खेद-सागर इव निमग्नायाम्, बाष्प प्रवाहेणेव क्षालितायाम्, मदन-दहनेनेव दग्धायाम्, नख-विलेखैरिव कर्तितायाम्, दीर्घोच्छ्वासैरिव विधूतायाम्, महाराजवचनैरिव विलुण्ठितायां च त्रपायाम्, चक्षुषी प्रमृज्य, अभिमुखीभूय, वक्तुमारभत रसनारी—

महाराज! सर्वं विदितमार्यस्य, केवलं पुनरुक्तिरियं भविता

---

निश्वासानुपातिभिः = निश्वासपश्चाद्गतिभिः। परित. पीतायाम् = आस्वादितायाम्। इवेनोत्प्रेक्षा। एवमग्रेऽपि। निमग्नायाम् = ब्रुडितायाम्। बाष्पप्रवाहेण = अश्रुपूरेण। क्षालितायामिव = धौतायामिव। मदनदहनेन = कामवह्निना। दग्धायामिव = प्रज्वलितायामिव। नखविलेखैः = नखविदारणैः। कर्तितायामिव = छेदितायामिव। विलुण्ठितायाम् = बलादपहृतायाम्। त्रपायाम् = लज्जायाम्। अभिमुखीभूय = सम्मुखीभूय।

सर्वं विदितमार्यस्य, एतेन विज्ञाताशयोऽपि महाराजो बलान्मदानन्वच्छ्रोतु वाञ्छति निखिलम्, तदिदञ्च महाराजस्य पुरुषत्वञ्चेति ध्वनयति प्रथमवाक्येनैव रसनारी। एषा हि पर विदुषी कवयित्री चेतीतिहासेषु ख्यातम्। नारीणां च विदुषीणां वचनं व्यङ्ग्यबहुलं भवतीति न तिरोहितम्— "विजृम्भितं यस्य किल ध्वनेरिदं विदग्धनारीवचनं तदाकरः।" इति श्रीहर्षोक्तिवेदिनामिति यत्किञ्चिदेतत्। पुनरुक्तिः = द्वितीयवारं कथनम्।

---

तदनन्तर जब रोशन आरा की लज्जा निश्वास के अनुगामी मधुकरों द्वारा परिपीत सी हो गई, खेद-सागर में डूब-सी गई, अश्रुधारा से धुल सी गई, कामानल से जल सी गई, नख-विलेखन से कट-सी गई, दीर्घश्वास से उड़-सी गई और महाराजराज की वाणी से अपहृत-सी हो गई तब उसने अपनी आँसूभरी आँखें पोंछकर महाराजराज के समक्ष कहना शुरू किया—

"महाराज! श्रीमान् को तो सब कुछ ज्ञात ही है, मेरा कथन तो पुन·

मदुक्ति, तथाऽपि वार वारमापृच्छ्यमानाऽपि यदि वाच यच्छेय प्रत्युत्तर च न प्रयच्छेय तत्परमापराधिनी स्यामिति निवेदयामि यत् महाराज एव कारण ममाऽऽधीनाम्। न शोभते महाराजे एव वनिता-जन-वञ्चन व्यर्थ-मर्यादा-विकत्थन च।

महाराजस्तु ईदृशीं भङ्गीमाकर्ण्य, दिल्लीश्वर-दुहितुर्लोलताम्, निर्भीकताम्, अभीरुताम्, चटुलताम्, चतुरताम्, कविताञ्च

---

मदुक्ति = मत्कथनम्। मदुक्तिरेव सहचरीमुखादधिगता भवद्भिरिति तामेव कथयिष्यामि नान्यदिमपीति व्यनक्ति। वाच यच्छेयम् = मौनिनी भवेयम्। प्रत्युत्तरम् = प्रतिवाचिकम्। न प्रयच्छेयम् = न प्रदद्याम्। आधीनाम् = मानसिकीना व्यथानाम्। वनिताजन वञ्चनम् = नारी जन प्रतारणम्। व्यर्थमर्यादाया = निष्प्रयोजनधार्मिकबन्धनस्य, विकत्थनम् = श्लाघनम्, धर्मरक्षणासुक्तिः श्लाघामानम्, विजनजनसंदनारण हि सर्वतो बलीयान् धर्म, स नानुष्ठीयते भवता।

भङ्गीम् = कथनप्रकारम्। लोलताम् = चपलताम्। निर्भीकताम् = निर्भयताम्। अभीरुताम् = कामुकत्वम्। "कम्र कामयिताऽभीरु कमन कामन ऽभिक" इत्यमर। चटुलताम् = चञ्चलताम्। चतुरताम् = कौश

---

दशि-मान होगा, फिर भी आपके बारम्बार पूछने के बाद भी यदि आपको उत्तर न देकर मैं मौन रह जाऊँगी तो मेरा बहुत बड़ा अपराध माना जाएगा, इस लिए मैं निवेदन कर रही हूँ—मेरी मनोव्यथा का कारण महाराज ही हैं। एक ओर तो वनिताओं की इस प्रकार की वञ्चना और दूसरी ओर धर्मरक्षण की झूटी श्लाघा महाराज को शोभा नहीं दे रही है।

राजकुमारी की इस प्रकार की वचन भङ्गी सुनकर उसकी चपलता, निर्भीकता, कामुकता, चटुलता, चतुरता और बोलने की कला पर विचार

विभावयन् पुनरुवाच—"भद्रे! विशकलय्य कथ्यताम्, कोऽनाचारः प्रादर्शि जनेनैतेन ?"

रसनारी—महाराज! किमिवाऽऽच्छन्दयसि? विचित्रास्तव मायाः, विलक्षणास्तव घटनाः। यदा यदा मां साक्षात्करोषि तदा तदाऽनया तु मूर्त्याऽऽचारं विनय मर्यादामेव च रक्षसि, किन्तु उत्थाय प्रस्थितोऽपि मायामय्येव मूर्त्या चक्षुषोरग्रत एव वर्वर्त्सि। अहह! साहचर्य्यमेव न त्यजसि, सहैव पर्य्यटसि, सहैव भुङ्क्षे, सहैव च शेषे। निद्रायामपि मम कदाचिदंशुकं स्पृशसि, कर्हिचित् कपोलयोः

---

रूम्। कविताम् = कवनशक्तिम्। विभावयन् = विचारयन्। अनाचारः = दुर्व्यवहार। प्रादर्शि = प्रदर्शित।

आच्छन्दयसि = मोहयसि, अनुरुणत्सि। मायाः = मोहनप्रकाराः। घटनाः = कार्याणि। साक्षात्करोषि = पश्यसि। मूर्त्या = आकारेण। आचारम् = व्यवहारम्। विनयम् = नम्रताम्। मर्यादाम् = धार्मिकसीमानम्। मायामय्या = वशीकरणशक्तियुतया। वर्वर्त्सि = अतितरां तिष्ठसि। पर्य्यटसि = भ्रमसि। अंशुकम् = वसनम्। अपहरसि = प्रोञ्छसि।

---

करते हुए महाराणा ने कहा—"भद्रे! साफ-साफ बतलाओ—मैंने कौन सा दुर्व्यवहार किया है?"

रोशनआरा—"महाराज!" आप मुझे मोहित क्यों कर रहे हैं! आपकी माया और आपकी क्रिया विधि विलक्षण हैं। जब जब आप मुझे देखने आते तब तब तो आप अपनी इस आकृति से आचार, विनय एवम् मर्यादा का पालन ही किया करते हैं, परन्तु जब मेरे पास से उठ कर चल देते हैं तब तो आप अपनी मायामयी प्रतिमा को मेरी आँखों के सामने ही छोड़ जाते हैं। अहा! आप मेरा साथ ही नहीं छोड़ते, साथ-साथ घूमते हैं, साथ साथ खाते हैं और साथ-साथ सोते भी हैं। कभी-कभी नींद में भी आप मेरी साड़ी छू बैठते हैं, कदाचित् दोनों गालों का

रवेदानपहरसि। केयं चातुरी यदेकया मूर्त्या मर्य्यादाया ध्वजं वहसि, परया चाचिन्तनीयमाचरसि! हन्त! कुत आयासि? मुद्रितं कवाट-युगलमपि नोद्घाटयसि, शृङ्खलामपि न चालयसि, सहचरीभिरपि नेक्ष्यसे, अनन्य-श्राव्यमालपसि, निभृतमेव वहसि, चित्रं चित्रं चित्रगतोऽपि च स्मयसे। अवलोकमवलोकं तवैतां मायामत्यन्तं बिभेमि, खिद्ये, उन्माद्यामि च। को वा न मुह्येदीक्षमाण ईदृशानि विलक्षणानि इन्द्रजालानि? तत् समये समायातोऽसि, निवेदितवत्यस्मि निखिलमितिवृत्तम्। साम्प्रतन्तु न शक्नोमि जीवि-

---

मर्यादाया ध्वजम् = धार्मिकतीभ्नो वैजयन्तीम्। परा धार्मिकतां प्रकटयसीति यावत्। अचिन्तनीयम् = अविचारणीयम्, मुद्रितम् = पिहितम्, कवाट-युगलम् = कपाटद्वयम्। 'क(वा)पाटमररं तुल्ये'' इत्यमरः। शृङ्खलाम् = अररबन्धनदाम. न चालयसि = न हिल्लोलयसि। कपाटोन्मुद्रणार्थं शृङ्खला सञ्चाल्य शब्दयन्ति जना इति लौकिकम्। अनन्यश्राव्यम् = अनितरश्रोतव्यम्। गुह्यभाषणमिति यावत्। निभृतम् = गुप्तम्। स्मयसे = किञ्चिद्धससि। खिद्ये = खेदिनी भवामि। इन्द्रजालानि = मायिकानि कार्याणि। इतिवृत्तम् = पूर्ववृत्तम्। जीवितुम् = प्राणान् धर्तुम्।

---

पसीना पोंछ देते हैं। यह कौन सी चतुरता है कि एक स्वरूप से तो धर्मध्वज उठाये हुए हैं और दूसरे स्वरूप से ऐसा काम किया करते हैं जिसके बारे में कोई सोच भी नहीं सकता! हाय! आप कैसे मेरे पास चुपके से आ जाया करते हैं कि ये किवाड़ियाँ भी बन्द ही रह जाती हैं, सिकड़ी भी नहीं खट-खटाती, मेरी सहेलियाँ भी आपको नहीं देख पातीं, एकान्त वार्तालाप भी किया करते हैं और छिपे भी रहते; और सबसे आश्चर्य की बात तो यह है कि चित्रगत होने पर भी आप मुस्कराया करते हैं। आपकी इस माया को बारम्बार देख कर मैं डरती भी हूँ, खिन्न भी होती जा रही हूँ और यदा-कदाचित् उन्मत्त भी हो जाया करती हूँ! इस तरह के विलक्षण इन्द्रजाल को देख कर कौन ऐसा व्यक्ति होगा जो मोहित नहीं होगा? अब ठीक समय पर यहाँ आ गए हैं,

तुमिति पश्यत एव तव प्राणांस्त्यजामि। स्मरणीयाऽहम्, कोऽप्यप-राधश्चेत् भ्रमविहितः स क्षन्तव्य-इत्युक्त्वाऽञ्चल-प्रान्तेनाऽऽत्मानमुद्बद्धुमिव यतमानां करे धृत्वा सान्त्वयन्, शीतलयंश्च पुनराह महाराष्ट्रराजः—

भद्रे! मुधैव मामुपालभसे। यदा गम्भीरं निरीक्षिष्यसे, परीक्षिष्यसे च, तदा स्पष्टं समीक्षिष्यसे यन्ममाणुरपि दोषो नासकीनः। श्रीमत्या एव हृदयम्, मनः, वाञ्छा, यौवनम्, कामः, रागश्चात्रापराध्यति। धन्यमात्मानं मन्ये, यच्छ्रीमती दिल्ली-

स्मरणीया = स्मृतिपथमानेतव्या। प्राणत्यागानन्तरं दर्शनासम्भवात्। भ्रमविहितः = भ्रान्तिकृत। उद्बद्धुम् = पाशीकर्तुम्। सान्त्वयन् = सामवचांसि प्रयुञ्जानः। शीतलयन् = शिशिरयन्।

मुधा = व्यर्थम्। उपालभसे = उपालम्भं ददासि। निरीक्षिष्यसे = द्रक्ष्यसि। परीक्षिष्यसे = विचारयिष्यसि। समीक्षिष्यसे = आलोचयिष्यसि। अणुरपि=लघुतमोऽपि। वाञ्छा=अभिलाषः। यौवनम्=तारुण्यम्। रागः=प्रेम। अपराध्यति=अपराधहेतुर्भवति। धन्यम्=अतिश्रेष्ठम्। गर्वम्=

मैं सारी स्थिति बतला ही चुकी हूँ। अब मैं जी नहीं सकती हूँ, इसलिए आपके समक्ष ही मैं अपने प्राण छोड़ रही हूँ। यदाकदाचित् आप मेरी याद करेंगे और यदि भ्रमवश मुझ से कोई अपराध हुआ हो तो कृपया क्षमा करेंगे"—यह कह कर अपने आँचल के फन्दे में अपना गला देना ही चाहती थी कि महाराष्ट्रराज ने उसका हाथ पकड़ लिया और सान्त्वना देते हुए पुनः उससे कहा—

भद्रे! तुम व्यर्थ ही मुझे उपालम्भ दे रही हो। जब तुम गम्भीर विचार विमर्श करोगी तो तुम्हें स्पष्ट रूप में ज्ञात हो जाएगा कि मेरा कुछ भी दोष नहीं है। दोष तो तुम्हारे हृदय, मन, अभिलाष, यौवन, काम और प्रेम का है। मैं आज अपने को धन्य मान रहा हूँ, कि पर्वतोन्दुर (पहाड़ी चूहा) के रूप में (दिल्ली सम्राट् से) उपाधि प्राप्त करने के बावजूद भी तुम दिल्लीसम्राट् की नन्दिनी आज मुझसे इतना अनुरक्त हो। मैं समझता

वल्लभ-नन्दिनी गर्वमपहाय पार्वतोन्दुरनाम्ना प्रसिद्धिं गमितेऽपि मय्यनुरक्तवती। आनृण्यं चास्यानुग्रहस्य मन्ये न कदाऽप्युपयास्यामि, परमिदमत्र विभावनीयम्-पित्रा अप्रदीयमाना यं कञ्चिदेवाङ्गीकुर्वती व्यभिचारिणी वचनीया च भवति वदावदानाम्। मातापितृभ्यामदत्तामात्मसात्कुर्वंश्च 'लम्पटः' इति निन्द्यते। तदाज्ञा चेदत्र भवतीमहं सादरं स्वसेनया रक्ष्यमाणां कुशलेन तातभवनं प्रापयामि, तातेनानुमता च मां सूचयिष्यसि। मदपेक्षयाऽप्यतिसुन्दरम्, अतिकमनीयम्, अतिसम्पदम्, अतिप्रार्थनीयम्, तुरुष्काऽऽरब्य पार-

अभिमानम्। अनुरक्तवती=प्रणयं कृतवती। आनृण्यम् = ऋणशून्यत्वम्। अनुग्रहस्य = कृपायाः। विभावनीयम् = विचारणीयम्। अप्रदीयमाना = अवितीर्यमाणा। अङ्गीकुर्वती = स्वीकुर्वती। व्यभिचारिणी = परपुरुषरता। वचनीया = निन्दनीया। वदावदानाम् = कथयितॄणाम्। "वदो वदावदो वक्ता।" इत्यमरः। आत्मसात्कुर्वन्=स्वाधीनतां नयन्। लम्पटः=परस्त्रीरतः, कामुकः। अनुमता = आज्ञप्ता। सूचयिष्यसि = बोधयिष्यसि। अतिसुन्दरम् = अत्यन्तरूपिणम्। अतिकमनीयम् = अतितरामर्थयितव्यम्।

हूं कि तुम्हारे इस अनुग्रह के ऋण से मैं अपने को कदापि मुक्त नहीं कर सकूँगा। किन्तु इस प्रसङ्ग में इतना विचार-विमर्श कर लेना चाहिए—पिता के द्वारा (विवाह में) समर्पित हुये बिना ही यदि कोई स्त्री किसी व्यक्ति को अपने पति के रूप में स्वीकृत कर लेती है तो लोग उसे व्यभिचारिणी तथा निन्दित स्त्री कहा करते हैं और स्त्री के माता-पिता द्वारा प्रदान किये बिना ही किसी स्त्री को आत्मसात् कर लेने वाला पुरुष भी 'लम्पट' कहा जाता है और लोग उसकी निन्दा किया करते हैं। अतः यदि तुम्हारी आज्ञा हो तो मैं आदर पूर्वक अपनी सेना के संरक्षण में तुम्हें पिता के पास भेजवा दूँ और यदि वहाँ तुम्हारे पिता की अनुमति तुम्हें मिल जाय तो तुम मुझे सूचना देना। यदि अनुमति नहीं मिली तो मुझसे भी अधिक सुन्दर, अत्यन्त आकर्षक, अत्यन्त धनवान्, सुन्दरियों द्वारा अत्यन्त अभिलषित तुर्क अरब

स्यादिदेश राजकुमारेषु वा अन्यतमं वरं वरयिष्यसि। मा स्म अकृतार्थमात्मानं मंस्थाः। यैः पुण्यबलैर्दिल्लीवल्लभकुले जाताऽसि, तैरेव कञ्चन चक्रवर्ति-कुमारं वासन्त-वासन्तीव सहकारं वरयिष्यसि।

एवमालपद्भ्यामेव ताभ्यामन्वभावि कश्चन धूमगन्ध इव। यावच्चेतस्ततः पश्यतस्तावद् गवाक्षद्वारेण प्रविशन् शुण्डिशुण्डादण्ड इव प्रचण्डो धूमोऽवलोकितः। यावच्च तद्विचिन्तयितुं यतते; तावन्

---

वरयिष्यसि = स्वीकरिष्यसि। अकृतार्थम् = अपूर्णमनोरथम्। वासन्त-वासन्तीव = वसन्ते गृहीतजन्मा मालतीव। सहकारम् = रसालम्। उपमा।

एवं धर्ममनस्कत्वगुणवशेन शिववीरेण प्रत्याख्याता रसनारी, किन्तु न सर्वथा प्रार्थ्यमानायास्तिरस्कारोऽपि विधेयः, "स्त्रीणां वरमनुस्मरन्, रामाया जातरामाया प्रशस्ता हस्तधारणा" इत्यादिवचनेभ्य इति बुबोधयिषुः, अमङ्गलमयश्शस्यश्च भावि किञ्चनेति दुःशकुनं प्रदिदर्शयिषुः, रसनार्याः परमभिप्रायमालिङ्गन् दैवप्रेरितमिति च समर्थयितुमिच्छुरग्रेतनं ग्रन्थं निगदति—

अन्वभावि = अनुभवगोचरीकृतः। अनवलोकितत्वादिवः।। पश्यतः = अवलोकयतः। प्रविशन् = गेहमागामन्। शुण्डिशुण्डादण्ड इव = करिकरदण्ड इव। प्रचण्डः = अत्युत्कटः। विचिन्तयितुम् = कुत इति विवे-

---

एवम् पारसीक देशों के राजकुमारों में से किसी को चुन लेना। अपने को अकृतार्थ मत समझो। जिस परमपुण्य के प्रभाव से तुमने दिल्लीसम्राट् के कुल में जन्म लिया है उसीके प्रभाव से तुम उसी प्रकार किसी चक्रवर्ती के सुपुत्र (या किसी चक्रवर्ती राजकुमार) को प्राप्त करोगी जिस प्रकार वसन्त ऋतु में उत्पन्न होने वाली मालती लता (मञ्जरित) आम्रवृक्ष को प्राप्त करती है।

उपर्युक्त रीति से दोनों आपस में बातचीत कर ही रहे थे कि उन्हें धूएँ की गन्ध लगी। जब इधर उधर वे दोनों देखने लगे तो देखा कि खिड़की के माध्यम से हाथी की सूँड की तरह प्रचण्ड धूमलेखा घर में प्रवेश कर रही थी। उसे देख कर दोनों तर्क-वितर्क कर ही रहे थे कि

'अग्निरग्निरग्निः, वह्निर्वह्निर्वह्निः, ज्वाला ज्वाला ज्वाले'ति प्रचण्डोऽश्रावि क्षुभितानामिव दौर्गिकाणां कोलाहल। तत्कोलाहलश्रवणसमकालमेवात्युद्विग्ना रसनारी त्रायस्व त्रायस्वेति वदन्ती महाराजं बाहुलताभ्यां गाढमवेष्टयत्। महाराजोऽपि तां तथा भीत-भीतां किञ्चिदुदञ्चिताभ्यां कुचाभ्यां वक्षःस्थलं पीडयन्तीं बाहुपाशवेष्टितग्रीवां सवेपथुं गाढमाश्लिष्टामवलोक्य, मा भैषीरित्यभिधाय कराभ्यां क्रोडे उत्थाप्य, सपदि द्वारदेशान्निरसृत्य बहिरायात। सहचर्योऽपि च कान्दिशीका भय-भ्रान्त-नयना 'भट्टारक! भट्टारक! भट्टिनि!

---

चयितुम्। प्रचण्ड॰ = बहुलाभूतः। क्षुभितानाम्=व्याकुलानाम्। भयभ्रान्तानामिति यावत्। कोलाहल॰ = कलकलः। अत्युद्विग्ना = अतितरां भीता। त्रायस्व त्रायस्व = पाहि पाहि। बाहुलताभ्याम् = भुजवल्लतीभ्याम्। रूपकम्। अवेष्टयत् = आच्छादयत्। उदञ्चिताभ्याम् = उन्नताभ्याम्। वक्षःस्थलम् = उरःस्थलम्, महाराजस्य। पीडयन्तीम् = आनन्दवर्षिणीं पीडामुद्भावयन्तीम्। बाहुपाशवेष्टितग्रीवाम् = भुजबन्धयन्त्रितशिरोधराम्। सवेपथुम् = सकम्पाम्। मा भैषीः = भयं न विधेहि। क्रोडे = भुजद्वयमध्ये। कान्दिशीकाः = भयद्रुताः। भयभ्रान्तनयनाः = भीत्यु

---

"अरे रे आग लग गई! आग लग गई!" इस तरह का संक्षुब्ध दुर्गरक्षकों का भयङ्कर कोलाहल सुनाई पड़ा। कोलाहल सुनते ही रोशनआरा ने "बचाइये महाराज बचाइये!" कहती हुई शिवाजी को दोनों बाहों से आलिङ्गित कर लिया। महाराज ने भी अत्यन्त सन्त्रस्त, अल्प विकसित स्तनद्वय से अपने वक्षःस्थल को दबाने वाली और गले को बाहुपाश से वेष्टित करने वाली रोशनआरा को कम्पन पूर्वक गाढालिङ्गन करती हुई देख कर, "डरो मत, डरो मत!" कह कर अपने दोनों हाथों से उसे अपनी गोद में उठा लिया और झट से बाहर निकल आये। तत्पश्चात् रोशनआरा की उन्नस्वर से सन्त्रस्त और डर से घूमती आँखों वाली

भट्टिनि''–इत्युच्चैः प्लुतेनेव स्वरेणाऽऽकारयन्त्यस्तत्रैव समागमन्।

तावदुद्धूतमकृशं कृशानुमालोक्य दीर्घिकाः सर्वेऽपि यौगपद्येन कृतोद्योगा जलयन्त्रैः शमयाम्बभूवुः।

ततस्तु गृहीतकण्ठां रसनारीमालोक्य, "आः! कथमाश्लिष्ट एवास्मि यवनराज-तनयया"–इति तदभिमुखः 'एष जनः'–इत्यभिधाय, अनेकपुरुष-दर्शनेन लज्जमाना झटिति निर्दिष्ट-गृहे प्रविष्टां

---

द्घूर्णमाननेत्राः। प्लुतेन = विमानिकेण। आकारयन्त्यः = आह्वयन्त्यः।

एना कथा समुपस्थाप्य सर्वोऽप्ययमेतत्. शिवराजचारकीकरणादिरूपो दुर्यशोव्रातो रसनारीस्नेहजन्मेति बोधयति। दिल्लीगमन-बन्धिरवादावप्यय-मेवानुरागः कथोपकथनादिश्चान्तरङ्गीभूतो हेतुरिति विवेचनीयं सुधीभिः।

उद्धूतम् = उत्थितम्। अकृशम् = अदुर्बलम्। सुपुष्टमिति यावत्। कृशानुम् = हिरण्यरेतसम्। यौगपद्येन = एककालम्। कृतोद्योगाः = विहितश्रमाः। जलयन्त्रैः = वह्निशामनैर्धाराजनकैर्यन्त्रैः। "फायर ब्रिगेड" इति विदेशीयभाषाशब्दस्तद्वाचकः।

आश्लिष्ट एव = आलिङ्गित एव। न ज्ञानपूर्वकमिदं वृत्तमिति प्रदर्शयन् नायकोदात्तता रक्षति। एष जनः = अयं मनुष्यव्रातः, अवलोकयतीति गम्यमाना क्रिया। निर्दिष्टगृहे = पूर्वप्रदर्शितसद्मनि।

---

सहेलियाँ भी "भट्टारक, भट्टारक! भट्टिनी, भट्टिनी!" इस तरह पुकारती हुई वहीं आ पहुँचीं।

उस समय तक दुर्गरक्षक भी उस प्रचण्ड अग्निज्वाला को 'फायर ब्रिगेड' की सहायता से बुझा चुके थे।

तत्पश्चात् गले में लटकी हुई रोशनआरा को देख कर "आः! अरे तक मैं यवनराज की सुपुत्री द्वारा आलिङ्गित ही हूँ!" यह सोचकर रोशनआरा की ओर देखते हुये महाराज द्वारा "अरे रे! बहुत लोग हम दोनों को ऐसी दशा में देख लेंगे" ऐसा कहे जाने पर रोशन आरा अनेक पुरुषों द्वारा देख लिये जाने के कारण जब महाराज निर्दिष्ट कमरे में घुस गई तब

राजकुमारीं त्यक्त्वा, महाराजः सोपानैर्नीचैरवातरत्। तत्र च "महाराज! आकस्मिकोऽयमज्ञात-कारणो ज्वालाजालः सञ्जातो जातवेदसः, तदमङ्गलमिव सूचयति, सूचयति चामङ्गलमेव अकाल-कुसुमोद्गमः। तस्मात् सपदि ज्योतिर्विद देवशर्माणं पण्डितं दृष्ट्वा शान्तिरस्य काचन विधेया, फलं च प्रष्टव्यम्" इत्यभिदधत आत्मीयानालोक्य, स्वयमेवैकाकी सहचरान् प्रतिनिवर्त्य, देवशर्मणः साक्षात्काराय हनुमन्मन्दिरमयासीत्। दुर्गद्वाराद् बहिर्निर्गतमात्र एव च कांश्चिद् दूरत आयातांश्चरानद्राक्षीत्। तैश्कम्—

महाराष्ट्र-विश्वम्भरेश्वर! वीराणां महारण्येनेव सिन्धुराणां

---

सोपानैः = अवरोहणीभिः। आकस्मिकः = सहसा भवः। अज्ञातकारणः = अनवगतहेतुकः। जातवेदसः = तनूनपातः। अकालकुसुमोद्गमः = असमयसुमसमुद्भूतिः। फलम् = भाविशुभाशुभम्। निर्गतमात्रः = निष्क्रान्तप्रायः। चरान् = स्पशान्।

महाराष्ट्रविश्वम्भरायाः = महाराष्ट्रभूमेः, ईश्वर! = अधिनायक!। "रसा विश्वम्भरा स्थिरा" इत्यमरः। महारण्येनेव = अरण्यान्येव।

---

महाराज सीढ़ियों के माध्यम से नीचे उतर गए। वहाँ "महाराज! एकाएक यह अग्नि की ज्वाला धधक उठी, इसके कारण का परिज्ञान नहीं हो रहा है, इससे किसी अमङ्गल की सूचना मिल रही है। यह अकाल कुसुम प्रसव भी अमङ्गल सूचक ही है। अतः शीघ्रातिशीघ्र ज्यौतिषी पण्डित श्रीयुत देवशर्मा जी से मिल कर इसकी उचित शान्ति करवानी चाहिये और इसके फल को जानना चाहिये" ऐसा निवेदन करते हुये अपने बन्धुओं को देख कर अपने सहचरों को लौटा कर महाराज अकेले ही देवशर्मा जी से मिलने के लिये हनुमान् जी के मन्दिर की ओर चले। सिंह द्वार से बाहर निकलते ही महाराज ने दूर से ही अपनी ओर आते हुये कुछ दूतों को देखा। उन दूतों ने कहा—"महाराष्ट्र देशनायक! वीरों के भयङ्कर वन से, गजराजों के समूह से और घोड़ों की तरङ्गों से आवृत तथा

घटयेव वाजिनां वीचिभिरिव च परिवृतोऽम्बरेश्वरो जयपुर-संस्थापना-निपुणो महाराज-जयसिंहो दिल्लीपक्षं पुष्णन् योद्धुमागत्य, अविदूर एवोपकारिका आयोज्य, श्वो वा परश्वो वा समरमारिप्सते। अत्रभवन्त एवात्र प्रमाणम्-- इति।

महाराष्ट्रराजस्तु 'आम्, तदागमन-सूचना दूरचरैः पूर्वमेव दत्ता'' इत्यभिधाय, तत्क्षणात् सर्वानपि दुर्गाध्यक्षान् सेनापतींश्च रणसज्जनाऽपेक्षितुं सूचयितुमादिदेश। मात्रायामेकस्यां च व्यतीत-मात्रायां तोरणदुर्गे महानेकः शतघ्नीनिर्घोषो जातः। परतश्च

अश्वेषा। सिन्धुराणाम् = गजानाम्। घटयेव = समूहेनेव। वीचिभिरिव = लहरिभिरिव। परिवृतः = समवेत। अम्बरेश्वरः = आमेर-देशाधीश। जयपुरस्य = तन्नामकनगरस्य, संस्थापने = निर्माणे। निपुणः = कुशल। पुष्णन् = समर्थयन्। उपकारिकाः = शिबिराणि। आरिप्सते = आरब्धुमिच्छति।

दूरचरैः = दूरभ्रमणशीलैर्गुप्तचरैः। रणसज्जया = सन्नाहोद्योगेन। अपेक्षितुम् = प्रतीक्षितुम्। आदिदेश = आज्ञप्तवान्। मात्रायाम् = सार्धपलद्वये, "मिनट" इति लोके ख्याते। व्यतीतमात्रायाम् =

जयपुर नगर की स्थापना में निपुण अम्बरदेश के राजा महाराज जयसिंह दिल्ली सम्राट की ओर से आपसे युद्ध करने के लिये आकर निकट में ही अपने शिविर की स्थापना कर चुके हैं और कल या परसों से युद्ध छेड़ने की इच्छा कर रहे हैं। ऐसी स्थिति में श्रीमान् ही प्रमाण हैं।

इस पर महाराष्ट्रराज ने "हाँ, गुप्तचरों से मुझे जयसिंह के यहाँ आ जाने की सूचना पहले ही मिल चुकी है।" ऐसा कह कर सभी दुर्गाध्यक्षों तथा सेनापतियों को तत्क्षण ही युद्ध की तैयारी कर आक्रमण की प्रतीक्षा करने की सूचना देने का आदेश दिया। ठीक एक मिनट के बाद ही दुर्ग में तोप की भयङ्कर आवाज सुनाई पड़ी। उसके पीछे ही दुर्गों तथा सेनाओं के शिविरों से मेघ के गर्जन के समान घरघराता हुआ अत्यन्त भयङ्कर शोर

तस्य हवनैः, विप्र-पूजनैः, दानैश्च प्रशमनीयम्"-इति।

महाराजस्तु सदैव मन्दिर-पुरोहितमाहूय, देवशर्म-निदेशानुसारेण हवन-पूजनादिकं विधातुमाज्ञप्तवान्। परतश्च जयसिंह-युद्ध-विषये पप्रच्छ। देवशर्मा तु 'महाराज' एतेन समरेऽनुष्ठितेऽवश्यं महाराष्ट्राणां पराजयः इति सर्वथा सन्धातव्यम्' इत्याह।

महाराष्ट्रेश्वरोऽपि चिरं चिन्तयित्वा "सत्यम्, बहुतरैर्युद्धैः साम्प्रतं स्थगिता मे सेना, वीराश्च केचन सुरतदेशे, केचित् कल्याण-देशे, अपरे सामुद्रकेष्वनूपेषु, कच्छेषु द्वीपेषु च, नवाऽऽसादितराज्यं

भूतिश्च। दुष्फलम् = अशुभफलम्। हवनैः = होमैः, विप्राणां पूजनैः = सेवनैः। दानैः = वितरणैः।

अनुष्ठिते = कृते। सन्धातव्यम् = सन्धिः कर्तव्यः। स्थगिता = श्रान्तिं गता। सामुद्रकेषु = समुद्रान्तरालवर्तमानेषु। अनूपेषु = जलप्रायेषु। कच्छेषु - एकतो भूमिसम्पर्कवत्सु सर्वतश्च जलवत्सु। द्वीपेषु = उभयोर्दिशोर्जलयुतेषु, सर्वतो जलयुतेषु च। नवासादितराज्यम् = नूतन-

शुभ नहीं हो सकता है। अतः हवन, ब्राह्मण-पूजन तथा दान के द्वारा इस अशुभ की शान्ति करनी चाहिए।"

इस पर महाराज ने उसी समय मन्दिर के पुजारी को बुलाया और देवशर्मा के निर्देश के अनुसार हवन, ब्राह्मण पूजन आदि करने का आदेश दे दिया। तत्पश्चात् महाराज ने देवशर्मा से जयसिंह के साथ सम्भावित युद्ध के बारे में पूछा। उस पर देवशर्मा ने उत्तर दिया—"महाराज! जयसिंह के साथ युद्ध करने में मराठों की पराजय निश्चित है। अतः आप उनसे किसी प्रकार सन्धि ही करें।"

उस पर चिरकाल तक सोच विचार कर महाराष्ट्रराज ने भी कहा—"आपका कथन सत्य है। मेरी सेना चिरकाल से लड़ते-लड़ते थक चुकी है, और कुछ वीर सूरत में, कुछ कल्याण देश में, कुछ जल बहुल समुद्रीय प्रान्त के और कुछ कच्छ द्वीप के नव प्राप्त राज्य के प्रबन्ध में लगे

प्रबध्नन्ति, समायातश्च महत्या सेनया वीरराजः, कुशलाऽस्य सेना, दूरदर्शी च जयपुरेश्वरोऽस्ति, तत्सम्भाव्यते तादृशमेव। यथोच्यतेऽत्रभवता तथैव विधातु यतिष्ये"–इत्यवदत्।

देवशर्मा–विजयता महाराजः!

महाराष्ट्रराजः–[ प्रणम्योत्तिष्ठन् देवशर्माणं निपुणं निरीक्ष्य ] दैवज्ञशिरोमणे! सदैव भवानस्मच्छुभं चिन्तयति, आशिषो वदति, ग्रहनक्षत्रादि-गणनैः फलकथनैः सदुपदेशैः साहाय्यं च विदधाति, तत्कथ्यतां कथमस्माभिरानृण्यमासादनीयम्?

---

लब्धराष्ट्रम्। उपनिवेशमिति यावत्। प्रबध्नन्ति = प्रबन्धं कुर्वन्ति। कुशला = निपुणा, सुशिक्षितेति यावत्। दूरदर्शी = विशेषविचारकः, नतुश्मास्तिखानादिवन्मद्यादिनिरतः।

दैवज्ञशिरोमणे = मौहूर्तिकश्रेष्ठ! साहाय्यम् = सहायताम्। एतदेव ब्राह्मणकर्तृकं देशकार्यमिति वेदितव्यम्।

---

हुए हैं। इधर महान् वीर जयसिंह बहुत विशाल सेना लेकर आए हैं और उनकी सेना भी युद्ध करने में प्रवीण है, जयपुराधीश भी बहुत दूरदर्शी है। अतः सम्भावना तो पराजय की है ही। इस लिए आप का जो कथन है तदनुसार ही मैं काम करने की चेष्टा करूँगा"।

देवशर्मा—महाराज की विजय हो।

महाराज—[ प्रणाम करते हुए उठकर देवशर्मा की ओर अच्छी तरह देखकर ] "दैवज्ञ शिरोमणि! आप सर्वदा मेरे मङ्गल की चिन्ता किया करते हैं, मुझे आशीर्वाद दिया करते हैं और ग्रह-नक्षत्र आदि की गणना के आधार पर फल के निर्देश तथा सदुपदेश से मेरी सहायता किया करते हैं। आप बतलाएँ—हमें आप के ऋण से उद्धार कैसे मिलेगा?"

देवशर्मा—महाराज ! सर्वथा सुखी वर्ते । न किमपि याचनीयम् ।

महा०—तथाऽपि ।

देव०—वेत्ति महाराजोऽहं गौरसिंहस्य पुरोहित इति ।

महा०—सर्वं श्रुतवानस्मि भवतामितिवृत्तम् ।

देव०—गौरस्य भगिनी मयैव लालिता, पालिता, मयैव च साम्प्रतमपि रक्ष्यते ।

महा०—अवगतमस्ति ।

देव०—तस्या एव विवाहार्थं वयं सर्वेऽपि चिन्ताऽऽकुला इति कमिव निवेदयाम ऋते प्रभुवर्यात् ।

महा०—वरः कोऽपि स्थिरीकृतः ?

---

वर्ते = तिष्ठामि । याचनीयम् = भिक्षितव्यम् ।

अवगतम् = निज्ञातम् । निवेदयाम, लोडुत्तमपुरुषबहुवचनम् । "ऋतनः" इति प्रकृतिभावः ।

ऋते = विना । तत्र गे पञ्चमी ।

---

देवशर्मा—महाराज ! मैं सब प्रकार से सुखी हू । अभी मुझे कुछ भी नहीं चाहिए ।

महाराज—तथापि ।

देवशर्मा—महाराज तो जानते ही हैं कि मैं गौरसिंह का पुरोहित हू ।

महाराज—मैं आपका सारा इतिहास सुन चुका हूं ।

देवशर्मा—गौरसिंह की बहन का लालन-पालन मेरे ही हाथों हुआ है और अब भी मेरी ही देख रेख में वह है ।

महाराज—मैं जानता हू ।

देवशर्मा—उसकी शादी के लिये हम सब चिन्तानिमग्न हैं—यह बात आपको छोड़कर और किससे बताऊं ?

महाराज—क्या किसी वर का आपलोगों ने निश्चय किया है ?

देव०—[ सनिश्वासम् ] राजन्! पित्रा यस्मै दातुं प्रतिज्ञातमसीत्; स क्वास्तीति न ज्ञायते, किन्तु ज्यौतिष-गणितेनैतद्देश एव सम्प्रति तत्स्थितिरनुमीयते। तत्पिता च कलितमुनिवेषो वीरसिंहोऽपि प्रभुमेवोपजीवति।

महा०—आ! एवम्, स्मृतमखिलम्। गौर-द्वारा तदपि श्रुतवानस्मि।

देव०—तद् यथासम्भवं स एव प्रनष्टो वीरसिंह-पुत्रो रामसिंहोऽन्वेष्टव्य, यथा बहूनां स्याज्जीवनम्, अन्यथा तु यथोचितमाचरितुं प्रभव एव प्रमाणम्।

---

ज्यौतिषगणितेन = भगणचिन्तनेन। अनुमीयते = अनुमानेन निश्चीयते। कलितमुनिवेषः = धारितपरिव्राजकवेषः।

प्रनष्टः = लुप्तः गोपितात्मेति यावत्। यथोचितम् = उचितानिक्रमणपूर्वकम्।

---

देवशर्मा—( लम्बी साँस लेकर ) राजन्! उसके पिता ने जिस व्यक्ति को उसे समर्पित करने का निश्चय किया था वह व्यक्ति कहाँ है—इसका परिज्ञान नहीं है। किन्तु ज्योतिषशास्त्र की गणना से यह अनुमान किया जा रहा है कि उस व्यक्ति को इस समय इसी देश में होना चाहिए। उसके पिता ने तो मुनि का वेष धारण कर लिया है और उसका भाई गौरसिंह आपकी सेवा में ही लगा है।

महाराज—हाँ हाँ, मैं भी स्मरण कर रहा हू। गौरसिंह से ही मुझे इस बात का भी पता लग चुका है।

देवशर्मा—अतः वीरसिंह के अनुपलभ्यमान पुत्र रामसिंह की यथासम्भव खोज करनी चाहिये। ताकि अनेक व्यक्तियों के जीवन का संरक्षण हो सके। यदि वह नहीं मिला तो उसके बाद यथोचित कार्य करने के लिये श्रीमान् ही प्रमाण हैं।

महा०—देव ! तामहं निजामेव दुहितरं मन्ये । तद् जयसिंह-सेना-समुद्रम् सन्धिना वा विग्रहेण वा पारं गत्वा, पूर्णेंद्योगे वीरसिंहपुत्रं परिमार्गयिष्यामि । दैवादसफलोद्योगश्च कस्मैचिदन्यस्मै योग्याय वराय स्वहस्तेन वितरिष्यामि । मा स्म भूदत्र सन्देह आर्यस्य । आज्ञाप्यतामधुना प्राप्तकालं यते, प्रणमामि—

इत्युक्त्वा, आशिषो गृहीत्वा प्रचलितो महाराजः सिंहदुर्गमागत्य, स्वविश्वास-पात्रं स्तन्यजीवम् माल्यश्रीकम् स्वं वृद्धं पुरोहितं च सन्धिवार्त्ताः स्थिरयितुं नहुश एवमेवमिति कर्णे कथयित्वा, जयसिंहं साक्षात्कर्तुं विससर्ज । महाराजानुमतो भूषणकविरपि तत्साहचर्येण जयसिंहशिबिरमुद्दिश्य चलितः ।

---

दुहितरम् = तनयाम् । सन्धिना = मेलेन । विग्रहेण = सङ्ग्रामेण । परिमार्गयिष्यामि = अन्वेषयिष्यामि । वितरिष्यामि = दास्यामि । प्राप्तकालम् = अवसरोचितम् । यते = करोमि ।

स्तन्यजीवम् = 'तानाजी'-नाम्ना प्रसिद्धम् । स्वम् = आत्मीयम् । साक्षात्कर्तुम् = द्रष्टुम् । तत्साहचर्येण = महाराजसहगमनेन ।

---

महाराज—देव ! उसे तो मैं अपनी ही बेटी समझता हूँ । अतः जयसिंह के सेना समुद्र को सन्धिवार्ता अथवा युद्ध द्वारा पार करने के पश्चात् पूर्ण प्रयास के साथ वीरसिंह के पुत्र रामसिंह को ढूँढवाऊँगा । यदि दुर्भाग्य से हम लोगों का प्रयास सफल नहीं हो सका तो किसी अन्य योग्य वर को मैं अपने हाथ से ही उसे समर्पित कर दूँगा । इस विषय में आप सन्देह न करें । अच्छा तो इस समय आज्ञा दें, समय आने पर मैं इसके लिये प्रयत्न करूँगा, प्रणाम—यह कह कर देवशर्मा से आशीर्वाद लेकर महाराज ने सिंह दुर्ग के प्रवेश कर, अपने विश्वासपात्र तानाजी तथा अपने वृद्ध पुरोहित माल्यश्रीक के कानों में "जयसिंह के साथ सन्धिवार्त्ता का निर्णय करने के उद्देश्य से ऐसा ऐसा करना है" इस प्रकार कह कर, उन सबको जयसिंह से मिलने के लिए भेज दिया । महाराज की अनुमति पाकर भूषण कवि भी उन सबों के साथ जयसिंह के शिविर की ओर चल पड़े ।

तौ च महाराज-जयसिंहेनाऽऽलप्य, आगत्य च, महनीयमहोभिर्महितं महाराष्ट्र-मही-महेश्वरं समासाद्य, एकान्ते प्रावोचताम्— महाराज ! भूषणकविना सहितावावां द्वावपि पण्डित-वेषमाकल्प्य, महाराज-जयसिंहस्य शिविरं गतौ। सोऽस्मत्संवादं प्राप्यैवान्तः प्रवेष्टुमाजिज्ञपत्। अस्माभिस्तु प्रविश्यैव साशीराशि तन्निर्दिष्टस्थाने स्थितम्। भूषणकवेः पूर्वपरिचित इति प्रथमं तेनैव मुहूर्तमालपत्। भूषणकवि-मुखेन श्रीमत्प्रशंसामयीं व्रजभाषा-कवितां श्रुत्वा समधिकममोदिष्ट। युष्मद्दत्तं तत्पारितोषिक-वृत्तान्तमाकर्ण्य, भूषण-द्वारा तत्समभिव्याहारेणैव महाकवेः सप्तशती-कारस्य विहारिणः

---

महनीयमहोभिः = वन्दनीयतेजोभिः। प्रावोचताम् = उक्तवन्तौ। महितम् = पूजितम्। प्राप्यैव = लब्ध्वैव। न विलम्बितवानिति यावत्। अमोदिष्ट = प्रसन्नतामन्वभूत्। तत्समभिव्याहारेण = तत्कथनेन। सप्तानां शतानां समाहारः सप्तशती। "सतसई" इति प्रसिद्धा। गाथासप्तशत्या अनुवादभूता विहारिकवित्यमित्यालोचकशिरोमणयः। यदप्यनुवादे

---

महाराज जयसिंह के साथ वार्तालाप करने के बाद लौट कर महान् तेजस्वी महाराष्ट्रराज के पास आकर एकान्त में ताना जी तथा माल्यश्रीक ने कहा—महाराज ! भूषण कवि के साथ साथ हम दोनों पण्डित का वेष धारण करके महाराज जयसिंह के शिविर में पहुँचे। हम लोगों के वहां उपस्थित होने की सूचना पाते ही उन्होंने हम लोगों को भीतर प्रवेश करने की आज्ञा देदी। भीतर प्रवेश करते ही हम लोग आशीर्वाद पूर्वक उनके द्वारा निर्दिष्ट स्थान में बैठ गए। चूँकि भूषण कवि से उनका पहले से ही परिचय था इसलिए पहले तो उन्होंने थोड़ी देर तक भूषण कवि से ही बातचीत की। भूषण कवि के मुख से व्रजभाषा निबद्ध आपकी प्रशस्ति सुन कर महाराज जयसिंह अत्यन्त प्रसन्न हो उठे। भूषण कवि से आपके द्वारा (उन्हें भूषण कवि को) दिए गए पारितोषिक का वृत्तान्त तथा उन्हीं के मुख से 'सतसई' कार महाकवि बिहारी की प्रशंसा

प्रशंसाविशेषं श्रुत्वा चाधिकं ह्रीण इवाभूत्। तत इतरान् भ्रूसंज्ञया स्थानं निर्मक्षिकयितुं सूचयित्वाऽस्मदभिमुखो बभूव। महाराज! किमिव कथयावः, व्यर्थ एवाभूत्तदग्र आवयोः पाण्डित्याऽऽडम्बरः!) स तु स्वयमेव शास्त्रज्ञः, ज्योतिषां निगूढं तत्त्वं वेवेत्ति। कानिचिदेव वर्षाणि व्यतीतानि, यत्तेन ज्योतिर्यन्त्रालया वाराणस्यादि-प्रसिद्ध-स्थानेषु व्यरचिषत। अथ क्षणानन्तरं स्वयमस्मानपृच्छद् युद्धविषये।

---

"हरिरनुहरति च्छायाम" ति नास्ति, तथाऽपि पर प्रामाण्य विहारिणस्त-न्निर्माण इति न 'ननु न च' समेतम्।

ह्रीणः = लज्जितः। महाराष्ट्राधिनायः कवितामेका भूषणकवेर्निशम्य सिन्धुराननेकान् ग्रामांश्च ददौ, जयपुराधीशश्च सतशती निपीयापि दीनाराणां सतशतीमेवार्पयदिति लज्जाकारणम्। निर्मक्षिकयितुम् = निर्जनयितुम्। ज्योतिषाम् = भानाम्, खेचराणाम्। निगूढम् = गुप्ततमम्। ज्योतिर्यन्त्रालयाः = भगणगत्यादिबोधनपराः शालाः। वाराणस्यादिषु = चतुर्षु स्थानेषु वाराणस्यां जयपुरे दिल्ल्यामुज्जयिन्यां च। जयपुरं स्वीयं नगरमिति कृत्वा, वाराणसी च सर्वतः श्रेष्ठं हिन्दूनां तीर्थमिति कृत्वा, दिल्ली च सम्राडिन्-वासभूमिरिति कृत्वा, उज्जयिनी च कृष्णकालभवविख्यातीर्थत्वात्सान्दीपनिजन्म-भूमित्वाद् भूमध्यरेखास्थितत्वाच्च स्वीकृतिविषयताङ्गतेति वेदितव्यम्। वारा-णस्यामिदं मानमन्दिरनाम्नाऽऽख्यातं दशाश्वमेधघट्टतो नातिदूरे। एतदनुसार-

---

सुन कर तो महाराज जयसिंह बहुत लज्जित-से हो गए। तत्पश्चात् अपने सेवकों को वहाँ से अन्य लोगों को हटाने का संकेत देकर हमलोगों के सम्मुख हो गए। महाराज! हमलोग क्या कहें। उनके समक्ष तो हमलोगों के पाण्डित्य का सारा आडम्बर व्यर्थ हो गया। महाराज जयसिंह तो स्वयम् शास्त्रों में निपुण तथा ज्योतिष शास्त्र के रहस्यों को अच्छी तरह जानते हैं। अभी कुछ ही वर्ष बीत गए हैं कि उन्होंने वाराणसी आदि प्रसिद्ध स्थानों में ज्योतिर्यन्त्रालयों का निर्माण किया है। थोड़ी देर के बाद उन्होंने स्वयम् हमलोगों से युद्ध के विषय में पूछा। इस विषय में अधिक

किमधिक कथ्येत ? चिरमालपितमस्माभिः, किन्तु दृष्टं यज्जयसिंहोऽयं नापजलखानः, न शास्तिखानः, न वा यशस्विसिंहः, यः कथमपि वशयितुं शक्येत। यद्देशीया गौरसिंह-सदृशा अल्पवयस्का अपि नीतिमर्मज्ञाः, किं नाम कथनाय स्यात् तद्देशीयमहाराजानां विषये ? स प्रबलया सेनया समायातोऽस्ति, शीघ्रमस्मद्दुर्गरोधं विधित्सति। एकैकशश्च दुर्गाण्याच्छिद्य साकल्येनास्मान् विजिगीषते।

महा०—अपि कथमपि सन्धातुमपि तेनाङ्गीकृतम् ?

माल्य०—भगवन् ! स्पष्टीकृत्य तेनोक्तम् यद्—"वृद्धोऽस्मि, क्षत्रियोऽस्मि, द्विर्भाषणं न जाने। यदि सन्धित्सते महाराष्ट्रराजः, तद् दिल्लीश्वरस्यापहृत-दुर्गेष्वधिकारस्त्याज्यः, करप्रदता चोरी-

---

तश्च शिवराजविजयकर्तुर्निवासस्थानमस्ति। वशयितुम् = स्वायत्तीकर्तुम्। नीतिमर्मज्ञाः = राजनीतिविशारदाः। विधित्सति = विधातुमिच्छति। आच्छिद्य = बलात्स्ववशीकृत्य। साकल्येन = सर्वेणो भावेन। विजिगीषते = विजेतुमिच्छति। "विपराभ्यां जेः" इत्यात्मनेपदम्।

द्विः = वारद्वयम्। भाषणम् = कथनम्। सत्यप्रतिज्ञ इति यावत्। अपहृतदुर्गेषु = बलात्स्वायत्तीकृतेषु दुर्गेषु। करप्रदता = राजस्वप्रदा-

---

क्या कहा जाय ! हम लोगों ने चिर काल तक उनसे बात-चीत की, किन्तु यह देखा कि जयसिंह अफजल खाँ या शाइस्ता खाँ या यशस्वी सिंह ( यशवन्त सिंह ) नहीं हैं जिन्हें किसी प्रकार वश में किया जा सके। जिस देश के गौरसिंह आदि नवयुवक भी नीति विद्या के मर्म को जानने वाले होते हैं उस देश के महाराज की नीतिनिपुणता के विषय में कहना ही क्या है ? प्रबल सेना के साथ जयसिंह यहाँ आ पहुँचे हैं और शीघ्र ही हमारे किले को घेरने वाले हैं और एक एक करके हमारे दुर्गों को स्वाधीन कर हम लोगों को पूरी तरह जीत लेना चाह रहे हैं।

महाराज—अच्छा, क्या उन्होंने सन्धि करने की बात भी कही है ?

माल्यश्रीक—भगवन् ! उन्होंने स्पष्ट रूप से कहा—'मैं वृद्ध हूँ और क्षत्रिय हूँ। मैं दो बार बोलना नहीं जानता। यदि महाराष्ट्रराज सन्धि

धार्येति," उक्तांश्च यद् "नाऽस्मत्त उपधिराशङ्कनीयः। स्वच्छेन हृदा समागत्य महाराष्ट्रराजेन स्वयमेव मया सह स्थिरयितव्योऽयं विषय."—इति। तदत्र प्रभुचरणा एव प्रमाणम्।

तदाकर्ण्य महाराष्ट्र-धरा-धनी किञ्चिन्निश्वस्य, "तथाऽस्तु, यथोचित श्वो रात्रौ विधास्यामः" इत्युक्त्वा स्वान्तरङ्ग-मित्र-मण्डल्या सह बहु सम्मन्त्र्य, सर्वेषामपि च विजिगृक्षायामसम्मतिं, सन्धित्सायामेव च सम्मतिमावलम्ब्य, माल्यश्रीकं पृष्ट्वान्, 'मया

---

नम्। अस्मत्तः = अस्मत्सकाशात्। उपधिः = छद्म। चौर्यमिति यावत्। स्वच्छेन = निष्कपटेन। स्थिरयितव्य = निश्चेतव्य।

महाराष्ट्रधराया धनी, ननु साम्प्रत महेश्वरो वाऽऽगच्छलो याऽधिनाथो वा। अधुना तु सन्धित्सायतत्वाद्धनी स्यास्यति, स एव न्यास्तीति कविमनसयेन्योऽर्थः। किञ्चित् = ईषत्। निश्वस्य = उच्छ्वस्य। एतेन न सोऽपि प्रेम्णा सन्धिमकरोत्, अपि तु परिस्थितिवशादिति व्यनक्ति। विधास्यामः = करिष्यामः, लुटो रूपम्।

विजिगृक्षायाम् = विग्रहीतुमिच्छायाम्, युद्धे। सन्धित्सायाम्=सन्धि

---

करना चाहते हैं तो उन्हें दिल्ली सम्राट के अपहृत दुर्गों पर से अपना अधिकार हटा लेना होगा और दिल्लीश्वर को कर देने की बात भी माननी होगी साथ ही यह भी कहा—"मुझ से किसी प्रकार के कपट की आशङ्का महाराष्ट्रराज को नहीं करनी चाहिए। निश्छल हृदय से महाराष्ट्रराज को स्वयम् यहाँ आकर मेरे साथ सन्धि का निश्चय करना चाहिए।" इस विषय के अब श्रीमान् ही प्रमाण हैं।

उक्त बात सुन कर महाराष्ट्र देश की पृथ्वी के स्वामी वीर शिवाजी ने कुछ नि श्वास लेकर "अस्तु, कल रात यथोचित कार्य करूँगा" यह कह कर, अपने अन्तरङ्ग, मित्रों के साथ बहुत प्रकार से मन्त्रणा कर, युद्ध करने में सबों की असम्मति एव सन्धि करने में सम्मति प्राप्त कर माल्यश्रीक

तेन सहाऽऽलपितुं कथं तत्सेना-व्यूहं विभिद्य प्रवेष्टव्यम्"—इति।
स उवाच—"भगवन्! जयपुराधीश्वर-मुद्राङ्कितं प्रवेशक-पत्रमानी-
तवानस्मि-इति न कोऽपि प्रविशन्तं श्रीमन्तं किमपि वक्ष्यति"।
ततस्तथा तथेत्युक्त्वा सर्वेऽप्युत्तस्थुः।

परेद्युर्होराद्वयमतीतायां रजन्यामकस्माच्छिबिरान्तरुपविष्टं महाराजमम्बराधीश्वरं प्रतीहारः प्रविश्य प्रायोचत्—"भगवन्! महाशयः कश्चन एकाकी द्वारदेशे वितिष्ठते पृष्टश्चाऽऽत्मनो नाम शिव इत्येव ब्रूते, तदत्र प्रभुचरणा एव प्रमाणम्"—इति।

---

करेणच्छायाम्। तत्सेनाव्यूहम् = तद्वाहिनीरचनाम्। जयपुराधीश्वरस्य, मुद्रया = राजचिह्नेन, अङ्कितम् = चिह्नितम्। वक्ष्यति = कथयिष्यति। एतत्स्थलमेव मनसि कृत्वाऽस्माणि मनीषिणा मान्येन "कुटजे खलु तेनेहा तेने हा! मधुकरेण कथम् ?"

**वितिष्ठते**, "समवप्रविभ्यः स्थः" इत्यात्मनेपदम्।

---

से पूछा—"जयसिंह से सन्धिवार्त्ता करने के लिए उनकी सेनाओं के व्यूह को पार कर किस प्रकार मुझे वहाँ प्रवेश करना चाहिए ?"

माल्यश्रीक ने उत्तर दिया—"भगवन्! जयपुर महाराज की मुहर लगा हुआ एक प्रवेश पत्र मैं ले आया हूँ। अतः इसके साथ ले जाने पर आपको वहाँ जाते समय कोई कुछ नहीं पूछेगा।" तदनन्तर "अच्छा, अच्छा," यह कह कर सभी उठ गए।

दूसरे दिन रात के दो घण्टे के व्यतीत हो जाने के बाद अकस्मात् भीतर जाकर प्रतीहार ने शिविर में बैठे हुये महाराज अम्बर देशनायक से निवेदन किया—"भगवन्! एक महाशय अकेले ही दरवाजे पर खड़े हैं। पूछने पर उन्होंने अपना नाम 'शिव' बतलाया है। इस विषय में अब श्रीमान् ही प्रमाण हैं।"

महाराजस्तु, "आम् ! परिचिनोमि"—इत्युक्त्वा स्वयं द्वारदेशमागत्य बहुशश्चित्रेषु कारुवरैर्लिखितात्स्मृत्वाऽदर्शदिति दर्शनसमकालमेव महाराष्ट्रराज इति निश्चित्य, सादरमालिङ्गय, अन्तर्निनाय। स्वोपविष्टविष्टरे एव च समुपवेश्य, तेन सह स्वयमपि स्थित्वा, एवमालपत्—

जयपुरराजः—महाराष्ट्रराज ! भवान् एतेन साधारणेन वेषेण स्वयमागत्य मामधिकं सम्मानितवानस्ति इति स्वागतं श्रीमते। अत्र स्वगृहे इव व्यवहरणीयम्, न कोऽपि संशयावसरः।

---

परिचिनोमि = जानामि। चित्रेषु = आलेख्येषु। कारुवरैः = चतुरशिल्पिभिः। अदर्शत् = आलोकयत्। सादरम् = सबहुमानम्। आलिङ्गय = आश्लिष्य। स्वोपविष्टविष्टरे = स्वाधिष्ठितासने। आलपत् = अभाषत।
सम्मानितवान् = आदृतवान्। व्यवहरणीयम् = व्यवहर्तव्यम्। संशयावसरः = सन्देहस्थानम्।

---

इस पर जयपुर नरेश ने 'हाँ, मैं उन्हें पहचानता हूँ" यह कहकर स्वयम् दरवाजे के पास आकर अच्छे चित्रकारों द्वारा निर्मित शिवाजी के चित्रों को बहुत बार देखे होने के कारण 'ये सज्जन महाराष्ट्रराज शिवाजी ही हैं' ऐसा निश्चय कर, आदरपूर्वक शिवाजी का आलिङ्गन कर उन्हें अन्दर लिवा आए। अपने आसन पर ही उन्हें भी बैठाकर उनके साथ स्वयम् भी बैठ गये और निम्नलिखित रूप में बातचीत करने लग गये—

जयपुरमहाराज—महाराष्ट्रराज ! इस साधारण वेष में ही यहाँ आकर आपने जो मेरा इतना अधिक सम्मान किया है एतदर्थ मैं आपका स्वागत करता हूं। आप यहाँ अपने घर की तरह ही सारा व्यवहार करें, इसमें किसी तरह के सन्देह का कोई अवसर नहीं है।

महाराष्ट्रराजः—महाराजस्यामुना स्नेहेन सनाथितोऽस्मि। महामान्य! यद्यहं स्वगृह इव न व्यवाहरिष्यम्, समशेष्यम्, तर्हि कथमेकाकी सेना-व्यूह-प्रचण्ड-दुर्गान्तःस्थे शिविरे समागमिष्यम्? परन्तु क्षत्र-वंशावतंसानां भारतीय-महाराजानां युष्मादृशामुदार-हृदयानां दास एवायं जनः। गतदिवसे द्वौ पण्डितौ श्रीमच्चरणानां समीपमायातौ, यथा च तद्द्वाराऽऽज्ञां लब्धवानस्मि; तथैव चानुष्ठितवानस्मि।

जय०—सत्यम्, पण्डितवेषौ द्वौ मामकावायातौ भूषणकवि-सहितौ।

महा०—[ किञ्चिल्लज्जितवान् ]

---

सनाथितः = सभाजितः। व्यवाहरिष्यम् = व्यवहारमकरिष्यम्। समशेष्यम् = सन्देहमकरिष्यम्। सेनाव्यूहेन = वाहिनीरचनया, प्रचण्डे = भीतिप्रदे, दुर्गान्तःस्थे = दुर्गमाभ्यन्तरस्थे। क्षत्रवंशावतंसानाम् = क्षत्रियान्वयभूषणानाम्।

आज्ञां लब्धवान् = आदेशं प्राप्तवान्। अनुष्ठितवान् = कृतवान्।
मामकौ = मदीयौ।

---

महाराष्ट्रराज—आपके इस स्नेह-प्रदर्शन से मैं अपने को धन्य मान रहा हूँ। महामान्य! यदि मैं आपके निवास को अपना घर-सा नहीं समझा होता प्रत्युत यहाँ आने में किसी प्रकार का सन्देह किया होता तो इतनी बड़ी सेना के व्यूह से परिवेष्टित होने के कारण इस भयङ्कर किले के भीतर अवस्थित शिविर में मैं अकेले कैसे आ जाता? परन्तु क्षत्रिय वंशावतंस और जैसे उदार हृदयवाले भारतदेशीय महाराजों का मैं सेवक ही हूँ। कल दो पण्डित आपके पास आए थे, उन लोगों के माध्यम से आपकी जैसी आज्ञा मिली वैसा ही मैंने किया है।"

जय०—सत्य, कल पण्डित वेश में आपके दो व्यक्ति भूषण कवि के साथ यहाँ आये थे।

महा०—(कुछ लज्जित हो गये)।

जय०—अस्तु, वद्द्वारा यथा सन्देशं प्रहितवानस्मि, तत्स्मर्यते भवता ? यदि भवान् सन्दधीत, तद् भवतो विद्रोहाचरणं विस्मृत्य दिल्लीवल्लभो भवन्तं प्रेमपात्रं मन्यते। भवतो रक्षादि-विषये प्रतिज्ञातवानस्मि, स्वीक्रियेत चेत् तथा विदध्याम्। राजपुत्रदेशीयोऽयं वृद्धः एतदुक्तिर्वज्रलिपिरिवान्यथा न भवति।

ततस्तूर्णीयस्य कथयाऽपि रहिते तस्मिन्प्रदेशे तादृशमाकर्ण्य परितोऽवलोक्य किञ्चिद्विमनायमाने इव तूष्णीके महाराष्ट्र-महाराष्ट्रपतौ, पुनराहाम्बरेशः—

लज्जितवान्=शिवेन पण्डिताविरुक्तम्, जयसिंहश्च पण्डितनेपालित्यभिधाय गूढतेव परिचितवानिति लज्जा।

प्रहितवान् = प्रेषितवान्। सन्दधीत=सन्धिं कुर्यात्। विद्रोहाचरणम्=राजुताकरणम्। प्रेमपात्रम्=स्नेहाधारम्। विदध्याम्=कुर्याम्। वज्रलिपिरिव = वज्रोल्लिखितेव। अन्यथा = विपरीता। तदिदं वृद्धस्यास्य वृद्धमतेर्भ्रान्तिविलसितमनेतनेनोरगजिह्वकर्तव्येन स्फुटीभविष्यति।

कथयाऽपि=नाम्नाऽपि। विमनायमाने=उदास्ता गते। तूष्णीके = मौनिनि। महाराष्ट्रमेव, महद् राष्ट्रम्, ननु तनो परिभूत भारत नाम किञ्चित्, तत्पतौ = तद्रक्षके।

जय०—अस्तु, उनके द्वारा मैंने जो सन्देश भेजा था उसका स्मरण आप कर रहे हैं ? यदि आप सन्धि कर लेते हैं तो आपके विद्रोहात्मक कार्यों को भूलकर दिल्लीसम्राट् आपको अपना प्रेमपात्र मानने लग जाएँगे। आपकी सुरक्षा के विषय में भी मैंने प्रतिज्ञा कर ली है। यदि आप चाहें तो मैं इसके लिए यथोचित कार्य करूँ। मैं राजपुताने का निवासी एक वृद्ध क्षत्रिय हूँ, मेरी वाणी वज्रलिपि की तरह कभी बदलती नहीं।

तदनन्तर उस एकान्तस्थान में उनकी (जयसिंह की) बात सुनकर इधर उधर देखकर महाराष्ट्र यानी महान् राष्ट्र के अधिपति शिवाजी के विस्मित हुए की तरह मौन हो जाने पर जयपुराधीश्वर ने पुनः उनसे कहा—

जय०—वीर ! भवानेकाकी अत्र समायातः, आत्मानं च समर्पितवानिति ग्लानेन न भाव्यम्। यदेव रोचेत तदैव मदश्वशालात एकमुत्तममाजानेयमारुह्य मद्भटै रक्षित एव स्वालयपर्य्यन्तं यास्यति, परतश्च रणाजिरे जयो वा पराजयो भवेत्, किन्तु नास्मत्तो लेशोऽपि विश्वासघातस्य शङ्कनीयः।

महा०—[ तादृशीमुदारां वाचं निशम्य विस्मित इव ] महाराज! दृढं विश्वसिमि, तद्विषये नास्ति मम खेदः।

जय०—तत्किं ग्लानिमिव वमति मुखमण्डलं भवतः ?

महा०—ग्लानेरनल्पं कारणमस्ति।

---

ग्लानेन = खिन्नेन। मदश्वशालात = मामकमन्दुरातः। आजानेयम् = अश्वम्। उत्तमपदस्य पृथगभिधानात्, 'आजानेयाः कुलीनाः' इत्यमरः। रणाजिरे = सङ्ग्रामाङ्गणे। लेशोऽपि = मात्राऽपि।

वमति = उद्गिरति। प्रकटयतीति यावत्।

---

जयसिंह—वीर ! आप अकेले ही यहाँ आ गये और आत्म-समर्पण कर चुके—इस तरह की ग्लानि आप न करें। आप जब चाहें उसी क्षण मेरे घुड़साल से एक अच्छा सा घोड़ा लेकर मेरे योद्धाओं के संरक्षण में ही अपने घर लौट जा सकते हैं। पीछे युद्ध-प्राङ्गण में जय हो या पराजय, किन्तु इस समय तो आप मुझसे किसी तरह के विश्वासघात की जरा-सी भी शङ्का न करें।

महाराज—[ जयसिंह की उपर्युक्त उदार वाणी सुनकर कुछ विस्मित-से होकर ] महाराज ! मैं पूर्णतः इस विषय में विश्वस्त हूँ। इस प्रसङ्ग में मुझे किसी प्रकार की ग्लानि नहीं हो रही है।

जयसिंह—तो फिर आपका मुखमण्डल ग्लानि को क्यों प्रकट कर रहा है ?

महाराज—ग्लानि का बहुत बड़ा कारण है।

जय०—नात्र पञ्चमः कर्णोऽवधत्ते, तत् स्पष्टमुच्यताम्।

महा०—वीरवर! येषां राजपुत्र-देशीय क्षत्र कुल-च्छत्राणां प्रताप-गानैर्बाल्यं व्यतियापितवानस्मि, यै राजन्वतीयं भारतभूः, ये चैकमात्रमालम्बनं सनातनधर्मस्य भारत-गौरवस्य भारताभिजन-स्वातन्त्र्यस्य च, तेषामेव महाराजमद्य म्लेच्छानां सेनापतिमवलोकयतो विदीर्यते मे हृदयम्।

जय०—अपीदमेव कारणं खेदस्य भवतः? वीर! यदा तारुण्यमासीदस्मद्देशीय-क्षत्रिय-प्रताप-तपनस्य; तदा यवनराजानां

---

अनल्पम् = बहु।

पञ्चमः कर्णः = पञ्चानां सङ्ख्यानां पूरकं श्रोत्रम्। न कश्चिद् द्वाभ्यामतिरिक्तः शृणोतीति यावत्।

प्रतापगानैः = तेजस्वितावर्णनपरगाथाभिर्गीतिभिः। बाल्यम् = शैशवम्। व्यतियापितवान् = क्षपितवान्। राजन्वती = सुन्दरराजसमेता। आलम्बनम् = आधारस्तम्भभूतम्। भारताभिजनस्वातन्त्र्यस्य = भारतदेशस्वतन्त्रतायाः। विदीर्यते = भिद्यते।

तारुण्यम् = यौवनम्। अस्मद्देशीयक्षत्रियाणां प्रताप एव तपनः =

---

जयसिंह—यहाँ तो हम दोनों के अतिरिक्त तीसरा कोई भी व्यक्ति नहीं है। अतः आप स्पष्ट रूप में ग्लानि के कारण बतलाएँ।

महाराज—वीरवर! राजपुताने के जिन क्षत्रिय कुल रक्षकों के प्रताप-गान में अपने बाल्य-काल को मैंने बिताया है, जिनके सौराज्य से यह पृथिवी सौराज्यशालिनी रही है, जो इस भारत देश के गौरव, उसके स्वातन्त्र्य तथा इसमें प्रतिष्ठित सनातन धर्म के एकमात्र आधारस्तम्भ रहे हैं उन्हीं में से अन्यतम आपको आज म्लेच्छों के सेनापति के रूप में देखकर मेरा हृदय विदीर्ण हो रहा है।

जयसिंह—अच्छा, आपके खेद का यही कारण है। वीर! जिस समय हमारे देश के क्षत्रियों के प्रताप-सूर्य की युवावस्था रही उस समय हम लोगों

वक्षःस्थलेषु च्छुरिका-लेखनीभिर्भारत-जयः क्रियासमभिहारेणा स्माभिरलेखि। किन्तु न सदा समानो व्यत्येति कालः। ग्रीष्मे शोषित-महानदोऽपि भास्करो हिमे हिमकणिकाभिस्तथाऽऽत्रियते; यत्तदवलोकनमपि दुःशकं भवति। तदधुना क्षत्रिय-प्रतापस्य वार्द्धक्य-समयः—इति दैवघटनयाऽस्माकं पारवश्यं सम्पन्नमस्ति। न जानीमहे कदा वा कल्पपरिवर्त्तनं भविता, यदा पुनः स्वातन्त्र्य-सुखमासादयेद् भारतं वर्षम्। न धिकमस्मिन् विषये वचनीयम्, यतः, सर्वमवगतं धीरस्य।

---

खेचरचक्रवर्त्ती, तस्य। छुरिकाः = असिधेनुका एव, लेखन्यः = लिपिसाधनानि, ताभिः। रूपकम्। क्रियासमभिहारेण = वार वारम्। समानः = एकविधः। शोषितमहानदः = शुष्कीकृतमहाजलाधारः। हिमे = शीतर्त्तौ। हिमकणिकाभिः = प्रालेयखण्डैः। आत्रियते = आच्छाद्यते। तदवलोकनम् = तद्दर्शनम्। वार्द्धक्यसमयः = वृद्धत्वकालः। दैवघटनया = भाग्यचक्रेण। पारवश्यम् = पारतन्त्र्यम्। यत एवेयं शिक्षा राजनीतौ कृतपदा तत एव भारतीयपारतन्त्र्यशृङ्खला वृद्धिमानमासादितवतीति न विस्मर्त्तव्यं वृद्धोक्तिपठनपरैः। कल्पपरिवर्त्तनम् = समयपरावृत्तिः। वचनीयम् = वक्तव्यम्।

---

ने अपनी छुरी रूपी लेखनियों से यवनराजों के वक्षःस्थल पर बारम्बार अपनी विजय का उल्लेख किया। किन्तु सब दिन एक सा काल-चक्र नहीं घूमता। ग्रीष्मऋतु में महानदों को शुष्क बना देने वाला सूर्य भी शीतकाल में हिमकणिकाओं से इस प्रकार आवृत हो जाता है कि उसके दर्शन भी दुर्लभ हो जाते हैं। आज क्षत्रियों के प्रताप की वृद्धावस्था आ चुकी है, इसलिए भाग्य के प्रतिकूल हो जाने से आज हम लोग परतन्त्र हो गए हैं। हम नहीं जानते कि यह कुसमय-चक्र कब पलटेगा जिस समय यह भारतदेश पुनः स्वतन्त्रता के सुख का अनुभव करेगा। इस विषय में अधिक कहने की आवश्यकता नहीं है, आप तो सब कुछ जानते हैं।

महाराष्ट्रः—आर्य ! अवगतमस्ति, अत एव च पृच्छामि-यद् यैः सहैवं चिरन्तनो वृद्धो द्वेषः, कथमद्य तदाज्ञा शिरसा धार्यते ?

जय—मन्ये, जानीते भवान्; यदस्माकं सत्य-प्रतिज्ञतायां महान् पक्षपातः।

महा०—आम्! जाने।

जय०—यदा वैरमासीत् तदा रणाङ्गणमासाद्य निष्कृप-कृपाण प्रहारैर्यवन-कूटकोटि-कन्धरा-कोष्ण - रक्तप्रवाहैस्तुन्दिलीकृता भगवती चण्डिका, यदा च कैरपि कारणैर्वशंवदताऽङ्गीकृता;

---

वृद्धः = वृद्धि गतः, द्वेषः = शत्रुता।

सत्यप्रतिज्ञतायाः = सत्यसन्धतायाः। बहुव्रीहेरनन्तर तल्।

वैरम् = शत्रुत्वम्। निष्कृपकृपाणप्रहारैः = निर्दयासिताडनैः यवनकूटकोटेः = म्लेच्छसमूहकोटेः, कन्धराभ्यः = ग्रीवाभ्यः, कोष्णस्य = ईषदुष्णस्य, रक्तस्य, प्रवाहैः = धाराभिः, तुन्दिलीकृता = स्थूलोदरीकृता,

---

महाराज—आर्य! मैं जानता हूं इसी लिए तो पूछ भी रहा हूँ कि जिन म्लेच्छों के साथ हम लोगों की पुरानी शत्रुता चली आ रही है उनकी आज्ञा आज शिरोधार्य कैसे हो रही है ?

जयसिंह—मैं समझता हूँ कि आप यह भी जानते हैं कि प्रतिज्ञा पालन में हम लोगों का कितना बड़ा पक्षपात है।

महाराज—जी हाँ, जानता हूं।

जयसिंह—जिस समय यवनों से शत्रुता थी उस समय रणाङ्गण में प्रस्तुत हो कर निर्मम खड्गों के प्रचण्डाघात से यवनों की असंख्य मण्डलियों के गले से बहते हुए ईषदुष्ण रक्त के प्रवाह से भगवती चण्डिका को प्रसन्न भी किया ( मोटी-ताजी बना दिया ) था, किन्तु जब आज किन्हीं कारणों से यवनों का आधिपत्य मान लिया है तब उनकी आज्ञा का भी

तदाज्ञा वहामि। राजपुत्रदेशीय क्षत्रियाश्छद्मना न कुर्वन्ति विद्रोहाचरणम्।

महा०—किं सदा सर्वैः सत्यं पालनीयम् ?

जय०—आः! किं कथ्यते ? अत्रापि सन्देहः ? किं महाभारते जरासन्धस्य, अर्जुनस्य, युधिष्ठिरस्य वा न श्रुतानि कथानकानि ? राजपुत्रदेशीय क्षत्रियाणां किं नाश्राविषतेतिहासो भवता ? अस्माकं कथनमेव पत्रम्, कथनमेव च मुद्रा।

महा०—सत्यम्, किन्तु मरुधराधीश्वरो महाराज श्रीयशस्विसिंहोऽपि सनातनधर्म-रक्षायां प्रधान एव यामिकः। स तु सनातन-

---

चण्डिका = महामाया। वशंवदता = अधीनता। छद्मना = कपटेन। विद्रोहाचरणम् = शत्रुताव्यवहारम्।

न श्रुतानि = न कर्णगोचरीकृतानि। कथानकानि = चरितानि। जयसिंहेन कथानकानि श्रुत्वापि दुरर्थतयैवाध्यवसितानीति विदुषां सम्मतिः। सर्वैरेवैभिर्महाभारतप्रख्यातैः कूटनीतिराश्रिता, किमपरं युधिष्ठिरोऽपि 'अश्वत्थामा हत' इत्यभिधाय तामेवाशिश्रयदिति न तिरोहितं विज्ञेषु। ईदृशा एव हि धर्ममापातत भुत्वाऽन्यथयन्ति खेदयन्ति च भारतभुवमिति किमधिकम्। अश्राविषत = श्रुतः। मुद्रा = 'मुहरचन्द' इति भाषा।

यामिकः = प्रहरी। अत्याक्षीत् = उदलङ्घत्।

---

पालन कर रहा हूं। राजपुताने के क्षत्रिय कपट-पूर्वक (छिप कर) विद्रोहात्मक कार्य नहीं करते।

महाराज—क्या लोगों को सर्वदा सत्य का ही पालन करना चाहिए ?

जय०—आः! क्या कह रहे हैं ? इसमें भी सन्देह है ? क्या आपने महाभारत में वर्णित जरासन्ध, अर्जुन या युधिष्ठिर के उपाख्यान नहीं सुने हैं ? क्या आपने राजपुताने के क्षत्रियों का इतिहास नहीं सुना है ? हम लोगों की वाणी ही (प्रमाण) पत्र है, वाणी ही मुद्रा है।

महाराज—आपका कथन सत्य है। किन्तु मरुप्रदेश के अधिपति महाराज यशवन्त सिंह जी भी तो सनातन धर्म की रक्षा करने वाले प्रधान

धर्म-रक्षायै यवन-वंशावतंस-ध्वंसं चिकीर्षन्नस्मत्सहयोगमकार्षीत्, तत्साहचर्यञ्चात्याक्षीत्।

जय०—श्रुतमस्माभिः, यदवधि मरराजः सिप्रातीरे दिल्लीश्वरेण विजितः, तदवधि बहिः सन्धिं दर्शयन्नन्तर्द्वेष्टीति। परं छलमिदं गर्हितमनुष्ठितं तेन।

महा०—अथ किं म्लेच्छानां भारत-विद्रोहिणामप्यपकारः स्वदेशीयानां च साहाय्यं गर्हितं कार्यम्?

जय०—मम तात्पर्यं न बोबोद्धि भवान्। ननु कथयामि छलं गर्हितम्। यदि स प्रत्यक्षतो विरोधमनाच्छादयन्, समयोत्स्यत;

---

अन्तः = अभ्यन्तरे। द्वेष्टि = शत्रुता करोति। छलम् = कपटम्। गर्हितम् = निन्दितम्।

अपकारः = अपकृतिः। गर्हितम् = निन्दितम्।

बोबोद्धि = अतितरां जानाति। अनाच्छादयन् = अगोपयन्।

---

हारियों में अन्यतम ही हैं। उन्होंने तो सनातन-धर्म की रक्षा के लिए यवनवंशावतंस के विध्वंस की कामना से हमारा साथ दिया है और यवनसम्राट् का साथ नहीं दिया है।

जय०—हमने भी सुना है कि जिस दिन मरुप्रदेश के अधिपति महाराज यशवन्त सिंह सिप्रा नदी के तट पर हुए युद्ध में दिल्ली सम्राट से जीत लिए गए उस दिन से वे बाहर से दिल्लीश्वर के साथ सन्धि दिखलाते हुए भी भीतर से उनसे द्वेष ही किया करते हैं। परन्तु उनका यह कपट-प्रबन्ध निन्दित कार्य है।

महाराज—तो क्या भारतद्रोही म्लेच्छों का अपकार एवम् स्वदेशीयों का उपकार करना भी निन्दित कार्य है?

जय०—आप मेरे अभिप्राय को ठीक ठीक नहीं समझ रहे हैं। मैं तो कपट-प्रबन्ध को निन्दित कह रहा हूं। यदि महाराज यशवन्त सिंह प्रत्यक्ष

दिल्लीश्वर विजित्य यौधिष्ठिरध्वजाधारे धरातले ध्वजमुद्धून यिष्यद्, भारत स्वातन्त्र्य-पोत कर्णधार धुरामवक्ष्यत्, समराङ्गणे प्राणानत्यक्ष्यत्, मार्तण्ड मण्डलमभेत्स्यत्, सकुसुमवृष्टि दिव चासनाथयिष्यत्, तत् तद्यशोगीति-गाने राजपुत्रदेशः समपूरयिष्यत। पर यदवधि स च्छलमकार्षीत्, तदवधि बाला अस्मद्देशीयास्त निन्दन्ति। वीर! यदि सत्येन स्वधर्म रक्षा न भवति, सत्किमसत्येन सम्भोभवीति? यदि च प्राण-दानैरपि स्वदेशो दुराचारान् त्रातु न शक्यते, अथ च्छलेन शक्यते? कुलीनाः

---

समयोत्स्यत = युद्ध व्यधास्यत्। यौधिष्ठिरस्य = युधिष्ठिरसम्बन्धिन, ध्वजस्य, आधारे = क्षितिभूमौ। उद्धूनयिष्यत् = उदस्थापयिष्यत्। भारत स्वातन्त्र्य-पोतकर्णधारधुराम्=हैन्दव स्वतन्त्रता-नौ नाविक भारम्। अवक्ष्यत् = अधारयिष्यत्। सकुसुमवृष्टि=सकुसुमवर्षणम्। दिवम् = स्वर्गम्। असनाथयिष्यत् = अभूपयिष्यत्। तद्यशोगीतिगाने = तत्कीर्तिगीतिकागीतिभिः। समपूरयिष्यत=परिपूर्णोऽकरिष्यत। कर्मवाच्यम्।

---

रूप में भी दिल्लीश्वर के साथ अपने विरोध को छिपाए बिना ही युद्ध करते, और दिल्लीश्वर को जीतकर युधिष्ठिर की विजयपताका के आधारभूत इस धरातल में अपनी विजय पताका फहराते, भारत देश की स्वातन्त्र्य-नौका के नाविक का भार वहन करते, युद्धभूमि में ही अपने प्राण छोड़ देते, सूर्य मण्डल को भी अपनी कीर्ति से सम्भिन्न कर दिए होते और पुष्प वर्षण पूर्वक स्वर्ग को भी सनाथित किये होते तो आज उनके यशोगीत के गान से राजपुताना गूँजता रहता। परन्तु जब से उन्होंने छल किया है तब से हमारे देश के बच्चे भी उनकी निन्दा किया करते हैं। वीर! यदि सत्य से अपने धर्म की रक्षा नहीं होगी तो असत्य से इसकी सम्भावना भी हो सकती है? यदि प्राणान्त करने के बाद भी अपने देश का दुराचारियों से संरक्षण नहीं हो सकता तो क्या छल से इसकी सम्भावना है। कुलीन

प्राणानगणयन्तो धर्मं रक्षन्ति, न तु कपटाचरणैर्धर्मं विघट्टयन्ति।

महा०—[ किञ्चित् कुपित इव ] वीरवर! वयमपि धर्मार्थमेव प्राणान् न गणयामः, महाराष्ट्रा अपि भीरवो न सन्ति, महाराष्ट्रा अपि स्वार्थं न कुर्वन्ति सङ्ग्रामम्, किन्तु काश्यादिस्थानेषु विहिता-नत्याचारान् श्रावं श्रावं कर्णौ स्फुट्येते, हृदयं च विदीर्यते—इति न शक्यते सोढुमिति यथासामर्थ्यं सम्मुखं परतश्च युक्तिभिरपि विजयामहे। धन्यं युष्माकं सत्यम्! यदवलम्ब्य काशीस्थ-विश्वनाथ-बिन्दुमाधवादि-मन्दिर-मूलच्छेद-कौतुकिनो व्यर्थ-हत्या-काण्ड-व्यसनिनो लम्पटाः प्रवलीक्रियन्ते। युष्मादृशैरेव वीरवरैर्गौराङ्ग

कुलीनाः = सत्कुलप्रसूताः। विघट्टयन्ति = मर्दयन्ति।

भीरवः = भयभीताः। स्वार्थम् = स्वीयप्रयोजनाय। स्फुट्येते = विदीर्येते। परतः = ततः परम्। युक्तिभिः = छद्मादिशब्दव्यपदेश्यैस्तन्त्रैः। लम्पटाः = परस्त्रीपातिव्रत्यध्वंसकाः। गौराङ्गेण = महाप्रभुणा, विहितेन =

लोग अपने प्राण की भी उपेक्षा कर धर्म की रक्षा करते हैं न कि कपट प्रबन्ध से धर्म की हानि।

महाराज—[ कुछ क्रुद्ध जैसी मुद्रा में ] वीरवर! हम लोग भी धर्म की रक्षा के निमित्त ही अपने प्राण की भी गणना नहीं करते हैं। हम मराठे भी डरपोक नहीं हैं और न केवल स्वार्थ की सिद्धि के लिए युद्ध ही किया करते हैं। किन्तु काशी आदि पवित्र स्थानों में म्लेच्छों द्वारा किए जाने वाले अत्याचारों को सुनते-सुनते हमारे कान फट गए हैं और हृदय विदीर्ण हो रहा है—अतः असह्य होने के कारण अपने सामर्थ्य के अनुसार सम्मुख हो कर युद्ध में तथा छल आदि युक्तियों के प्रयोग से भी शत्रुओं को जीतने की चेष्टा करते हैं। आप लोगों का यह सत्य भी धन्य है जिसके चलते काशी के विश्वनाथ तथा बिन्दुमाधव आदि के मन्दिरों के विध्वंस में ही आनन्द लूटने वाले तथा व्यर्थ की हत्या में तत्पर ये दुष्ट और भी प्रबल होते जा रहे हैं। आप जैसे वीरों द्वारा ही महाप्रभु

विहित-हरिकीर्तन-पूता वङ्गभूमिर्म्लेच्छ-घातकानां हस्ते समर्पिता। अधुना गवां ब्राह्मणानां च रक्तैः स्नाति। महाराज! दृश्यतां धर्मशास्त्रम्, हत्या साहाय्यमपि हत्या-विशेष एव।

जय०—वीर! विरमस्व। शास्त्र-श्रवणैरेव केशाः श्वेतिताः सन्ति; न त्वातपतापेन। तत्र न बहु वचनीयम्। किन्तु प्रवञ्चनं नाङ्गीचिकीर्षत्येष वृद्धः।

महा०—[क्षण तूष्णीं स्थित्वा] महाराज! तत्किं सदा यवन-पद-दलितयैव स्थास्यते हतभाग्यया भारतभूम्या? सन्दह्यमाने-

सम्पादितेन, हरिकीर्त्तनेन = भगवद्यशोगानेन, पूता = पवित्रा। हत्यायाः साहाय्यम् = साहायकम्। हत्याविशेषः = मारणभेदः। "अनुमन्ता विशसिता निहन्ता क्रय विक्रयी" इत्यादिना सहायकादीनामपि घातकस्य धर्मशास्त्रकारैर्विस्पष्टीकृतम्।

शास्त्रश्रवणैः = श्रुत्यादिश्रुतिव्याख्याने, केवल श्रवणेन कृत नार्थो दशायीति कवेरभिप्रायम्। आतपतापेन = घर्मतपनेन। तत्र = शास्त्र-विषये। न बहु वचनीयम् = नाधिक वक्तव्यम्। परास्तानामेव यथा योऽनुमतो वयसि देन विषयमनभिप्राय स्वबोधत्वापनाया। प्रवञ्चनम् = धौर्त्यम्। नाङ्गीचिकीर्षति = नोररीकर्तुमिच्छति।

यवनानां पदेन दलितया = मर्दितया। हतभाग्यया = भागधेयविरहि-

---

गौराङ्ग के हरिकीर्तन से पवित्र बङ्गदेश की पृथिवी इन हत्यारे यवनों के हाथ में समर्पित होकर आज गो-ब्राह्मण के रक्त से स्नान कर रही है। महाराज! धर्मशास्त्र देखा जाय, हत्या करने में सहायता देना भी तो एक प्रकार की हत्या ही है।

जय०—वीर! आप विराम दो। मेरे ये बाल धूप की गर्मी से नहीं प्रत्युत शास्त्र-श्रवण में ही पक चुके हैं। अतः शास्त्र की अधिक बातें अनावश्यक हैं। परन्तु यह वृद्ध कपट करने में सम्मति नहीं दे सकता।

महाराज—[क्षण भर मौन रह कर] महाराज! तो क्या इस

नैर वर्तिष्यते चातुर्वर्ण्येन ? वम्भज्यमानेनैव वा भविष्यते सनातनधर्मेण ? अहह ! अस्मदीये कोङ्कणदेशे कोटिशो जना सुखेन स्वधर्ममनुतिष्ठन्ति, भेरीराहत्य सनातनधर्मस्य जयमुद्घोषयन्ति, चन्द्र-चुम्बि-कलशाग्रेषु माधव-मन्दिरेषु च सशङ्खवादमारार्तिक-महोत्सवान् अनुभवन्ति, किन्तु निखिलमिदमद्य श्रीमता संशयमारोपितम्। यदि वशवदतामङ्गीकुर्याम्, तदधुनैव सुखेन यवनाः प्रविश्य प्रतिमन्दिरं पार्श्वतो मज्जितस्थानानि निर्माय कलहमारप्स्यन्ते। यदि भवताऽऽहवयुतमूरीकुर्य्याम्; तत् प्रथमं भगवती

---

सदा। भारतभूम्या = हैन्दवधरित्र्या। दन्दल्यमानेनैव = अतितरां दलनमधिगच्छतैव। चातुर्वर्ण्येन = चतुर्णां वर्णानां समाहारः चतुर्वर्णम्, तदेव चातुर्वर्ण्यम्, तेन। स्वार्थे ष्यञ्। वम्भज्यमानेनैव = अतितरां भुज्यमानेनैव। जयम् = विजयम्। उद्घोषयन्ति = प्रकटयन्ति। चन्द्रचुम्बिकलशाग्रेषु = शशिसंस्पर्शिशृङ्गेषु। सशङ्खवादम् = कम्बुवादनपुरस्सरम्। आरार्त्तिकमहोत्सवान् = आरार्तिक्यमहोत्सवान्। पार्श्वतः = समीपे।

---

भाग्यहीन भारत भूमि को सब दिन यवनों के लात खाने ही होंगे ? क्या यहाँ के चातुर्वर्ण्य को सब दिन भूयो भूयः विदलित हो कर हा रहना होगा ? क्या सनातन धर्म को दिनानुदिन क्षीण ही होना पड़ेगा ? हाय ! हमारे कोङ्कण देश (= सह्य नाम के पर्वत तथा समुद्र का मध्यवर्ती भूभाग) में करोड़ों व्यक्ति सुखपूर्वक प्रतिक्षण अपने अपने धर्म का अनुष्ठान किया करते हैं, डङ्का बजाकर सनातन धर्म की जयध्वनि किया करते हैं, चन्द्रमा को चूमनेवाले शिखरों से सम्पन्न भगवान् विष्णु के मन्दिरों में शङ्खवादनपूर्वक आरती प्रदानात्मक महोत्सव मनाया करते हैं, किन्तु आज आपने इन सारी चीजों को संशय में डाल दिया। यदि मैं यवनों का आधिपत्य मान लूँ तो आज ही ये यवन सुखपूर्वक प्रत्येक मन्दिर में प्रवेश कर जायेंगे और मन्दिरों के सटे मस्जिद बनवाकर झगड़ना शुरू कर देंगे। यदि आपके साथ युद्धरूपी जुआ प्रारम्भ कर दूँ तो प्रथमतः तो यह ऐश्वर्यशालिनी

भारतभूः ब्राह्मणानां क्षत्रियाणाञ्च मांस–रुधिर–कर्दमेन पङ्किला भविन्नी, परतश्च भवादृशेषु भारतरत्नेषु प्रजामण्डलं निष्कण्टकीकृत्य यवनराजहस्ते समर्पितवत्सु, पुनस्तदेव मन्दिर-मर्दनम्, तीर्थमन्थनम्, वेदच्छेदनम्, धेनुध्वसन च पदे पदे संवत्स्यते। अहह! प्राणानगणयित्वा रक्षितोऽपि मयाऽयं देशोऽद्य भवचन्द्र-हास–चन्द्रिका–चुम्बितोऽसाध्येन दुर्दशा–ज्वरेणोल्लीढः। किमिव करोमि? महाराज! पूर्वं जहि मां तीक्ष्णेन च्छुरिकाग्रेण, परतश्च देशमिमं यवनहस्तगतं विधास्यसि। [ इति कथयन् काश्चिदश्रुबिन्दूनपातयत् ]

---

आरप्स्यन्ते = उपक्रमिष्यन्ते। आहवद्यूतम् = युद्धपणम्। मांसरुधिरकर्दमेन = मांसरक्तपङ्केन। पङ्किला = कर्दमभरिता, निष्कण्टकीकृत्य = शत्रुशून्यं विधाय। मन्दिराणां मर्दनम् = पातनम्। वेदानां छेदनम् = भेदनम्। धेनूनाम् = पयस्विनीनाम्, ध्वंसनम् = हननम्। संवत्स्यते = सम्पत्स्यति। भवचन्द्रहासचन्द्रिकाचुम्बितः = भवदसिकौमुदीस्पृष्टः। दुर्दशैव ज्वरः तेन। उल्लीढः = आघ्रातः। तीक्ष्णेन = खरतरेण। जहि = मारय।

---

भारतभूमि ब्राह्मणों और क्षत्रियों के मांस शोणितमय कीचड से भर जायेगी और पीछे आप जैसे भारतरत्नों द्वारा यवनराजों के हाथ में निष्कण्टक बनाकर प्रजामण्डल के समर्पित कर दिये जाने पर पुनः पूर्ववत् मन्दिरों का विध्वंस, तीर्थों की पवित्रता का विनाश, वेदों का उच्छेद एवम् धेनुओं का वध प्रतिपल होने लग जायेंगे। हाय! अपने प्राण की उपेक्षा कर जिस देश का मैंने सरक्षण किया वह आज आपके चन्द्रहास (तलवार) की चन्द्रिका से चुम्बित होकर एक असाध्य दुर्दशारूपी ज्वर से आक्रान्त हो गया है। क्या करूँ? महाराज! आप अपने छुरे के तीखे नोक से पहले मुझे ही मार डालें और पीछे इस देश को यवनों के हाथ में समर्पित कर देंगे [ ऐसा कहते कहते शिवाजी कुछ अश्रुबिंदु गिराए ]।

जय०—[ तदाकर्ण्य, स्वयमपि ग्लान इव, मुखं परिवर्त्य चक्षुषी सम्मर्द्य ] महाराष्ट्रराज ! "भवितव्यं भवत्येव नारिकेलफलाम्बुवत्" । तदलं महता शोकेन । दृश्यताम्—किं किं न कृतं राजपुत्रदेशीयैः क्षत्रियैः ? किन्तु ये युद्धक्षेत्रे धारातीर्थे करप्रदताग्लानिं चिक्षालयिषन्तो जीवनमपि तृणाय मन्यमाना देहमपातयन् ; तेषां पुत्रपौत्रा अधुना करप्रदाः संवृत्ताः । प्रबलैः सह विरोधो न भवत्येव सुखकरः । यदि भवान्मामपि युद्धे हन्यात् ; तत् सम्राजा कश्चन परः सेनानीः प्रेषयिष्यते, तस्मिन्नपि च दैवाद्धते, अपरोऽपरः समायास्यति—इत्येवं न सम्भवत्यन्तो महाराष्ट्रदेशदुर्दशायाः ! यत्र च चिरं

ग्लान इव = गतहर्ष इव । नारिकेलफले यथाऽन्तराले, अम्बु = जलम्, तद्वत् । "गच्छति भुक्तक याति गजभुक्तकपित्थवत्" इत्युत्तरार्द्धम् । करप्रदता-ग्लानिम् = राजस्वविभाणनमालिन्यम् । चिक्षालयिषन्तः = क्षालयितुमभिलषन्तः । करप्रदाः = राजस्वदायिनः । सेनानीः = वाहिनीपतिः । महार्घ-

जय०—[ शिवाजी की बात सुनकर स्वयम् भी कुछ खिन्न होकर, मुँह फेर कर और आँखों को मसल कर ] महाराष्ट्रराज ! "जिस प्रकार नारिकेल के फल के भीतर भी जल घुस ही जाता है उसी प्रकार भवितव्य होकर ही रहता है" । अतः अधिक शोक करना निरर्थक है । देखिए—राजपुताने के क्षत्रियों ने क्या क्या नहीं किया ? किन्तु युद्धक्षेत्र धारातीर्थ में यवनों को कर देने की ग्लानि के प्रक्षालनार्थ अपने जीवन को भी तृणवत् समझ कर जिन क्षत्रियों ने अपने शरीर भी छोड़ दिए उन्हीं के पुत्र पौत्र आदि आज यवनों को कर दे रहे हैं। प्रबल व्यक्तियों के साथ विरोध अच्छा नहीं होता । यदि आप मुझे भी युद्ध में मार डालेंगे तो दिल्ली-सम्राट् किसी अन्य सेनापति को भेज देंगे, भाग्यवश उसके भी मार दिए जाने पर तीसरा-चौथा सेनापति आता ही रहेगा—इस प्रकार महाराष्ट्र देश

युद्धानि भवन्ति, तत्रैव प्रायशो रोगा आपतन्ति, तत्रैव दरिद्रता पदमादधाति, तत्रैव च क्रमशः सर्वं महार्घतामाप्नुवद् भयानकं दुर्भिक्षं जनयति-इति चिर-युद्ध हतोत्साहा प्रजा भटाश्च हतोत्साहा भवन्ति-एतोऽस्मिन्नेवावसरेषु सन्धी राजधर्मः।

महा०—[ क्षणं विमृश्य ] महाराज ! भवान् वृद्धो दीर्घदर्शी राजधर्म्म-मर्म्मज्ञश्चेति मामप्यनुशास्तु। नाहं यवनरुधिरतृषितं खड्गं राजपुत्रदेशीय क्षत्रियरक्तैरारक्तयितुमिच्छामि, न वा मम सहचराः स्वबान्धवाविशेषैर्भावत्कैर्योद्धमुत्सहन्ते। तद् यदाज्ञाप्यते, तदेव मे

---

ताम् = बहुमूल्यप्राप्यवस्तुताम्। दुर्भिक्षम् = अकालम्। चिरयुद्धहतोत्साहाः = दीर्घसङ्ग्रामविधुतसाहसा। सन्धि', मूले "रो रि" लोपे 'ढूलोपे पूर्वस्य दीर्घोऽणः" इति दीर्घे च दीर्घप्रयोग।

अनुशास्तु = अनुशां ददातु। यवनरुधिरतृषितम् = म्लेच्छरक्तपिपासितम्। आरक्तयितुम् = लोहितीकर्तुम्। स्वबान्धवाविशेषैः = निजभ्रातृकल्पैः। उत्सहन्ते = सन्नद्धा भवन्ति। शिरोधार्यम् = शीर्षग्राह्यम्।

---

की दुर्दशा का अन्त नहीं होने वाला है। जिस देश में चिरकाल तक युद्ध चलता है वहाँ तरह तरह के रोग फैल जाते हैं, वहाँ दरिद्रता भी आ जाती है, वहाँ सारी चीजें इतनी महँगी हो जाती हैं कि भयङ्कर अकाल उत्पन्न हो जाता है—इस प्रकार चिरकालीन युद्ध से प्रजा तथा वीरसेना भी हतोत्साह हो जाती है। इसलिए ऐसे विषम समय में सन्धि कर लेना ही राजधर्म है।

महा०—[ थोड़ी देर तक सोचकर ] महाराज ! आप वृद्ध दूरदर्शी तथा राजनीति के मर्मज्ञ हैं। अतः मुझे भी आप शिक्षा दें। मैं यवनों के रुधिर के प्यासे तलवार को राजपुताने के निवासी क्षत्रियों के रक्त से रंगना नहीं चाहता, और मेरे सहायक वीर भी अपने बान्धवों के सदृश आपके सहायक क्षत्रियों से लड़ना पसन्द नहीं करते। अतः आपकी जो आज्ञा होगी

शिरोधार्यम्! यथा श्रेयो भवति तथैवानुशास्योऽयमनुगतः।

जय०—वीर! सन्धिरेव श्रेयान्। कोङ्कणदेशे धर्मविप्लवोऽपि चैवं नाऽऽशङ्कनीयः। यतो भवान् केवलं करं दास्यति, स्वप्रजाश्च स्वयमेव पालयिष्यति।

महा०—यदि ते बलान्मम शासने हस्तं क्षिपेयुः?

जय—मा भैषीः। अहं प्रतिजाने न भविष्यति तथा। यथा राजपुत्रदेशीयभूपेषु करप्रदेष्वपि तत्र न हस्तक्षेप एषाम्; तथाऽत्रापि संवर्त्स्यति।

महा०—महाराज! बाल्येऽहं चिरं स्वप्नानपश्यम्—यद् दुराचारैर्म्लेच्छैः सह प्रतियोद्धुं स्वदेशस्य स्वातन्त्र्यं धर्मञ्च रक्षितुं मां स्वयं भगवती दुर्गाऽऽदिशतीति। तादृश-स्वप्नावलोकन-वर्द्धि-

श्रेयः = कल्याणम्। अनुशास्यः = उपदेश्यः। अनुगतः = अनुयायी।
प्रतिजाने = प्रतिज्ञां करोमि।

वह मेरे लिये शिरोधार्य है। जिस प्रकार कल्याण सम्भावित हो उसी प्रकार अपने अनुयायी मुझे आप उपदेश दें।

जय०—वीर! सन्धि कर लेना ही श्रेयस्कर होगा। इससे आपको अपने कोङ्कण देश में धर्म विप्लव की कोई आशङ्का नहीं करनी चाहिए, क्योंकि आपको तो केवल दिल्लीसम्राट् को कर देना होगा, अपनी प्रजा का पालन तो आप स्वयम् करेंगे।

महा०—परन्तु यदि ये यवन मेरे शासन में बलात् हस्तक्षेप करें!

जय०—आप डरें नहीं। मैं आपसे प्रतिज्ञा करता हूँ कि वैसा नहीं होगा। जिस प्रकार कर देनेवाले राजपुताने के राजाओं के शासनकार्य में यवनसम्राट् का हस्तक्षेप नहीं होता उसी प्रकार आपके प्रसङ्ग में उनका हस्तक्षेप नहीं होगा।

महा०—महाराज! बाल्यावस्था में मैं कई बार ऐसे स्वप्न देखे थे कि अपने देश के स्वातन्त्र्य तथा धर्म के संरक्षण के लिये दुराचारी यवनों के साथ युद्ध करने के लिये भगवती दुर्गा मुझे स्वयम् आकर आदेश दिया

तोत्साहः क्रमेण यदकरवम्, तन्मन्ये तिरोहितं नास्ति श्रीमत्निकटे। तदधुना विमूढ इव पृच्छामि, कीदृशा मे स्वप्नाः? कीदृशं चानुष्ठितवानस्मीति?

जय०—वीर! अस्मद्देशे स्त्रियोऽपि तव गीतीर्गायन्ति, भारतस्य सुपुत्रोऽसि, भारतस्य रत्नमसि, आर्यवंशस्य ध्वजोऽसि। सत्यास्ते स्वप्नाः। अनुपमं तवोद्देश्यम्। भगवती सफलयतु तव मनोरथान्।

महा०—राजन्! प्रतिदिनं वर्द्धमाने यवनप्रतापे कथं स्युः सफला मनोरथाः?

जय०—वीर! क्वास्ति वर्द्धमानः प्रतापः? एष दुराचारकीटैरेवायं जर्जरितान्तःसारः सवर्त्तितोऽस्ति, तन्निश्चितामिमां वाचम्

तिरोहितम् = अज्ञातम्। विमूढ इव = गतमतीव इव। अनुष्ठितवान् = कृतवान्।

अनुपमम् = अतुलम्, उपमारहितम्।

वर्द्धमाने = एधमाने।

दुराचारा एव कीटाः = क्षुद्रजीवाः, कृमयः, तैः। अयम् = प्रतापः। जर्जरितान्तःसारः = विध्वस्ताभ्यन्तरिकबलः। सवर्त्तितः = कारितः। महा-

करती थीं। उस तरह स्वप्नों के देखने के कारण उत्साह के बढ़ जाने से क्रमशः मैंने जो जो कार्य किए हैं, मैं समझता हूँ कि वे आपसे छिपे नहीं हैं। परन्तु आज विमूढ-सा होकर मैं आपसे पूछ रहा हूँ कि मेरे वे स्वप्न कैसे थे और मैंने किस तरह के कार्य किए थे?

जय०—वीर! हमारे देश की स्त्रियाँ भी आपका गुणगान किया करती हैं। आप भारतमाता के सपूत हैं, इस देश के रत्न हैं और आर्यकुल के विजय-ध्वज हैं। आपके स्वप्न सत्य हैं। आपका उद्देश्य भी अनुपम है। भगवती जगदम्बा आपके मनोरथ को सफल बनाएं।

महा०—महाराज! यवनों के प्रताप के इस प्रकार बढ़ते रहने पर मेरे मनोरथ कैसे सफल होंगे?

जय०—वीर! बढ़ता हुआ प्रताप कहाँ? अपने दुराचारस्वरूप कीड़ों

यगन्छ, मौद्गल-राज्यं न चिराय स्थास्यति। इदमधुनैव महापातकैः कृत्तमूलं सवृत्तमस्ति। परञ्च प्रतिदिनमेतस्य क्षयः—इति काशीस्थ - बिन्दुमाधव - विश्वनाथादि - मन्दिर-समीपस्थ महामस्जिदस्थानेषु घूंकारैर्घूका घोरं घोषं विधास्यन्ति, वरटाः सरटाः करटाश्च क्रीडिष्यन्ति, तैलपायिकाश्च विष्ठाभिर्मलिनयिष्यन्ति।

महा०—दानबन्धो! भवादृशेषु सहायेषु कथमेवं सम्भवति?

जय०—अहं वृद्धोऽस्मि। न चिरं जीवामि। यावतीनां प्रजानाञ्च हृदये जाज्वल्यते वैरवह्निः। एतदीया मण्डलशासका अनुचरा

पातकैः = अहिंस्यहिंसनादिभिः। कृत्तमूलम् = छिन्नाधारम्। क्षयः = विनाशः। घूङ्कारैः = घू शब्दैः। घूकाः = उलूकाः। घोरम् = अश्राव्यम्। घोषम् = रवम्। वरटा = हंसयोषितः। सरटाः = कृकलासाः। करटाः = काकाः। क्रीडिष्यन्ति = क्रीडा विधास्यन्ति। तैलपायिकाः = जतुकाः। "जतुका जिनपत्रा स्यात्तरोष्णी तैलपायिका" इत्यमरः। विष्ठाभिः = गूथैः। मलिनयिष्यन्ति = मलिनतामानेष्यन्ति। सप्तमीमयतादाशीरियं वृद्धस्य कवेश्चेति महामायामन्यर्थयामः।

यावतीनाम् = समस्तानाम्। मण्डलशासकाः = भूखण्डरक्षकाः,

से ही इनके प्रताप का अन्तस्तत्त्व जर्जरित हो चुका है। मेरे कथन को आप निश्चित समझें। मुगलों का राज्य चिरकाल तक नहीं रहने वाला है। महापातकों से इनका राज्य अब छिन्नमूल हो चुका है। आगे भी दिनानुदिन इनके राज्य का क्षय होने ही वाला है। इसलिए काशी के बिन्दुमाधव तथा विश्वनाथ आदि मन्दिरों के पास बने बडे-बडे मस्जिदों में उल्लू भयङ्कर घूङ्कारात्मक शब्द करेंगे, हंसिनियों, छिपकलियों तथा कौओं की क्रीडा होगी और चमगादड़ विष्ठा से उन मस्जिदों को गन्दे करेंगे।

महा०—दीनबन्धो! आप जैसे वीरों की सहायता मिलते रहने पर यवनों की यह दशा कैसे सम्भावित है?

जय०—मैं वृद्ध हूँ। अब अधिक दिनों तक मैं जीने वाला नहीं हूँ। दूसरी बात यह भी है कि समस्त प्रजाओं के हृदय में शत्रुता की ज्वाला

अपि गूढं विद्विषन्ति। कथं शासनमूरीकरणीयमिति बहुश एनं पत्रद्वारा बोधितवानस्मि। नैषोऽस्मदुपदेशाञ्शृणोति, प्रजाः पीडयति, बान्धवेष्वपि वैरायते, निज-धर्म-धुर्याणां मौलिवीनामपि च न कर्णे करोति वाचः। आसन्न-विनिपातानि भवन्तीदृश शासकाध्युषितानि सिंहासनानि।

महा०—शान्तं पापम्! प्रतिहतममङ्गलम्!! चिरं जीवतु महाराजः!! [ क्षण द्वावपि तूष्णीकौ स्थितौ, परतश्च पुनः किञ्चिद्विचार्य

"सूबेदार, नवाब" इत्यादिपदवाच्या। गूढम् = अप्रकटम्। विद्विषन्ति = शत्रुत्वमाचरन्ति। पत्रद्वारा, महाराजजयसिंहेन "अवरङ्गजीब" सम्बोध्य लिखितमेकं पत्रं तन्मुद्राङ्कितं काशीस्थाग्रवालश्रेष्ठिरामनारायणदासमहोदयानां निकट आसीत्। तद् यथास्थितं भारतेन्दुहरिश्चन्द्रमहाशयेन मुद्रितम्, तच्च शिवराजनिजप्रकारेण साक्षादवलोकितम्, भारतेन्दुना च निजे "बादशाह दर्पण"-नामधेये पुस्तके प्रकाशितमिति मूलकारानुमोदिता च टिप्पणी। बान्धवेषु = भ्रातृषु। अवरङ्गजीवकर्तृकं भ्रातृवधादि नातितिरोहितमितिवृत्तविदाम्। आसन्नविनिपातानि = अविकटविनाशानि।

धधक रही है। इनके सेवक जिलाधीश या प्रान्ताधिपति भी इनसे बहुत द्वेष कर रहे हैं। किस प्रकार का शासन चलाना हितकर होगा—इस विषय को मैं पत्रों द्वारा अनेक बार यवनसम्राट् को समझा चुका हूँ। परन्तु मेरे उपदेशों की उपेक्षा कर वे प्रजाओं को पीड़ित कर रहे हैं, मित्रों के साथ भी शत्रुवत् आचरण किया करते हैं, यवन धर्मशास्त्र में निपुण मौलवियों की बातें भी नहीं सुन रहे हैं। इस तरह के शासकों से अधिष्ठित राज्यसिंहासन का पतन निकटभावी होता है।

महा०—पाप की शान्ति हो चुकी। अमङ्गल का विनाश हो चुका। महाराज चिरायु हों।

[ थोड़ी देर तक दोनों ही चुप रहे, बाद में कुछ सोच-विचार कर महाराष्ट्रराज ने पुनः कहा—] मैंने तो चिरकाल तक दिल्लीसम्राट् से युद्ध

प्रोवाच महाराष्ट्रराज. ] अहं चिरमयुध्ये—इति दिल्लीश्वरः कथं मैत्र्या वर्तिष्यते—इति सशये।

जय०—भवन्तमतिमात्रमित्र मंस्यते दिल्लीश्वरः, यदि भवान् तस्य किमपि कार्यं साधयेत्।

महा०—किं तत्?

जय०—कार्यत्रयमुपस्थितमस्ति।

महा०—किं किम्?

जय०—प्रथमन्तु गोलखण्डनाथाते दिल्लीश्वरे तत्समीपमागच्छन्ती तद्दुहिता रोमवती रमनारी मार्ग एव कैश्चन लुण्ठकैरपहृता, साऽन्वेषणीया।

महा०—[ मनस्येव प्रसीदन् ] द्वितीयम्?

जय०—द्वितीयतो भवतैव सह योद्धुं प्रस्थितो राजकुमारो

---

अयुध्ये = समग्रामयम्, आत्मनेपदे लङुत्तमपुरुषे। मैत्र्या = मित्रतया। वर्तिष्यते = व्यवहरिष्यति। सशये = सन्दिग्धे। लङुत्तमैकवचनम्।

---

किया है—इसलिए मुझे सन्देह हो रहा है कि वे मेरे साथ मैत्री करने को तैयार हों।

जय०—यदि आप दिल्ली सम्राट् का कुछ काम सिद्ध कर देंगे तो वे आपको बहुत बड़ा मित्र मानने लग जायेंगे।

महा०—कौन सा काम?

जय०—सम्प्रति तीन काम प्रस्तुत हैं।

महा०—कौन कौन सा?

जय०—पहला काम तो यह है कि दिल्लीसम्राट् के गोलखण्ड आने पर उनके पास आती हुई उनकी लड़की रोशनआरा को कुछ लुटेरों ने गायब कर दिया है, अब उसे ढूँढ लाना है।

महा०—[ मन ही मन प्रसन्न होते हुये ] दूसरा काम क्या है?

जय०—दूसरा काम यह है कि आप ही के साथ युद्ध करने के लिये

मायाजिह्मः कुत्राप्यटवीष्वपभ्रष्टः, स तु नाद्यापि लब्धः—इति सोऽपि मार्गणीयः।

महा०—[ मनसि स्मयमान इव ] आम् ! तृतीयम् ?

जय०—तृतीयस्तु विजयपुरेश्वरेणाऽऽहवोऽनुष्ठेयः।

महा०—[ सहर्षम् ] एतत् त्रयमपि साधयिष्यामि।

जय०—इतोऽप्यधिकं किं नाम स्यात् कारणं तोषस्य ? परं विजयपुराधीशेन योत्स्यते भवानिति न सन्देहः, किन्तु शिष्टं कार्यद्वयं साधयिष्यत्येव—इति कथं विश्वस्याम् ?

ततः शनैः शनैरुभयोर्बहव आलापाः सञ्जाताः। परिशेषे च जयपुराधीशेनोक्तम्—सर्वमवगतवानस्मि। श्व एव मायाजिह्मं

अटवीषु = अरण्येषु। अपभ्रष्टः = मार्गच्युतः। मार्गणीयः = अन्वेषयितव्यः।

आहवः = सङ्ग्रामः।

विश्वस्याम् = विश्वासं कुर्याम्। दुष्करत्वादित्यविश्वासः।

---

प्रथित राजकुमार मुअज्जम किसी जङ्गल में पथभ्रष्ट हो चुके हैं, और आज तक भी वे उपलब्ध नहीं हो पाये हैं। अतः उन्हें भी खोजना है।

महा०—[ मन में कुछ हँसते से ] अच्छा ! तीसरा काम क्या है ?

जय०—तीसरा काम यह है कि बीजापुर के महाराज के साथ दिल्लीसम्राट् की ओर से युद्ध करना है।

महा०—[ हर्ष-पूर्वक ] ये तीनों ही काम मैं कर दूँगा।

जय०—बस ! तो इससे अधिक दिल्लीसम्राट् की प्रसन्नता का कारण क्या होगा ? विजय पुरेश्वर के साथ आप बादशाह की ओर से युद्ध करेंगे, यह तो असन्दिग्ध है, परन्तु अन्य दो काम कर ही लेंगे, यह विश्वास मैं कैसे करूँ ?

तदनन्तर उन दोनों के बीच शनैः शनैः बहुत बातचीत हुई। अन्त में जयपुराधीश ने कहा—मैं सब जान चुका। कल रोशनआरा तथा मुअज्जम

रसनारौ चात्र प्रेषयतु यथा स्वपत्रेण सह तौ दिल्लीं प्रेषयामि। अत्रभवति चात्यन्त दिल्लीश्वरस्य तोषं सम्पादयामि।

महा०—यदाज्ञाप्यते।

जय०—स्वीकृता भवताऽधुना सकरप्रदत्वा मैत्री ?

महा०—सर्वोऽपि भवदादेशः शिरोधार्यः।

ततो जयपुराधीश्वरः प्रतिष्ठासमानं महाराष्ट्रराजं सप्रेम सम्बोध्य प्रोक्तवान् अस्तु, साम्प्रतं निर्गमिष्यति भवान् चेदस्माकीना भटा भवन्तमनुगच्छन्त सिंहदुर्गपर्य्यन्तं कुशलेन प्रापयिष्यन्ति। स तु आर्य ! परमुपकृतोऽस्मि सकरुण-भाषणेनानेन। रात्रौ एकाकिभ्रमणमेवातितरां रोचते मह्यम्। त्वरितगामी आजानेयो बहिरस्ति, क्षणेन मां नेष्यति—इति सप्रश्रयमुक्तवान्।

---

अत्रभवति = माननीय भवति। तोषम् = प्रसन्नताम्।

सकरप्रदत्वा = करलिविभाणना।

प्रतिष्ठासमानम् = प्रस्थातुकामम्। सप्रेम = सानुरागम्। एकाकिभ्रमणम् = एकलचरणम्। त्वरितगामी = शीघ्रगति।

---

को आप यहाँ भेज दें ताकि मैं अपने पत्र के साथ उन्हें दिल्ली भेज सकूँ और आपके प्रसङ्ग में दिल्लीश्वर को अत्यन्त प्रसन्न भी कर सकूँ।

महा०—आपकी जैसी आज्ञा हो।

जय०—अच्छा तो अब आप कर देने के साथ-साथ बादशाह के साथ अपनी मैत्री को स्वीकृत कर चुके ?

महा०—आपका प्रत्येक आदेश शिरोधार्य है।

तत्पश्चात् जयसिंह ने वहाँ से प्रस्थान करने के इच्छुक महाराष्ट्रराज को प्रेमपूर्वक सम्बोधित करते हुये कहा—अस्तु, यदि आप इस समय यहाँ से जाना चाहते हैं तो मेरे भट आपको यहाँ से सिंहदुर्ग तक पहुँचा देंगे। उस पर महाराष्ट्रराज ने विनयपूर्वक कहा—आर्य ! आपकी इस करुणापूर्ण वाणी से मैं अत्यन्त अनुगृहीत हूँ। किन्तु रात में मुझे अकेला चलना ही अच्छा लगता है। साथ ही बाहर एक शीघ्रगामी अच्छा घोड़ा भी बँधा है जो क्षण भर में ही मुझे वहाँ पहुँचा देगा।

तत उत्थाय, ससादरसम्भाषणं प्रचलिते शिवराजे, अम्बरेश्वरोऽपि द्वारपर्य्यन्तमागत्य आश्लिष्य विसृज्य च स्वयमन्तः प्रविवेश।

महाराष्ट्रेश्वरोऽपि निजमाजानेयमारुह्य निवृत्तः, गूढवेषैरनेकैरात्मीयैरनुगम्यमानश्च, क्षणेन सिंहदुर्गमागत्य, जनन्या सह विविधैरालापैश्चिरं विहितजागरः, मन्थरैरङ्गैश्चिन्तासन्तानैकतान एव सुष्वाप।

अथान्येद्युः प्रातरेव तोरणदुर्गं प्रविश्य, रसनारामकथयद् यद्-भद्रे! कष्टमुपस्थितं महाराष्ट्रदेशे, यदेष जयपुराधीश्वरो भवत्याः पित्रा प्रेषितः कटकानां कोटिभिर्योद्धुमायातोऽस्ति। न

---

गूढवेषैः = गुप्तवेषैः। जनन्या = मात्रा। विहितजागरः = अलब्धनिद्रः। मन्थरैः = अलसैः। चिन्तासन्तानैकतान एव = चिन्ताविनिमग्नान्तरङ्ग एव। सुष्वाप = निद्रां चेके।

अन्येद्युः = परस्मिन् दिवसे।

कष्टम् = खेदः। कटकानाम् = सेनानाम्। कोटिभिः = अनेक-

---

तदनन्तर वहाँ से उठकर सादर सम्भाषण कर वहाँ से शिवराज के प्रस्थान करने के बाद अम्बर देशाधीश्वर भी उनके साथ दरवाजे तक आये और आलिङ्गनपूर्वक उन्हें विदाई देकर पुनः शिविर के भीतर लौट गये।

इधर महाराष्ट्रराज भी अपने तेज घोड़े पर सवार होकर गूढ वेषवाले अपने अनेक बन्धुओं के साथ शीघ्र ही सिंहदुर्ग में प्रवेश कर, अपनी माता के साथ वार्तालाप करने में चिरकाल तक जगने के कारण अङ्गों में आलस्य आ जाने से विविध चिन्ताओं में निमग्न होकर ही सो गए।

दूसरे दिन सवेरे ही तोरणदुर्ग में प्रवेश कर उन्होंने रोशनआरा से कहा—

भद्रे! महाराष्ट्र देश पर सङ्कट आ गया है, क्योंकि आपके पिता द्वारा भेजे गये महाराज जयसिंह बहुत बड़ी सेना के साथ युद्ध से लड़ने आ चुके हैं। मैं नहीं समझ पाता कि आपके पिताजी युद्ध करने के लिये इतने

जाने भवत्यास्तातचरणः किमित्येवं युद्धलोलुपोऽस्ति। वीराणां बहूनि सहस्राणि अस्मत्कोपकृशानुषु दग्धानि। इतोऽपि च न शाम्यति भवत्याः पितुर्युयुत्सा। मया निगृहीताऽपि भवती केवलं सत्कृता। मया वशे कृतोऽपि च भवत्या भ्राता केवलमादृतः। तातचरणश्च भवत्या एवं मैत्रीमपि दर्शयति मयि शत्रुतयैव च व्यवहरति, नेदं भद्रोचितं कार्यम्।

तदाकर्ण्य, सनिःश्वासं सचकितं च प्राह रसनारी—तत्किं भ्राता मे भवत्कारागारे निगडबद्धः?

महाराजः—भद्रे! नास्माभिरीदृशा निगडैः, किन्तु प्रेम्णा

---

कोटिमि। अत्र कोटिशब्दो बहुत्वपरः, समूहैरित्यर्थः। युद्धलोलुपः= युद्धाभिलाषी। अस्माकं कोप एव कृशानवस्तेषु। ज्वलनम्। दग्धानि= प्लुष्टानि। युयुत्सा=योद्धुमिच्छा। आदृतः=सत्कृतः। दर्शयति= प्रकटयति। म० एकवचन शत्रन्तम्। भद्रोचितम्=श्रेष्ठजनयोग्यम्।

भवत्कारागारे=भवद्बन्धके। निगडबद्धः=शृङ्खलायन्त्रितः।

---

उन्मुक्त क्यों हैं। आपके पिता के करोड़ों वीर हमारे कोपानल में दग्ध हो चुके हैं, फिर भी आपके पिता की लड़ने की इच्छा शान्त नहीं हो पा रही है। देखिये—आपको कैद करने के बाद भी मैंने आपका केवल सत्कार किया है। वशीभूत होने पर भी मैं आपके भाई का आदर ही करता रहा हूँ। किन्तु इस प्रकार मित्रता दिखलाने वाले मेरे साथ भी आपके पिता जी शत्रुता-पूर्वक व्यवहार ही किया करते हैं। यह कार्य भले आदमी जैसा नहीं है।

उक्त वचन सुन कर रोशन आरा ने निश्वास एवं आश्चर्य के साथ कहा—तो क्या मेरे भाई आपके कारागार में बेड़ी में बन्धे हैं?

महाराज—भद्रे! इस तरह के लोगों को हम लोग बेड़ियों में नहीं

बद्धयन्ते। मया स्वपुत्र इव सोऽपि महाप्रासादे स्थापितोऽस्ति।

रस०—कतमोऽसौ भ्राता ?

महा०—कुमार-माथाजिह्मः।

रस०—कथमत्राऽऽयातः ?

महा०—सोऽस्माभिर्योद्धुमायात आसीत्।

रस०—अथ किम् ?

महा०—अथ सुन्दरस्य यूनः कुमारस्य हत्यामनिच्छद्भिरस्माकीनैः कथमपि स्वहस्तगत एव कृतः।

रस०—अथ तस्य स्वच्छन्द प्रचारो रुद्धो वा ?

महा०—न किमपि। स्वच्छन्दं सोऽस्मासु विचरति।

---

ईदृशाः=महोदयाः। बद्धयन्ते=यन्त्र्यन्ते, स्वायत्तीक्रियन्त इति यावत्। स्वच्छन्दम्=स्वातन्त्र्यम्। प्रचारः=भ्रमणम्।

---

अपितु प्रेम के बन्धन म ही बान्धते है। मैंने अपने पुत्र के समान ही आपके भाइ को भी राजभवन में ही रक्खा है।

रोशनआरा—मेरे कौन से भाई हैं ?

महाराज—राजकुमार मुअज्जम।

रोशनआरा—वे यहां कैसे आए थे ?

महाराज—हम लोगों के साथ लड़ने के लिए ही वे यहाँ आए थे।

रोशनआरा—तो फिर क्या हुआ ?

महाराज—ऐसे सुन्दर युवक राजकुमार की हत्या नहीं करने की इच्छा वाले हम लोगों ने किसी प्रकार उन्हें पकड़ ही लिया।

रोशनआरा—तो क्या उन्हें घूमने फिरने में स्वच्छन्दता दी गई है या नहीं ?

महाराज—कोई प्रतिबन्ध नहीं है। वे तो हम लोगों के साथ स्वच्छन्द हो कर घूमते फिरते हैं।

रस०—[ सास्रम् ] चिराय नापश्यमहं तातमायाजिह्मम्, तद् दर्शयतु भवान् सपदि मे भ्रातरम्।

महा०—मुहूर्त्तेन द्रक्ष्यति भवती। [ इत्युत्थाय दुर्गाध्यक्षं तमानाययितुमादिश्य, पुनरुपविश्य ] गतदिवसेऽहं जयपुराधीशस्य शिबिरं गत्वा बहुशः सन्धिवार्त्तां कृतवानस्मि, किन्तु—

रस०—किं सन्धिं नाङ्गीकरोति?

महा०—अङ्गीकरोति, किन्तु,—

रस०—आम्, कथ्यतां किमीहते सेनापतिः?

महा०—सेनापतिर्भवत्या एवाधीनं मनुते।

रस०—उच्यतामुच्यताम्। अद्यैवाऽहं गत्वा तं युद्धाद् वारयिष्यामि, प्रतिनिवर्तितुञ्च वक्ष्यामि। कथ्यतां किं तेनोक्तम्?

---

अधीनम् = आयत्तम्। मनुते = जानाति।

प्रतिनिवर्त्तितुम् = दिल्लीं गन्तुम्। वक्ष्यामि = कथयिष्यामि।

---

रोशनआरा—[ रोती हुई ] मैं अपने प्यारे भाई मुअज्जम को चिरकाल से नहीं देख पाई हूँ। अब आप अभी उनसे मेरी भेंट करा दें।

महाराज—थोड़ी ही देर में आप उनसे मिलने वाली हैं [ यह कह कर उठ गए और दुर्गाध्यक्ष को कुमार मुअज्जम को वहाँ बुलाने की आज्ञा देकर पुनः बैठ कर ] कल मैंने जयपुराधीश्वर के शिविर जाकर उनसे बहुत प्रकार से सन्धि की बातचीत की है, किन्तु

रोशनआरा——क्या सन्धि की बात वे नहीं मान रहे हैं।

महाराज—मान तो रहे हैं, किन्तु

रोशनआरा—अच्छा तो कहिए सेनापति जी क्या चाह रहे हैं?

महाराज—सेनापति महाशय तो ( इस कार्य को ) आपके वशम्वद ही मानते हैं।

रोशनआरा—कहिए कहिए। आज ही मैं जा कर उन्हें युद्ध करने से रोक दूँगी और यहाँ से लौट जाने को भी कहूँगी। कहिए—उन्होंने क्या कहा है!

महा०—राजकुमारि ! स वक्ति यद्—"महाराजाधिराजो दिल्लीश्वरः कुमार्याः कुमारस्य च पदवीमलभमानोऽत्यन्तं चेखिद्यते। यदवधि स भवतोः प्रनष्टतामश्रौषीत्; तदारभ्य मित्रैर्न हसति, राजसभां नाधितिष्ठति, कलाकौशलानि नावधत्ते, आलापमूर्च्छना न शृणोति, उद्यानेष्वपि च न पर्य्यटति, 'हा वत्स ! मायाजिह्म !! हा वत्से !! रसनारि !!'—इति समाक्रन्द-विलपितोद्भूतैर्बाष्पैरेव श्मश्रु कूर्चञ्च स्नपयति। तत्र भवती महिषी, अन्या भोगिन्यश्च हाहाकारैरेव समयं गमयन्ति।"

---

पदवीम् = पन्थानम्। चेखिद्यते=अतितरां क्लिश्नाति। प्रनष्टताम् = अदृश्यताम्। नाधितिष्ठति = नाश्रयति। "अधिशीङ्स्थासां कर्म"ति समाशब्दस्य कर्मसंज्ञा। नावधत्ते = न विवेचयति। समाक्रन्दात् = रोदनात्। विलपितात् = सशब्दरोदनाच्च, उद्भूतैः = सञ्जातैः। बाष्पैः = अस्रैः। श्मश्रु = उत्तरोष्ठोपरिस्थितां रोमराजिम्। कूर्चम् = चिबुकप्ररूढां रोमावलिम्। महिषी = पट्टराज्ञी। भोगिन्यः = इन्द्रियतृप्तिमात्रार्थमङ्गीकृताः। "कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः।" इत्यमरः।

---

महाराज—राजकुमारी ! सेनापति महाशय कह रहे हैं कि महाराजाधिराज दिल्लीवल्लभ आप तथा राजकुमार मुअज्जम को नहीं पाने से अत्यन्त खिन्न हैं। जब से उन्होंने आप दोनों के खो जाने की बात सुनी है तब से वे अपने मित्रों के साथ हँसते भी नहीं, राजसभा में भी नहीं बैठते, कला कौशल की ओर भी ध्यान नहीं देते, सङ्गीत की मूर्च्छना को भी नहीं सुनते, उद्यान में भी नहीं घूमते और 'हाय बेटा ! मुअज्जम !, हाय बेटी ! रोशन आरा !' इस प्रकार क्रन्दन तथा विलाप करने से उत्पन्न अश्रुधारा से अपनी मूँछ-डाढ़ी को स्नान कराते रहते हैं। सम्मान्य महारानी तथा अन्यान्य रानियाँ भी 'हाय ! हाय !' करके ही किसी प्रकार समय बिता रही हैं।

रस०—[ साश्रुपातम् ] हा तात ! हा मातः !! [ इति रोदिति ]

महा०—समाश्वसितु समाश्वसितु भवती, शीघ्रं द्रक्ष्यति भवती पितरौ।

सतश्चिरं यावत् सान्त्वनामयं नीतिगर्भं दर्शित-पितृस्नेह-वर्षं-श्चाऽऽलपत् कुमार्या सह महाराष्ट्राध्यक्षः, तावत् प्रतीहार्य्या प्रविश्योक्तम्—भगवन् ! दिल्लीश्वरकुमारः समायाति—इति। स तु श्रुत्वैवोत्थाय बहिर्निर्गत्य तं प्रणमन्तमालिङ्ग्य, एकाकिनमन्तः प्रावेशयत्।

तत्र स भगिनीमवलोक्य कथं चमत्कार, कथं वा ताभ्यां परस्परं प्रेमभारा विभराम्बभूविरे, काभिर्वा कथाभिः कतिचन क्षणा अतिवा-

---

द्रक्ष्यति = अवलोकयिष्यति। माता च पिता च पितरौ। "पिता मात्रा" इत्यनेनैकशेषः।

सान्त्वनामयम् = सामप्रचुरम्।

प्रतीहार्य्या = दौवारिक्या। निर्गत्य = निःसृत्य। एकाकिनम्, स्वयमप्यप्रविश्येति चातुर्यस्य परा काष्ठा।

चमत्कार = चमत्कृतोऽभूत्। प्रेमभाराः = गाढस्नेहाः। विभरा-

---

रोशन आरा—[ आँसू बहाती हुई ] हाय बाबू जी ! हाय प्यारी माँ ! [ यह कहती हुई पुनः रोने लग गई ]।

महाराज—आप धैर्य-धारण करें, शीघ्र ही अपने माता पिता को आप देखेंगी।

तदनन्तर चिरकाल तक महाराष्ट्रराज राजकुमारी के साथ सान्त्वनापूर्ण, नीति गर्भित तथा माता-पिता के स्नेह प्रवाह को बहाने वाली वार्ता करते रहे। इसी बीच वहाँ आकर प्रतिहारी ने कहा—भगवन् ! दिल्ली सम्राट के सुपुत्र आ रहे हैं। यह सुनते ही शिवाजी ने उठकर बाहर निकल कर, प्रणाम करते हुए राजकुमार का आलिङ्गन कर उन्हें अकेले ही अन्दर भेज दिया।

अन्दर जाने पर वहाँ अपनी बहन रोशनआरा को देख राजकुमार

ह्याञ्चक्रिरे—इति नायं लेखनीविषयः।

क्रियत्क्षणानन्तरं स्वस्वागमन-गाथामुदीर्य तौ द्वावपि महाराष्ट्रराज-प्रशंसा-परवशौ बभूवतुः। उभाभ्यां निरचायि च यद्-गत्वैव दिल्लीनगरीं दृढं तातचरणोऽभ्यर्थनीयो महाराष्ट्रराजेन सह सन्धातुम्। कुमारेणोक्तम्—"भगिनि! तातः शत्रु-सम्बन्धिनो निगृह्य पशुमारं मारयति। महाराष्ट्रमेघवाहनश्चास्मादृशान् प्राप्यापि प्रेम-पूर-प्रवाहैरेव परिपोषयति—इति स्पष्टं कथयिष्यामि तातमेतेन युद्धं शमयितुम्"। तत उक्तं कुमार्य्या यद्—भद्र! श्रूयते

---

न्वभूविरे = ददृशिरे। अतिवाहयाञ्चक्रिरे = व्यतियापयाञ्चक्रिरे। लेखन्याविषयो न = वक्तुमनर्हं इति तत्त्वम् केवलानुभवैकमात्रवेदितव्य इति यावत्।

स्वस्वागमनस्य गाथाम् = कथाम्। उदीर्य = निगद्य। निरचायि = निश्चयः कृतः। सन्धातुम् = मैत्रीं विधातुम्। शत्रुसम्बन्धिनः = रिपुसम्पर्किणः। पशुमारं मारयति = यथा पशून् हन्ति तथेत्यर्थः। महाराष्ट्रमेघवाहनः = महाराष्ट्रेन्द्रः। "तुराषाण्मेघवाहनः" इत्यमरः। प्रेमपूरप्रवाहैः = अनुरागधाराभिः। एतेन = शिवराजेन, सह। शमयितुं

---

कितना चमत्कृत हुआ, उन दोनों का पारस्परिक गाढ़ प्रेम कितना प्रस्फुटित हो उठा और किस-किस प्रकार की बातों से उन दोनों के कुछ क्षण बीते—इसका उल्लेख नहीं किया जा सकता।

थोड़ी देर के बाद अपने-अपने यहाँ आ जाने की गाथा परस्पर सुना कर वे दोनों महाराष्ट्रराज की प्रशंसा करने में लीन हो गए। उन दोनों ने यह निश्चय कर लिया कि दिल्ली जाते ही वे दोनों अपने पिता से महाराष्ट्रराज के साथ सन्धि कर लेने के लिए दृढ़तापूर्वक अभ्यर्थना करेंगे। बाद में राजकुमार ने पुनः कहा—"प्यारी बहन! पिता जी तो शत्रु-पक्ष के व्यक्तियों को पकड़ कर पशुओं की तरह मार डालते हैं। परन्तु हम लोगों को प्राप्त करने के बावजूद भी महाराष्ट्रराज हम लोगों को अपने प्रेमप्रवाह से ही समृद्ध कर रहे हैं—इसलिए पिता जी से इनके साथ युद्ध न करने के लिए स्पष्ट शब्दों में निवेदन करूँगा।" इस पर

महत्या सेनया जयपुरेश्वरो महाराष्ट्राञ्छलभनाशं प्रणाशयितुं प्रेषितोऽस्ति।

माया०—आः! अधुनैव गत्वा निवारयामि जयपुरेश्वरम्।

रस०—भद्र! श्रूयते युद्धमधुनाऽपि नाऽऽरब्धवान्। सन्धिश्च प्रस्तूयते।

ततः पित्रोर्दुःखविषयेऽपि सास्रं कथितवती कुमारी। कुमारोऽपि सवाष्पमाकर्ण्य, बहिरागत्य महाराजं प्रणम्य, सगद्‌गदमुवाच—

महाराज! श्रीमतः स्नेहस्य चिराय ऋणी संवृत्तोऽस्मि, कुशलिनीं

---

प्रणाशयितुम्=शलभमिव नाशयितुम्। शलभानिवानायासेन नाशयितुम्। "उपमाने कर्मणि च" इति णमुल्।

प्रस्तूयते=प्रस्तावविषयता नीयते।

सगद्‌गदम्=अविस्पष्टस्वरम्।

---

राजकुमारी ने कहा—'भइया! मैंने सुना है कि बहुत बड़ी सेना के साथ जयपुर के महाराज को महाराष्ट्रियों को कीड़े की तरह मसल देने के लिए पिता जी ने यहाँ भेज दिया है।'

मुअज्जम—अच्छा, मैं अभी-अभी जाकर जयपुराधीश को रोक दे रहा हूँ।

रोशनआरा—भइया! सुना है कि अब तक युद्ध का प्रारम्भ नहीं हुआ है और सन्धि की बातचीत चल रही है।

तत्पश्चात् अपने पिता के दुःख के बारे में भी आँसू बहाती हुई राजकुमारी ने अपने भाई से कहा। आँसू बहाते हुए राजकुमार ने भी पिता की दुरवस्था को सुन कर, बाहर निकल कर महाराष्ट्रराज को प्रणाम कर गद्‌गदस्वर से कहा—

महाराज! आपके स्नेह प्रदर्शन के लिए मैं सब दिन के लिए आपका ऋणी हो चुका हूँ। साथ ही अपनी बहन को भी सकुशल देख कर

भगिनीमालोक्य चोपकारभाराक्रान्तः शिरोऽप्युन्नमयितुं न शक्नोमि। न जाने कैरुपहारैरानृण्यं प्राप्स्यामि ?

महा०—आयुष्मन्! कथं न कथयेः महता कुमारोऽसि। किन्तु साम्प्रतं जयपुरपुरन्दरो योद्धुमायातोऽस्ति। विहितसन्धिप्रस्तावे च मयि कथितवान्—यत् 'यदि कुमारी कुमारश्च सुखेन दिल्लीश्वरान्तिकं व्रजेताम्; तदवश्यं सन्धास्यति महाराजाधिराजः' इति। स च शिविरस्थः कुमारं प्रतीक्षते।

माया०—एष प्रतिष्ठे यदनुमन्यसे। अवश्यं सन्धानीयं तातेन। अन्यथा नाहं तस्य, न स मम।

---

उपकार भारेण = उपकारनिभरेण, आक्रान्तः = निम्नीकृतः। उन्नमयितुम् = उत्थापयितुम्। आनृण्यम् = ऋणराहित्यम्।

प्रतिष्ठे = प्रस्थानं करोमि। सन्धानीयम् = सन्धातव्यम्।

---

आपके उपकार के भार से मैं इतना दब चुका हूँ कि मैं अपना मस्तक भी आपके समक्ष उठाने में समर्थ नहीं हो पा रहा हूँ। मैं नहीं समझ पाता कि आपके ऋण से मैं किस प्रकार मुक्त हो सकूँगा।

महाराज—आयुष्मन्! आप ऐसी विनम्र बात क्यों नहीं कहेंगे, क्योंकि आप एक महान् व्यक्ति के सुपुत्र हैं। किन्तु इस समय जयपुर के महाराज मुझ से युद्ध करने यहाँ आ चुके हैं। जब मैंने उनके समक्ष सन्धि का प्रस्ताव रक्खा तो उन्होंने मुझ से यही कहा कि यदि राजकुमारी तथा राजकुमार सुख पूर्वक दिल्ली सम्राट् के पास पहुँच जाँय तो दिल्ली सम्राट् आपके साथ अवश्य ही सन्धि कर लें। सम्प्रति अपने शिविर में जयपुर नरेश आपकी प्रतीक्षा कर रहे हैं।

मुअज्जम—यदि आपकी अनुमति हो तो मैं अभी वहाँ के लिए प्रस्थान कर दूँ। पिता जी को तो आपके साथ सन्धि करनी ही चाहिए। अन्यथा न मैं उनका पुत्र हूँ और न वे मेरे पिता हैं।

ततो महाराष्ट्रपतिस्तं प्रतिपूज्य, सादरं स्वकीयैः सह विसृज्य, रसनारीसमीपे पुनरगच्छत्। रसनारी तु अनुभविष्यमाणेन शिव-विरहेण ग्लाना, मुहुर्मुहुस्तातसेनाप्रेषणश्रवणेन कुपिता, माता-पितृ-स्नेह-स्मरणेन च विकला, प्रस्थातुं नोमिति, न वा नेति, वक्तुं पारितवती।

महाराष्ट्रेश्वरश्च तां चलप्रकृतिमगम्भीरस्वभावां चावगत्य, "भद्रे! अलं विषादैः! दिल्लीं गत्वा पित्रोर्दुःखं शमय, मां स्नेहेन सनाथयसीत्यपि कयाचन मुद्रया प्रकटय। तेनानुमन्यमाना च मामप्यनुगृहाण। अन्यथा तु युद्धे संवृत्ते स्वपितरं जिघांसति मयि;

अनुभविष्यमाणेन = किंयत्कालानन्तरमेव भविष्यता। ग्लाना = क्षीणहृया। विकला = खिन्ना। पारितवती = अशक्नुत्।

चलप्रकृतिम् = चञ्चलस्वभावाम्। शमय = शान्तिं नय। सनाथयसि = कृतार्थयसि। मुद्रया = भङ्ग्या। प्रकटय = विज्ञापय। अनुमन्यमाना = अनुमोद्यमाना। अनुगृहाण = अनुकम्पय। शिववीरस्य

तदनन्तर महाराष्ट्रराज राजकुमार का सम्मान कर अपने सेवकों के साथ उन्हें आदर पूर्वक जयपुराधीश के शिविर के लिए भेज कर स्वयम् पुनः रोशनआरा के पास पहुँच गए। किन्तु शिवजी के भावी विरह की चिन्ता से खिन्न, पिता जी के द्वारा महाराष्ट्रराज से युद्ध करने के लिए सेना भेजने की खबर बारम्बार सुन कर अत्यन्त कुपित और माता-पिता के स्नेह के स्मरण से विकल रोशनआरा तो दिल्ली जाने के विषय में अपनी सम्मति या विमति का प्रकाशन नहीं कर सकी।

महाराष्ट्रराज उसे चञ्चल प्रकृति तथा गम्भीरता रहित स्वभाव वाली समझ कर निम्न-लिखित शब्दों में उसे समझाने लगे:—

भद्रे! विषाद करना निरर्थक है। अभी दिल्ली जाकर अपने माता-पिता के दुःख को शान्त करो और उनके समक्ष किसी मुद्रा में तुम मेरे प्रति अपने प्रेम को भी प्रकट करना। यदि तुम्हारे पिताजी की अनुमति हो जाय तो मुझे भी पीछे अनुगृहीत करना। यदि सन्धि नहीं हुई तब तो

श्व एव वा, परश्व एव वा तव स्नेहः कार्श्यमासादयेत्। उत्तिष्ठ, वीरतनयाऽसि, राजकुमार्यसि, न शोभते त्वयि एतादृशश्चिन्ता-वितानः"—इति प्राबोधयत्।

सा च चलप्रकृतितया यथा बोधिता तथैव वर्द्धितोत्साहा सन्धिं विहितमिव, पित्रनुमतिमासादितामिव, पाणिग्रहण-विधिं प्रबध्यमानमिव, आत्मानं च महाराष्ट्रराजेन स्निह्यमानमिव मन्यमाना सपद्युत्थाय सप्रेम समालिङ्ग्य, तन्निर्दिष्टशिबिका-मारुह्य, बहुभिः सखीभिः परिवृता, अनेकैः सादिभिः पादातिकैश्चा-नुगम्यमाना श्रीजयसिंहाध्युषित-शिबिराभिमुखं प्रतस्थे।

दिल्लीगमने कारणमिदमेवेति कथनभङ्ग्याऽन्यथा विवेचयन्तु पण्डिताः। जिघांसति = हन्तुमिच्छति, शत्रन्तम्। कार्श्यम् = दौर्बल्यम्।

पित्रनुमतिम् = जनकानुज्ञाम्। आसादितामिव = लब्धामिव। पाणिग्रहणविधिम् = विवाहविधानम्, प्रबध्यमानम् = समारभ्यमाणम्। बहुभिः = बह्वीभिः। "वोतो गुणवचनात्" इत्यनेन ङीप्प्रत्ययस्य वैकल्पिकत्वम्। पादातिकैः = पदगैः सैनिकैः।

युद्ध छिड़ जाने पर तुम्हारे पिता की हत्या की इच्छा रखने वाले मेरे प्रति कल या परसों ही तुम्हारा स्नेह, शिथिल हो जाएगा। उठो, तुम एक वीर की सुपुत्री हो, राजकुमारी हो, इस प्रकार का चिन्ता-प्रवाह तुम्हें शोभा नहीं देता।

प्रकृति चञ्चल होने के कारण राजकुमारी शिवाजी के समझाने के अनुसार ही उत्साहित हो कर अपने पिता के साथ शिवाजी की सन्धि को सम्पन्न-सी, शिवाजी से प्रेम करने के लिए अपने पिता की अनुमति को सम्प्राप्त-सी, शिवाजी के साथ अपनी शादी को सम्बन्ध-सी और अपने को महाराष्ट्रराज का स्नेह-भाजन-सी मानती हुई शीघ्र ही उठकर, प्रेमपूर्वक शिवाजी का आलिङ्गन कर, शिवाजी द्वारा निर्दिष्ट पालकी में बैठ कर, बहुत सहेलियों से परिवृत हो कर, अनेक घुड़सवारों तथा पैदल अनुचरों के साथ श्रीमान् जयसिंह के शिविर की ओर चल पड़ी।

अथ कालान्तरे महाराष्ट्रराजोऽपि अम्बराधीश्वरस्य निकटे गतः। स चैनमवलोक्य, आलिङ्ग्य, अतिप्रेम्णाऽवादीत्—

वीर! कुमारी दिल्लीं प्रेषितवानस्मि। अनेनोपकारेणात्यन्तं मोदिष्यते दिल्लीवल्लभः। गृह्यतामिदं सन्धिपत्रम्, यानि दुर्गाणि भवता दिल्लीश्वरेण सह युद्ध्वा बलाद् गृहीतानि, तानि निवर्तनीयानि, यथाल्लेखञ्च किञ्चन प्रतिवर्षं देयम्।

महाराष्ट्रमुकुटस्तु, ओमित्युक्त्वा, सन्धिपत्रं गृहीत्वा, किञ्चित् मलिनमुख इव संवृत्तः।

जयपुरेश्वरस्तु—वीर! वर्द्धस्व, अलं शोकेन! समय एव ईदृश एव, साम्प्रतमुत्तिष्ठ, महाराजसाहाय्यं युद्धेषु विधेहि। विजयपुरेश्वर एव दिल्लीश्वरस्याऽऽज्ञां न पालयति—इत्येतेन सह बहूनि समराणि

---

कुमारी = रत्नारीमायाजिष्णौ। एकशेषः कुमारी च कुमारश्चेति।

मलिनमुखः = धूमिलाननः।

समराणि = युद्धानि। "अस्त्रियां समरानीकरणाः" इत्यमरः।

---

तत्पश्चात् कालान्तर में महाराष्ट्रराज भी जयपुराधीश्वर के शिविर में पहुँचे। शिवाजी को देखते ही जयपुराधीश आलिङ्गन कर अत्यन्त प्रेम से कहा—वीर! राजकुमारी तथा राजकुमार को मैंने दिल्ली भेज दिया है। अब आप यह सन्धि-पत्र लेलें और आपने दिल्ली सम्राट् के साथ युद्ध कर जिन दुर्गों को बल से आत्मसात् कर लिया है उन्हें लौटा दें और प्रतिवर्ष सन्धिपत्र के उल्लेख के अनुसार कर के रूप में दिल्लीश्वर को कुछ दिया करें।

स्वीकारात्मक शब्दोच्चारणपूर्वक सन्धि-पत्र के परिग्रहण से महाराष्ट्र-देशमुकुट शिवाजी का मुख कुछ मलिन हो गया।

तदनन्तर जयपुरेश्वर ने शिवाजी से कहा—वीर! आपकी समृद्धि हो। शोक करना व्यर्थ है! यह समय ऐसा ही है, सम्प्रति आप उठें और युद्ध में दिल्ली सम्राट् की सहायता करें। विजयपुर के महाराज दिल्लीश्वर की आज्ञा का पालन नहीं करते—इसलिये उनके साथ कई बार सम्राट् के युद्ध

भूतानि भवन्ति च। तदत्र कौशलं दर्शयित्वा दिल्लीश्वरस्य दक्षिणो बाहुः सवर्तस्व—इत्युवाच।

महाराष्ट्रराजस्तु, अनयाऽपि मुद्रया चिरन्तनसपत्नस्य विजयपुरेश्वरस्य दमनाऽऽदेशश्रवणेन स्फुरितबाहुः सेना आयोजयितुं तत्क्षणादादिदेश।

आसीदासन्नमेव विजयपुराधीशस्य गिरिशिखरस्थमेकं रुद्रमण्डलाभिधं महद् दुर्गम्। तदेव हस्तगतं विधातु कौशलमाचचार शिवराजः। एकान्ते गौरसिंहमाकार्य रात्रौ रुद्रमण्डलस्य पूर्वतः सेना आयोज्य, प्रस्थातुं परभटेषु सम्मुखमायातेषु च,

---

भूतानि = जातानि। कौशलम् = नैपुण्यम्। दक्षिणो बाहुः = वामेतरो भुजः। परमस्नेहभाजनमिति यावत्।

अनयाऽपि मुद्रया = अनेनापि प्रकारेण। चिरन्तन-सपत्नस्य = पुरातनशत्रोः। दमनादेशश्रवणेन = निग्रहाज्ञाश्रुत्या। स्फुरितबाहुः = चपलितभुजः। आयोजयितुम् = सन्नाहयितुम्।

आसन्नम् = समीपवर्त्ति। गिरिशिखरस्थम् = पर्वतकोटिस्थम्। हस्तगतम् = स्वायत्तम्। कौशलम् = नैपुण्यम्। आयोज्य = संघटय्य।

---

हो चुके हैं और हो भी रहे हैं। अतः विजयपुराधीश के साथ होनेवाले युद्ध में अपनी युद्ध-कुशलता का प्रदर्शन कर आप दिल्ली सम्राट् का दाँया हाथ बन जायें।

इस बहाने भी अपने चिरन्तन शत्रु विजयपुरेश्वर के दमन का आदेश सुनकर स्फुरित बाहुवाले महाराष्ट्रराज ने उसी क्षण सेना के आयोजन के लिये आदेश दे दिया।

पास में ही विजयपुरेश्वर का एक पर्वतशिखरवर्त्ती (=पर्वतीय प्रदेश में स्थित) रुद्र मण्डल नाम का दुर्ग था। प्रथमतः शिवाजी ने उसी को जीत लेने की चातुरी की। एकान्त में गौरसिंह को बुलाकर रात में ही रुद्रमण्डल की पूरब दिशा में अपनी सेना का आयोजन कर प्रस्थान करने

पृष्ठतः शनैः शनैरपसरणच्छलेन तान् पुरतो नेतुमादिशत्, स्वयञ्च महान्धतमसे, अन्यजीव-माल्यश्रीक-स्वन्यजीव-रघुवीरादि-सहितः सहस्रं वीरान् सह नीत्वा रुद्रमण्डलस्य पृष्ठतो निभृतं प्रचलितः।

महानेष उच्चो गिरिः, अन्धतमस व्याप्तम्, अविदितचरः पन्थाः, तथाऽपि क्वचिदुत्प्लुत्य, क्वचिच्छाखा आलम्ब्य, क्वचिदुपविश्य, क्वचिन्निर्झरजलान्तः प्रविश्य क्वचिल्लता-जालान्यपसार्य, क्वचिद्विद्धान् कण्टकानपनीय कथं कथमपि दुर्गस्य नेदीयस्याम-धित्यकायामायातः। तावदपश्यद्-यद् दुर्गप्राचीर एका महीयसी काच-मञ्जूषा, अपराऽपराऽपि च स्थापितेति। ततो 'वयमाशङ्किताः'

परभटेषु = शत्रुसैनिकेषु। अपसरणच्छलेन = पलायनव्याजेन। नेतुम् = प्रापयितुम्। महान्धतमसे = गाढेऽन्धकारे। निभृतम् = गूढम्।

उच्चः = उन्नतः। अविदितचरः = पूर्वमज्ञातः। लताजालानि = प्रतानसमूहान्। विद्धान् = चरणादिषु प्रविष्टान्। अपनीय = अपसार्य। नेदीयस्याम् = अन्तिकस्थायाम्। काचमञ्जूषा = रत्नवर्तिका। आशा·

के लिये और शत्रुपक्ष के योद्धाओं के सामने आ जाने पर पीछे से धीरे-धीरे भागने के बहाने उन्हें (= शत्रुपक्षीय योद्धाओं को) आगे कर लेने, अर्थात् पीछे से घेर लेने के लिये आदेश दे दिया और घने अन्धकार में अन्यजीव, माल्यश्रीक, स्वन्यजीव तथा रघुवीरसिंह आदि के साथ एक हजार वीरों को साथ लेकर स्वयम् भी शिवाजी रुद्रमण्डल के पीछे से छिपकर चल पड़े।

यद्यपि वह पर्वत बहुत ही ऊँचा था, घना अन्धकार छाया हुआ था, रास्ता भी पूर्व परिचित नहीं था, तथापि कहीं कूद कर, कहीं वृक्ष की शाखा के सहारे, कहीं बैठकर, कहीं झरने के प्रवाह के माध्यम से, कहीं लताओं के जाल को तितर-बितर कर और कहीं घने काँटों को हटा कर किसी किसी प्रकार उस दुर्ग के समीप की अधित्यका (पहाड़ के ऊपर की समतल भूमि) पर शिवाजी पहुँचे। तब तक उन्होंने देखा कि दुर्ग के घेरे के ऊपर

इति निश्चित्य सर्वे तरुच्छायासु विलीनाः। मुहूर्तानन्तरं पुनस्तूष्णीमुपगच्छन्तो ददृशुर्यत् पञ्चषा यवन-वीराः प्राचीरे पर्यटन्तः सतर्कमथो वीक्षन्ते-इति। पुनस्तेषु तरूणामधो विलीनेषु, घनतमस-वशादनीक्षमाणा मर्मरकारणमलभमाना दौर्गिकाः पुनर्निवृत्ताः। ततः किञ्चिज्जाते पादायानशब्दे, अकस्माद् दुर्ग-प्राचीरस्योपरि, एकः, द्वौ, दश, शत सहस्रञ्च सशस्त्राः पुरुषा दृष्टाः। तेऽपि नैदिष्ठ्यान् दृष्टवन्तः—इति वृक्षतलेषु लीयमानानपि प्रत्यर्थिनः शक्ति-शरासनैस्ताडयितुमारेभिरे।

ततः पुरः समागत्य, प्रत्यक्षं योद्धुमारब्धवता शिववीरेण

---

ङ्किताः = आशङ्काविषयीकृता, दौर्गिकैरिति शेषः। निलीनाः = लुकिताः। प्राचीरे = प्राकारे। सतर्कम् = सावधानम्। मर्मरकारणम् = पत्रध्वनि-हेतुम्। दौर्गिकाः = दुर्गरक्षाधिकृताः। सशस्त्राः = सायुधाः। नैदिष्ठ्यान् = अतिशयान्तिकत्वात्। प्रत्यर्थिनः = शत्रून्।

---

एक दीपक सहित शीशे की पेटी और उसके बाद अन्यान्य भी पेटियाँ पड़ी थीं। तदनन्तर "हम लोगों के यहाँ आजाने की आशङ्का दुर्गरक्षकों को हो चुकी है" यह निश्चय कर सब वृक्षों की छाया में छिप गए। थोड़ी देरके बाद जब ये पुनः चुपचाप आगे बढ़ने लगे तो उन सबोंने देखा कि पाँच छः यवन वीर घेरे के ऊपर घूमते हुए सावधानीपूर्वक देख रहे थे। इसलिये जब पुनः ये सब वृक्ष छाया में छिप गये तो घने अन्धकार में इन सबको नहीं देखते हुये मर्मर शब्द के कारण के परिज्ञान के बिना ही सब दुर्गरक्षक पुनः लौट गये। तत्पश्चात् पुनः पैरों के आगमन के शब्द होने पर अकस्मात् दुर्ग के घेरे के ऊपर एक, दो, तीन, दस, सौ, हजार सशस्त्र योद्धा दीख पड़े। उन दुर्ग रक्षकों ने भी नजदीक होने के कारण इन सब को देख लिया। अतः वृक्ष के नीचे छिपे होने पर भी उन दुर्गरक्षकों ने इन शत्रुओं के ऊपर शक्तियों और बाणों से प्रहार करना प्रारम्भ कर दिया।

तदनन्तर आगे बढ़कर आमने-सामने युद्ध छेड़ देने वाले शिवाजी ने

निर्दिष्टा, 'दृष्टा वयमिति किं व्यर्थाघातसहनैरात्माच्छादनैश्च'—इति स्वयं बोबुध्यमाना सद्वेट सर्वे शिवसहचरा —"हर हर महादेव" इत्युदार्य, प्रत्यक्षीभूय च शाखि-शाखान्तरोदर-सुप्त-पत्रि-पटलान् न्युन्निद्रयन्त, चन्द्र-चन्द्रिका-साक्षिकं घोरं युद्धं विधातुमुपक्रान्तवन्त । यवनशरमल्लाहता बहवो महाराष्ट्रवीरा, चन्द्र-मरीचि-चाकचक्य-चमत्कृतामधित्यकां कोष्ण रुधिर-पातै स्नपयन्त, शिवविजय-कुङ्कुमेनेव चर्चयन्त, ससूर्यभेदं स्वर्गं प्रविष्टनाना शिर प्रणमन्त इव च पेतु । महाराष्ट्र शरासन-मुक्त शिला

व्यर्थाघातसहनै = निष्प्रयोजनताडनमरणै । आत्माच्छादनै = स्वगोपनै । अनुबुध्यमाना = अवितथ जानन्त । प्रत्यक्षीभूय = साक्षाद् देव पुरत आगत्य । शाखिशाखान्तरोदरसुप्तपक्षिपटलानि = द्रुमावयवमध्यप्रसुप्तानिद्रविहगसमूहान् । उन्निद्रयन्त = जागरयन्त । चन्द्रचन्द्रिका-साक्षिकम् = हिमदीधिति किरण-प्रत्यक्षदर्शकम् । चन्द्रस्य मरीचीनाम् = किरणानां चाकचक्येन चमत्कृताम् । कोष्णरुधिरपातै = कदुष्णरक्तपतनै । शिवविजयस्य कुङ्कुमेन = केशरेण । चर्चयन्त = लिम्पन्त । ससूर्यभेदम् = बिम्बदीधितिमण्डलभेदनपुरस्सरम् । महाराष्ट्राणाम्, शरास-

अपने अनुयायियों से कहा—"अब हम लोगों को इन सबों ने देख लिया ही तो अब इनके प्रहार को सहना और अपने को छिपाये रखना व्यर्थ है।' शिवाजी की उपर्युक्त वाणी सुन कर स्वयम् ही युद्धनिपुण के मर्मज्ञ उनके सहचर भी उत्साहित हुए "हर हर महादेव" शब्द का उच्चारण कर, प्रत्यक्ष होकर वृक्ष की शाखाओं पर सोये पक्षि-समूह को जगाते हुए चन्द्र की चन्द्रिका के साक्षित्व में घोर युद्ध करने लग गये। यवनों के बाणों तथा शस्त्रों से आहत महाराष्ट्र देश के बहुत से वीर चन्द्रमा की चन्द्रिका की चमक से चमत्कृत पर्वत की अधित्यका को अपने उष्ण रक्त के प्रवाह से स्नान कराते हुए, शिवाजी की विजय-क्रीड़ा के कुङ्कुम से अपने शरीर को लेपते हुए, स्वर्गारोहण के लिए सूर्यमण्डल का भी भेदन करते हुये और

मुखैराहता यवनवीरा अपि च बहुशः प्राचीरमुभयतः पेतुः।

अथ यावन्महाराष्ट्राधीशश्चिन्तयति यत्—"किमेतेनेदृशेन क्रीडनकेनेव युद्धेन? मध्ये मध्ये विहता वीरा उभयतः पतन्ति। अस्माकं चञ्चुप्रवेशश्च दुर्गेऽस्मिन्न भवति। होराद्वयानन्तरं मार्तण्ड-मण्डलमुदेष्यति। ततस्तु कथमपि न पारयिष्यामोऽधिकबलानेतान् विजेतुम्, तत् सपदि केनापि कौशलेन प्राचीरमारुह्य दुर्गस्यान्तः प्रवेष्टव्यम्"—इति—

तावद् दृष्टवान् यदेको नववयस्को महाराष्ट्र-वीरो घोरं युद्धमगणयन्, उपर्य्यधः कतिपयान् शिलाखण्डान् चित्वा भित्तिकार्पित-

नेभ्यः = धनुर्भ्यः, मुक्तैः = निःसृतैः। शिलीमुखैः = बाणैः। प्राचीरमुभयतः, तसिलन्तयोगे द्वितीया, "ततोऽन्यत्रापि दृश्यते" इति।

क्रीडनकेनेव = खेलनेनेव। चञ्चुप्रवेशः = लघुरपि प्रवेशः। होराद्वयानन्तरम् = "घण्टा"—द्वयस्य पश्चात्।

नववयस्कः = नूतनावस्थाकः, तरुणः। चित्वा = सकलय्य। भित्तिका-

शिवाजी को प्रणाम करते हुए से धराशायी हो गये। मराठों के धनुष से मुक्त बाणों के आघात से बहुत से यवन-वीर भी घेरे की दोनों ओर गिर गये।

तत्पश्चात् "इस तरह के क्रीड़ायुद्ध से कोई लाभ नहीं, क्योंकि इसके कारण ही बीच बीच में बहुत से वीर भी मारे जा रहे हैं, फिर भी हम लोगों का प्रवेश भी उस दुर्ग में नहीं हो पा रहा है। दो घण्टे के बाद सूर्योदय भी होने ही वाला है और दिन में तो इन प्रबलतर शत्रुओं पर विजय पाना असम्भव हो जाएगा। अतः शीघ्र ही किसी चातुरी से प्राचीर पर चढ़कर दुर्ग में घुस जाना चाहिये"—इस तरह की चिन्ता में महाराष्ट्रराज लगे ही थे कि तब तक उन्होंने देखा कि एक नववयस्क महाराष्ट्रदेशीय वीर ने घोर युद्ध की गणना (=परवाह) किये बिना ही कुछ पत्थल

भल्लसमाश्रयो लाघवेनोत्प्लुत्य, प्राचीरमारुह्य, "विजयते महाराष्ट्र-राजः"—इत्युच्चैरवदत्।

तं च तथाऽऽरूढमालोक्य यवनाः सदन्तघर्षं सन्दष्टदशनच्छदं निस्त्रिंशान् कोशादाकर्षन्तः शक्तिमुत्तोलयन्तः शरासनानि टङ्कुर्वन्तश्च परितः समापतिताः। तांश्च भूमिष्ठा अपि महाराष्ट्रवीराः शरघातै-रविध्यन्, प्राचीरारूढमात्मसहचरं च समरक्षन्। तदालोक्य गौरव-गरिष्ठोऽपि लाघवेनोत्पत्य, सहचरैरप्यवितर्कितोत्पतनो वीरशिवः स्वयमपि प्राचीरमारुह्य परितः समापतितान्प्रत्यर्थिनः

पितः = कुड्यसंस्थापितः, भल्लः = कुन्तः, समाश्रयः = आधारो यस्य सः।

सदन्तघर्षम् = सदशनघट्टनम्। सन्दष्टदशनच्छदम् = ओष्ठखण्डन-पुरस्सरम्। निस्त्रिंशान् = असीन्। टङ्कुर्वन्तः = टङ्कारशब्दभरितान् कुर्वन्तः। भूमिष्ठाः = भूतले तिष्ठन्तः। अविध्यन् = अताडयन्। आत्मसहचरम् = निजसहगामिनम्। गौरवेण गरिष्ठः = अतिशयगुरुः। लाघवेन = लघुशरीरतया। अवितर्कितोत्पतनः = असम्भावितोर्ध्वगमनः।

के टुकड़ों का उपर्युपरिक्रम से रख कर दीवाल पर आश्रित बरछे के सहारे बड़ी आसानी से उछल कर घेरा पर चढ़ कर "महाराष्ट्रराज की विजय हो"—इस प्रकार की उच्चध्वनि की।

उस नव युवक महाराष्ट्रीय वीर को प्राचीर पर आरूढ देख कर यवन प्रहरी दाँत किचकिचा कर, ओठ मसल कर अपने अपने खड्गकोश से खड्ग निकालते हुए, शक्तियों को सम्भालते हुए तथा धनुष की टङ्कार करते हुए सब तरफ से उस पर टूट पड़े। किन्तु जमीन पर खड़े होने पर भी अन्य महाराष्ट्रीय वीरों ने उन यवन सैनिकों को अपने शराघात से बेध दिया और प्राचीर पर आरूढ अपने साथी को बचा लिया। उस घटना को देख कर गौरव से गरिष्ठ होने पर भी वीर शिवाजी शरीर लाघव के कारण इस प्रकार उछल पड़े कि जिस प्रकार के उनके उछलने की सम्भावना उनके सहचरों के मन में भी न थी, और प्राचीर पर चढ़ कर उन्होंने चारो तरफ

कदर्थीकृत्योभयतः समपातयत् ।

ततः सक्ष्वेडम्—"आरुह्यतामारुह्यताम्"—इत्युक्त्वा धाविता महाराष्ट्राध्यक्षोत्साहिता बहवो महाराष्ट्रवीराः सोत्फालं प्राचीरमारोहन्, हस्तावलम्बेन चान्यान् बहून् क्षणेनोदतूतुलन्। क्षणं तत्र घोरं युद्धमभूत्। तावदकस्माद् दृष्टम्—यत् कश्चन "हर हर महादेव"—इति तारस्वरेणोच्चारयन् खड्गं चालयन् सोत्फालं दुर्गान्तः-पतितोऽस्ति। सोऽयं रघुवीरसिंहः, य सर्वेभ्यः प्रथममेव प्राचीरमारूढः, प्रथममेव च दुर्गान्तः प्रविश्य साहसमप्यकार्षीत्। तेन सहैव वीरराजशिवोऽपि शार्दूल इव जघन्य-वन्य-मण्डले समापप्तत्, तन्निरीक्ष्य शतशो महाराष्ट्रवीरास्तथैव सकूर्दनं दुर्गान्तः

---

कदर्थीकृत्य = विनाश्य। समपातयत् = समपोथयत्।

सक्ष्वेडम् = सगर्जनम्। महाराष्ट्राध्यक्षेण = शिववीरेण, उत्साहिताः=वर्धितसाहसाः। सोत्फालम् = सकूर्दनम्। हस्तावलम्बेन=कराश्रयेण। उदतूतुलन्=उन्नीतवन्तः। शार्दूलः=सिंहः,व्याघ्रो वा। जघन्यानाम्= क्षुद्राणाम्, वन्यानाम् = आरण्यकानां शृगालादीनाम्, मण्डले = समूहे।

---

से टूट पड़ने वाले शत्रुओं को मार कर प्राचीर के दोनों किनारे गिरा दिया।

तत्पश्चात्—चढ़िये चढ़िये—यह गर्जन पूर्वक कह कर आगे दौड़ने वाले बहुत से महाराष्ट्रीय वीर महाराष्ट्रराज द्वारा उत्साहित हो कर उछल कर प्राचीर पर चढ़ गये और अपने हाथों के सहारे नीचे खड़े बहुत से अपने सहचर वीरों को भी ऊपर तौल लिया। थोड़ी देर तक घमासान लड़ाई हुई। तदनन्तर एकाएक उन सबों ने देखा कि उच्च स्वर से "हर हर महादेव!" की ध्वनि करता हुआ एक वीर अपना खड्ग चमकाते हुए दुर्ग के अन्दर कूद पड़ा। सबसे पहले ही प्राचीर पर चढ़ने वाला और दुर्ग में प्रवेश करने का भी सर्वप्रथम साहस करने वाला वह वीर था रघुवीर सिंह। रघुवीर सिंह के साथ ही महान् वीर शिवाजी भी क्षुद्र जङ्गली जीव-जन्तुओं की मण्डली में सिंह के समान उस दुर्ग में कूद पड़े। उन्हें देख कर उनके पीछे सैकड़ों

प्रविष्टाः, तत्र च मुहूर्त्तं तुमुलं युद्धमभूत्।

दण्डद्वयेनैव शतशो यवना हताः, अपरे च जीवन्त एव निगृहीताः, शान्तमिव च युद्धम्। ततो महाराष्ट्र-वीराः स्थूल-दीपान् सञ्ज्वाल्य दुर्ग-मध्यस्थ-प्रासादाभिमुखं चलिताः, दृष्टवन्तश्च यत् दुर्गाध्यक्षो गृहान्तः प्रविष्टः, द्वारञ्च लौह-शृङ्खल-कीलैर्दृढतरैः कपाटैरमुद्रयदिति। निरीक्ष्यैतत् क्षणं विचार्य महाराष्ट्रराजः सगर्जनमुवाच—"दुर्गाध्यक्ष! स्वामिभक्तिं दर्शितवानसि, यथाशक्ति दुर्गं रक्षितवानसि, व्यर्थोऽधुना लज्जया गृहप्रवेशः, तत् स्वयं

समापप्तत् = निपतितवान्। सक्रन्दनम् = सोत्कालम्। तुमुलम् = भयानकम्।

दण्डद्वयेन = घटिकाद्वयेन। निगृहीताः = वशीकृताः। स्थूलदीपान् = "मशाल" इति ख्यातान्। दुर्गमध्यस्थस्य = दुर्गान्तरालविद्यमानस्य, प्रासादस्य = हर्म्यस्य अभिमुखम् = सम्मुखम्। लौहशृङ्खलकीलैः = आयसनिगडकण्टकैः। दृढतरैः = कठोरतरैः। कपाटैः=अररैः। अमुद्रयत् =

महाराष्ट्रीय वीर उसी प्रकार कूद कर दुर्ग के भीतर घुस गए और वहाँ कुछ समय के लिए घनघोर युद्ध हुआ।

दो घण्टे में ही सैकड़ों यवन सैनिक मार दिए गए, बहुत से तो जीते ही पकड़ लिए गए और युद्ध भी समाप्त प्राय हो गया। तदनन्तर महाराष्ट्रीय वीर मशाल बार कर दुर्ग के मध्य में प्रतिष्ठित प्रासाद की ओर बढ़े और आगे बढ़ने पर उन सब ने देखा कि दुर्गाध्यक्ष घर में प्रविष्ट हो कर लौह-निर्मित सिकड़ी तथा अगड़ी से सम्पन्न होने के कारण अत्यन्त सुदृढ़ किवाड़ी से दरवाजे को भीतर से बन्द कर दिया। उस घटना को देख कर थोड़ी देर विचार विमर्श करने के बाद महाराष्ट्रराज ने गरजते हुए कहा—दुर्गाध्यक्ष! तुम अपनी स्वामि भक्ति का प्रदर्शन कर चुके हो एवम् अपनी शक्ति के अनुसार दुर्ग को भी बचाने का प्रयास तुमने किया ही। सम्प्रति लज्जावश घर घुसना निरर्थक है। अतः यदि तुम स्वयम् बाहर निकल आते

बहिर्निर्गच्छसि चेद् जीवन्तं त्यक्ष्यामः, इतरथा तु प्रासादेन सह त्वां क्षणेन धक्ष्यामः"—इति।

दुर्गाध्यक्षो रहोमत्तखानस्तु क्रियासमभिहारेण शृण्वन्नपि न बहिर्निरगात्। अथ महाराष्ट्रराजस्याऽऽज्ञामवाप्य, तदीया इन्धनैरावृत्य प्रासादममुं ज्वलयितुमारेभिरे। ततः समन्ततो विहायसं लिहन्तीषु देदीप्यमानासु शिखासु, 'अवीरयोग्यं मृत्युं प्राप्तोऽहम्' इत्याशङ्क्य खड्गहस्तो गवाक्षिकात उत्प्लुत्य, भूमौ पतितो रहोमत्तखान उवाच—

किमिति ममैकस्य प्राणार्थं महामूल्यं महार्घ-वस्तुजात-पूरितं

---

प्यथात्। सगर्जनम् = सक्ष्वेडम्। धक्ष्यामः = ज्वालयिष्यामः।

रहोमत्तखानः = "रहमत खाँ" इति लोके प्रसिद्धः। निरगात् = निष्क्रान्तः। इन्धनैः = काष्ठैः, आवृत्य = आच्छाद्य। ज्वलयितुम् = दग्धुम्। आरेभिरे = आरब्धवन्तः। विहायसम् = गगनम्। लिहन्तीषु = स्पृशन्तीषु। देदीप्यमानासु = अतितरां ज्वलन्तीषु। अवीरयोग्यम् = कातरानुरूपम्। गवाक्षिकातः = वातायनिकातः। उत्प्लुत्य = सद्कूर्द्य।

---

हो तब तो हम लोग तुम्हें जीते ही छोड़ देंगे, अन्यथा प्रासाद के साथ-साथ तुम्हें भी जला कर भस्मसात् कर देंगे।

किन्तु बारम्बार शिवाजी के वचन को सुनकर भी दुर्गाध्यक्ष रहमत खाँ बाहर नहीं निकला। उसके बाद महाराष्ट्रराज की आज्ञा पाकर उनके सहचर वीर उस प्रासाद की सभी दिशाओं में लकड़ी इकट्ठे कर उसे (प्रासाद को) जलाने लग गए। तत्पश्चात् सब तरफ से अग्नि की देदीप्यमान ज्वाला जब आकाश को चूमने लग गई तब 'मुझे तो कायर की तरह मरना पड़ रहा है' इस आशङ्का से रहमत खाँ हाथ में खड्ग लिए खिड़की के माध्यम से बाहर उछल कर जमीन पर गिर गया और कह उठा—

केवल मेरे प्राण के सहार के लिए, तुम लोग बहुमूल्य पदार्थों से परि-

महाप्रासादं दहथ ? एषोऽस्मि । यथेच्छं प्रहरत । स्वाम्यर्थेऽहं प्राणानुत्सृजामि—

इत्याकर्ण्य परितः परिपतितेषु महाराष्ट्रवीरेषु, महाराष्ट्रपतिरवादीत्—

"वीरोऽसौ, वीरोऽसौ, न हन्तव्यः, न हन्तव्यः । किन्तु जीवन्नेव ग्रहीतव्यः"—इति ।

ततः एकाकिन्यपि सुसज्ज-निस्त्रिंशानां महाराष्ट्र-वीराणां मण्डले, सखड्गचालनं दक्षान् वामांश्च मार्गांश्चरति तस्मिन् यवनवीरे, अकस्माद् विद्युच्चमत्कार इव सोत्फालमापत्य रघुवीरः सत्सरुं तस्य मुष्टिं जग्राह । यावच्चैषको यवन आच्छेत्तुं स्वहस्तम्, तावद्

दहथ = ज्वालयथ । यथेच्छम् = यथाभिलाषम् । प्रहरत = मारयत । उत्सृजामि=त्यजामि । "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट् ।

एकाकिनि=असहाये । सुसज्जनिस्त्रिंशानाम्=सन्नद्धासीनाम् । सखड्गचालनम्=सचन्द्रहासस्पन्दनं । 'विद्युच्चलाचञ्चला अपि' इत्यमरः । विद्युच्चमत्कार इव = चञ्चलाचमत्कृतिरिव । सत्सरुम् = सखड्गमुष्टिम् । एष एव, एषकः । "अव्ययसर्वनाम्नामकच्प्राक् टेः" । आच्छेत्तुम्=आकर्ष्टुम् । यवने-

र्ग इस महान् प्रासाद को क्यों जला रहे हो ? ये लो मैं आ गया । अपनी इच्छा के अनुसार तुम लोग मुझे मार डालो । मैं अपने स्वामी के लिए अपने प्राण छोड़ रहा हूं ।

रहमत खाँ की बात सुन कर जब महाराष्ट्र के वीर सब तरफ से उस पर टूट पड़े तब महाराष्ट्रराज ने कहा—

"यह एक वीर है, वीर है, इसे मारो नहीं, मारो नहीं, किन्तु जीते ही इसे पकड़ लेना है ।"

तत्पश्चात् सुसज्जित खड्गों वाले महाराष्ट्रीय वीरों की मण्डली में अकेला होकर भी तलवार चमका कर दायीं बायीं ओर परिभ्रमण करने वाले उस यवन वीर के खड्गयुक्त मूंठ को रघुवीर सिंह ने बिजली की चमक की तरह कूद कर पकड़ लिया । उस पर रहमत खाँ अपने हाथ को खींच लेना

वीरा दृढं गृहीत्वा, तस्कराचन्द्रहासमाच्छिद्य, उष्णीषिकापटेन बाह्वोः स्कन्धे च समबध्नन्। महाराजाऽऽज्ञया च अनेकशत-निगृहीत-जनाधिष्ठिते कोण-गृहे तमपि निक्षिप्य, कवाटे समसुमुद्रन्।

ततः प्रासाद-दाहं शमयित्वा, कथं कथमप्यन्तः प्रविश्य, अट्टालिकामारुह्य, महाराष्ट्रराजो दृष्टवान्—यत् पूर्वतः सञ्जात एवारुणोदयः। तत्प्रभया किञ्चित् किञ्चिद् भासमाने भूभागे सुदूरमवलोकितवान्—यत् परिपन्थि पदातिनां षट् सप्त वा शतानि स्वाभिमुखमेव धावमानानि समायान्तीति। अतर्कयच्च यदवश्यमेते गौरसिंह-सेना-कोलाहलाऽऽकृष्टाः सुदूर पूर्वतो गता

उद्युङ्क्ते। उष्णीषिकापटेन = शिरोवेष्टनवाससा। अनेकशतनिगृहीत-जनाधिष्ठिते = अत्यधिककारकीकृतमानवविराजिते। निक्षिप्य = बला-त्प्रवेश्य। कवाटे = "कवाटमररं तुल्ये" इत्यमरः। समसुमुद्रन् = अप्यधुः।

अरुणोदयः = भास्करोद्भूतिपूर्वकालिकलौहित्याविर्भावः। भासमाने = द्योतमाने। परिपन्थिपदातिनाम् = शत्रुपदगानाम्। धावमानानि =

चाहता ही था कि अन्य महाराष्ट्रीय वीरों ने उसे कस कर पकड़ लिया और उसके हाथ से खड्ग छीन कर पगड़ी से उसके हाथ तथा कन्धे को बान्ध पुनः महाराज की आज्ञा से सैकड़ों कैदियों से भरे कोण-गृह में रहमत खाँ को भी ढकेल कर उन वीरों ने किवाड़ियाँ बन्द कर दीं।

उसके बाद प्रासाद की आग बुझा कर, जिस किसी प्रकार प्रासाद के भीतर घुस कर, अट्टालिका पर चढ़ कर महाराष्ट्रराज ने देखा कि पूर्व दिशा में अरुणोदय हो चुका था। अरुण की लालिमा से अल्प-प्रकाशित भूभाग में बहुत दूर में उन्होंने देखा कि शत्रुदल के करीब-करीब छः सात सौ सैनिक उनकी ओर ही दौड़े आ रहे थे। उन शत्रु सैनिकों को सम्मुख आते देख कर महाराष्ट्रराज ने सोचा कि गौरसिंह के सैनिकों के कोलाहल से आकृष्ट होकर ही ये सैनिक सुदूर-पूर्व चले गये थे। किन्तु वहीं से यहाँ

आसन्। तत एव च प्रासाद-दाह-ज्वाला-माला अवलोक्यैते निवृत्ता कोप-कषायिता समायान्ति, तत् सपद्येवैतैः सह युद्धस्य कश्चन सकौशल प्रबन्धो विधेय, अन्यथा तु निःशेषमेवैतेऽस्मान् समुच्छेत्स्यन्ति।

अथ महाराष्ट्रराज क्षणं स्वमित्रैः सह सम्मन्त्र्य, दुर्ग-युद्धार्थमेवावातिष्ठत। क्षणं विमृश्य च, स्वप्रधानवीरानाहूय पुनरवाच-

मित्राणि! यद्यप्यायस्तमस्मन्मण्डलम्, मन्त्रणा बहवः पत्तयः, साम्मुख्यं द्विगुणैः परिपन्थिभिः तथाऽपि समाशमागच्छन्तीं शत्रु सेनामालोक्यतोऽपि तूष्णीं स्थातुं नोत्सहते मे चेतः। सदैव

---

स्वरया चलन्ति। गौरसिंहस्य सेनायाः कोलाहलेन = कलकलेन, आकृष्टाः = आहूता.। प्रासाददाहेन = हर्म्यज्वलनेन, ज्वालामाला। कोपकषायिता = क्रोधकलुषिता। सकौशलम्=सनैपुण्यम्। निःशेषम् = साकल्येन। समुच्छेत्स्यन्ति = समुन्मूलयिष्यन्ति।

समन्त्र्य = विचार्य।

आयस्तम् = श्रान्तम्। अस्मन्मण्डलम् = अस्मत्सैन्यम्। मन्त्रणा = आघाता। साम्मुख्यम् = आभिमुख्यम्। "सामना" इति हिन्दी।

---

प्रासाद में लगी अग्नि की ज्वालाओं को देख कर वे लौट गये हैं और कोपारुण नेत्र होकर इधर ही आ रहे हैं। अतः शीघ्र ही इनके साथ युद्ध करने का कोई चतुरतापूर्ण उपाय रचना चाहिये, नहीं तो ये हम लोगों को सर्वथा विनष्ट कर डालेंगे।

तत्पश्चात् क्षण भर महाराष्ट्रराज अपने मित्रों के साथ मन्त्रणा कर दुर्ग में ही युद्ध करने को तैयार हो गए। थोड़ी देर विचार करने के बाद अपने प्रधान वीरों को बुलाकर शिवाजी ने उनसे पुनः कहा—

मित्रों! यद्यपि हमारी सैनिक मण्डली थक चुकी है, बहुत से पैदल सैनिक घायल हो चुके हैं और सामना भी शत्रु की दूनी सेना से करना है तथापि समीप आती हुई शत्रु-सेना को देख कर मेरा मन शान्त रह जाने के

प्रसह्याऽऽक्रम्य युद्धवानस्मीति गृहे आत्मानमाच्छाद्य वर्तितुं नोररीकरोत्युरः। अप्यस्ति कश्चिद्वीरः यः शतद्वयं भटान्सह नीत्वा, अग्रत एव गत्वा शस्त्रक्रीडया वराकैरेतैः सपत्नैः क्रीडेत्? विश्वसिमि, एतेषां पृष्ठलग्न एव गौरसिंहोऽपि ससेन आयातीति, यावदिताऽस्मत्सेना होरार्द्धमिव समर-दुरोदरेण यापयिष्यति-तावद् गौरोऽपि तत आगत्य कृपाण-धाराभिरेतान् स्नपयिष्यति-इति कथ्यताम्, कः समुत्सहते द्वे शते वीराणां सह नीत्वाऽग्रत एव सपत्नान् शक्ति-पातैः सत्कर्तुम् ?—इति।

---

सकाशम् = समीपम् । प्रसह्य = बलात् । गृहे = दुर्गे । वर्तितुम् = स्थातुम् । नोररीकरोति = न स्वीकरोति । उरः = हृदयम् । वराकैः = क्षुद्रैः । सपत्नैः = शत्रुभिः । पृष्ठलग्नः = पश्चात्पदः । होरार्द्धम् = घण्टार्द्धम् । समर एव दुरोदरम् = द्यूतम्, तेन । कृपाणधाराभिः = चन्द्रहासप्रवाहैः । स्नपयिष्यति = स्नानं कारयिष्यति । मारयिष्यतीति यावत् । शक्तीनां पातैः = मारणैः । सत्कर्तुम् = आदर्तुम् । हन्तुमिति यावत् ।

---

लिये उद्यत नहीं हो पाता। यतः सर्वदा बलपूर्वक आक्रमण कर मैंने युद्ध किया है अतः आज अपने को घर में छिपा कर बैठ जाने के लिये मेरा हृदय स्वीकार नहीं कर रहा है। क्या हम लोगों में कोई ऐसा वीर है जो अभी दो सौ सैनिकों को साथ लेकर आगे जाकर इन क्षुद्र शत्रुओं के साथ शस्त्रक्रीड़ा कर सके ?

मुझे तो ऐसा विश्वास है कि इन सब के पीछे ही अपनी सेना के साथ गौर सिंह भी आता ही होगा, अतः जब तक हमारी सेना युद्धात्मक द्यूत क्रीड़ा में आधा घण्टा बिताएगी तब तक गौर सिंह भी पीछे से आ कर ससैनिक अपने कृपाणों के प्रवाह से इन दुष्टों को स्नान करा देगा। अब कहिए—दो सौ वीरों को साथ लेकर दूर में ही शत्रु सैनिकों का शक्ति प्रहार से सत्कार करने के लिए कौन सा वीर उत्साहित है।

तदाकर्ण्य "सज्जा वयं शिरसा वोढुमादेशम्"—इति सर्वे प्रोचुः। तत परितो विलोकयन् महाराष्ट्रराजो रघुवीरसिंहमपि बद्धाञ्जलि सम्मुखस्थमालोक्य व्याजहार—'रघुवीर! अद्य त्वमेव युद्धमारब्धवानसि, त्वमेव च मध्येऽपि पराक्रमं दर्शितवानसि, त्वमेव चाधुना युद्धं समापय, पूर्ण-पारितोषिक-भाक् च भव"।

तदवधार्य प्रणम्य 'ओम्' इत्युक्त्वा रघुवीरः शतद्वयं साहसिकान् पत्तीन् सह नीत्वा समापत्य उच्छलितकोपैर्यवनवीरैः सह युद्धमन्वतिष्ठत्। सत्स्वपेक्षया त्रिगुणितेष्वपि, विस्मितमानेषु च तेषु ससिंहनादं प्रासासि-रिष्टि-तोमर-क्षेप-तत्परेषु, अकस्मात् पृष्ठतो 'हर हर महादेव'"—इति व्याहरन्ती गौरसिंह-सेनाऽपि

सज्जाः = सन्नद्धाः। पूर्णस्य = समग्रस्य, पारितोषिकस्य = इष्टे कार्ये प्रसन्नतया दायमानस्य 'इनाम' इति ख्यातस्य, भाक् = ग्रहीता। —च पत्तीन् = पदातिसैनिकान्। उच्छलितकोपैः = विवृद्धकोपैः। प्रासासिरिष्टितोमराणां क्षेपे = पातने, तत्परेषु = निरतेषु। व्याहरन्ती =

महाराष्ट्रराज की वाणी सुन कर सब कह उठे—हम लोग श्रीमान् के आदेश को शिरोवहन के लिए तैयार हैं। उसके बाद चारों तरफ देखते हुए महाराष्ट्रराज ने अपने सम्मुख हाथ जोड़ कर खड़े रघुवीर सिंह को देख कर कहा—रघुवीर! आज तुमने ही युद्ध का प्रारम्भ किया है, मध्य में भी तुमने ही अपनी वीरता दिखलाई है, और अब तुम्हीं युद्ध का अन्त भी करो और पूर्ण पारितोषिक का अधिकारी बनो।

शिवा जी की बात सुन कर उन्हें प्रणाम करके "जी हाँ, आज्ञा शिरोधार्य है" ऐसा कह कर रघुवीर सिंह ने दो सौ साहसिक सैनिकों को अपने साथ लेकर आगे बढ़ कर अत्यन्त क्रुद्ध यवन सैनिकों के साथ युद्ध छेड़ दिया। शत्रुदल (रघुवीर सिंह प्रभृति) से त्रिगुण होने पर भी उनकी युद्ध निपुणता से विस्मितप्राय हो कर यवन-सैनिक सिंह की तरह गर्जन करते हुए रघुवीर सिंह के सैनिकों पर फरसा, तलवार, रोङ्ग तथा तोमर

समापप्तत्। ततः क्षणेनैव बहुषु विनष्टेषु परेषु निगृहीतेषु च शत्रु-वर्गेषु, जयध्वनि प्रस्थापयन्तः सर्वेऽपि समागत्य महाराष्ट्रराजं प्रणम्य विजयदुर्ग-विजय-वैजयन्तीरुड्डाय्य भेरीराहत्य जय-नादैर्गगनं व्यलोडयन्।

तावत् अरुण-पीत-प्रकाशेन दरादृश्यमानासु सकल-भित्तिकासु, वनस्थलीषु, उपत्यकासु, अधित्यकासु, अट्टालिकासु च, महाराष्ट्र-राजः ससाधुवादमखिलान् सम्मान्य, नित्य-क्रियाभिरात्मानं सुख-यितुं विससर्ज, उक्तवांश्च गौरसिंह यत्—

---

कथयन्तो। प्रस्थापयन्तः = प्रस्टयन्तः। उड्डाय्य = उत्ताल्य, "उड़ाकर" इति हिन्दी। व्यलोडयन् = ममन्थुः। जयध्वनिभिरपूरयन्निति यावत्।

अरुणस्य = भुवनभास्करस्य, पीतेन प्रकाशेन। दरादृश्यमानासु = अवलुलोक्यमानासु।

---

से प्रहार करने में लगे ही थे कि पीछे से 'हर हर महादेव।' इस शब्द का उच्चारण करती हुई गौरसिंह की सेना भी उन पर (यवनों पर) टूट पड़ी। तदनन्तर क्षण भर में ही बहुत से शत्रुओं के मार दिए जाने और अवशिष्ट के कैद कर लिए जाने पर जयध्वनि करते हुए सभी महाराष्ट्रीय वीर महाराष्ट्रराज के पास आ गए और उन्हें प्रणाम कर विजयदुर्ग की विजय पताका फहरा कर डंका पीट कर जयध्वनि से आकाश को उन वीरों ने आन्दोलित कर दिया।

उस समय तक अरुण के पीत प्रकाश से दीवारों, वनस्थलियों, उपत्य-काओं, अधित्यकाओं और अट्टालिकाओं के पूर्णतः दृष्टिगोचर हो जाने पर महाराष्ट्रराज ने धन्यवाद प्रदान पूर्वक अपने सभी वीरों को सम्मानित कर सबों को अपनी अपनी नित्य क्रिया के सम्पादन द्वारा अपने अपने को प्रसन्न करने की आज्ञा दे दी और गौरसिंह से कहा—

'त्वय गत्वा महाराजमम्बरेश्वरं रुद्रमण्डल-विजय-वृत्तान्तम् अवगमय, ब्रूहि च यदपराह्णेऽद्य रुद्रमण्डल-प्रासादे, साधुवाद-पारितोषिकादि-वितरणे प्रदर्शित-युद्ध-कौशलान् भटानधिकमुत्साहयितुं सभा भविता, तत्रोपस्थाय महाराजेन द्विगुणं सनाथनीया समितिः'—इति।

तस्मिंस्तथा प्रस्थिते दुर्गप्राचार-द्वारादिस्थानेषु यथोचितं विश्वस्त-चिरन्तन-स्वामिभक्त-भटानायोज्य, सभा-स्थानं परिष्कर्तुं कांश्चिदादिश्य स्वमनसि स्वास्थ्यमाससाद।

अथ तथाऽनुष्ठितवत्स्वखिलेषु विहित-भोजनादि-क्रिये परत

---

अवगमय = बोधय। ब्रूहि = कथय। अपराह्णे = अह्नो द्वितीये भागे। द्वादशवादनादूर्ध्वमिति यावत्। उत्साहयितुम् = ससाहसयितुम्। उपस्थाय = समागत्य। सनाथनीया = कृतार्थनीया। समितिः = सभा।

विश्वस्तान् = जातविश्वासान्, चिरन्तनस्वामिभक्तान् = प्राचीनान् चिरतिमनस्कान्। आयोज्य = संलग्य। परिष्कर्तुम् = स्वच्छयितुम्। स्वास्थ्यम् = कृतकृत्यताऽऽनन्दम्। आससाद = प्राप।

अनुष्ठितवत्सु = कृतवत्सु। निद्रामुद्रया = स्वापमुद्रया। विद्राविते

---

तुम स्वयम् वहाँ जाकर अम्बरदेशाधिपति महाराज जयसिंह को रुद्रमण्डल पर विजय प्राप्त करने की खबर दो और उनसे निवेदन करना कि युद्ध में कौशल दिखलाने वाले महाराष्ट्रीय वीरों को साधुवाद तथा पारितोषिक आदि देकर अत्यधिक उत्साहित करने के लिए रुद्रमण्डल के प्रासाद में ही आज दुपहर के समय एक सभा होने वाली है, उस अवसर पर वे वहाँ आकर इस सभा को द्विगुण कृतार्थ करें।

महाराष्ट्रराज की आज्ञा से गौरसिंह के वहाँ से प्रस्थान कर देने के बाद दुर्गप्राचार तथा प्रवेशद्वार आदि स्थानों पर विश्वासपात्र, चिरपरिचित तथा स्वामिभक्त वीरों को नियुक्त कर एवम् सभाभवन की सफाई के लिए कुछ अनुचरों को आदेश देकर महाराष्ट्रराज ने निश्चिन्तता की साँस ली।

तदनन्तर महाराष्ट्रराज के आदेश के अनुसार सभी आदिष्ट अनुचरों

किञ्चिन्निद्रा-मुद्रयेव विद्रावित-मान्थर्ये जयपुराधीश्वरे, पश्चिमा-याममवनमति मार्तण्ड-मण्डले, चण्ड-मरीचिप्रचयेषत्प्रतप्त-वाताऽऽघात-प्रताप-शुष्यत्फलपत्र-शाखाप्रशाखेषु वृक्ष-क्षुप-व्रतती-व्रजेषु, होराद्वयात् परत एव सम्पत्स्यमाने सायङ्काले; रुद्रमण्डलस्थ-महाप्रासाद-सम्मुखे प्रविततभूभागे सुवर्ण-सूत्र-प्रचय-रचित-लता-कुसुम-चित्र-विचित्रितस्य, विविध-वर्ण-वर्णनीय-स्तम्भ-शतोच्छ्रितस्य, पुष्कल-दाम-शताकृष्ट-बद्धस्य, कौशेयोल्लोचस्या-

मान्थर्ये = दूरीकृतालस्ये। अवनमति=नम्रीभवति। चण्डमरीचीनाम्= भास्करदीधितीनाम्, प्रचयेन=समूहेन, ईषत्प्रतप्तस्य=उष्णप्रायस्य, वातस्य = वायोः, आघातप्रतापेन = ताडनतेजसा, शुष्यन्तः = शोषमुपगच्छन्तः, फलपत्रशाखाप्रशाखा येषां तेषु। वृक्षाः = अनोकहाः, क्षुपाः = ह्रस्वशाखाः, व्रतत्यः=लताः, एतासां व्रजेषु = समूहेषु। सम्पत्स्यमाने = भाविनि। प्रवितते = अतिविस्तीर्णे, भूभागे = भूप्रदेशे। सुवर्णसूत्र-प्रचयेन = हैरण्यतन्तुसमूहेन, रचितैः = निर्मितैः, लतानां कुसुमानाञ्च, चित्रैः = आलेख्यैः, विचित्रितस्य=विभूषितस्य। विविधैः = अनेकप्रकारैः, वर्णैः=रङ्गैः, वर्णनीयानि = रञ्जनीयानि, यानि स्तम्भशतानि = अनेकान्याधारभूतानि, तैः, उच्छ्रितस्य = उन्नतस्य। पुष्कलानाम् = पुष्टानाम्, दाम्नाम् = रज्जूनाम्, शतैः, आकृष्टस्य बद्धस्य च। कौशेयो-

द्वारा अपने अपने कृत्य के सम्पादित हो जाने पर, भोजनादि क्रिया सम्पन्न करने के बाद कुछ निद्रा के बहाने जयपुराधीश्वर द्वारा आगमन श्रान्तिजन्य अपने आलस्य को दूर कर दिए जाने पर, सूर्यमण्डल के पश्चिम दिशा की ओर अवनत हो जाने पर प्रचण्ड सूर्यकिरण के सम्पर्क के कारण अल्प-सन्तप्त वायु के आघात के प्रभाव से पेड़, पौधे और लताओं के शाखा-प्रशाखा-फल-पत्र के सूख जाने पर (मुरझा जाने पर) आगामी सन्ध्या समय से दो घण्टे पूर्व रुद्रमण्डल के महान् प्रासाद के सामने विशाल प्राङ्गण में सुवर्ण सूत्रों के समूह से निर्मित लताओं, फूलों तथा अनेकानेक चित्रों से विभूषित, रङ्ग-विरङ्गे खम्भों पर उत्तोलित, सैकड़ों मजबूत रस्सियों से आकृष्ट

धस्तात् आस्तीर्णेषु कौशेयाऽऽस्तरणेषु महासभा समतिष्ठत ।

तत्र हि कनकसूत्र-गुम्फित-प्रान्तासनाच्छादितायामेकस्यां वितस्त्युच्छ्राय-तूलिकायां महोपबर्ह-लग्न-पृष्ठो जयपुराधीश्वर उपविष्टः, तत्रैव च वामतो महाराष्ट्र-राष्ट्र-त्रिविष्टपेष्टोऽपि समवर्तिष्ट। परितो यथाधिकार क्रमतो द्वयोरपि गञ्जोः कृपा-पात्राण्युपविष्टानि । वितानं परितश्च बद्धपङ्क्तयो योद्धार सुसज्जाः समतिष्ठन्त । प्रभाकर-प्रभा-प्रचय-प्रपात प्रहतानाम्, दरदरिनद्ध-

---

उल्लोचस्य = पट्टपुञ्जीयवितानस्य । आस्तीर्णेषु = विस्तीर्णेषु । कौशेयास्तरणेषु = पट्टसूत्रनिर्मितासनेषु । महासभा = विशाला समितिः ।

कनकसूत्रै = हैरण्यतन्तुभिः, गुम्फितः = ग्रथितः, प्रान्तो यस्य तादृशेन, आसनेन = प्रावरणविशेषेण, आच्छादितायाम् = गोपितायाम् । वितस्त्युच्छ्रायायाम् = अर्धहस्तोन्नतायाम्, तूलिकायाम् = तूलतल्पाम् । महोपबर्हे = महोपधाने, लग्न पृष्ठ यस्य सः । महाराष्ट्रराष्ट्रमेव त्रिविष्टपम् = स्वर्गः, तस्य इष्टः = अभिमतः । समवर्तिष्ट = समस्थित । कृपापात्राणि = दयाभाजनानि । वितानं परित. = उल्लोचस्य चतुर्दिक्षु । "अभितः परितः" इत्यादिना द्वितीया । प्रभाकर-प्रभाप्रचयस्य = भास्करभासमूहस्य, प्रपातैः = प्रपतनै, प्रहतानाम् = ताडिता-

---

रेशमी शामियाने के नीचे बिछे रेशम के गद्दों पर वह विशाल सभा समायोजित हुई।

उस सभा में सुवर्णतारों से जड़ी किनारी वाली चादर से आच्छादित एक बित्ता ऊँचे गद्दे पर एक विशाल तकिये पर उठग कर जयपुर महाराज बैठ गये। उनकी बाँयी ओर महाराष्ट्रराष्ट्ररूपी स्वर्ग के इष्टदेव शिवाजी भी बैठ गये। उनके चतुर्दिक् उन दोनों के कृपापात्र अन्यान्य व्यक्ति भी अपने-अपने अधिकार के अनुसार बैठ गये। शामियाने की सब दिशाओं में सुसज्जित वीरों की मण्डली पङ्क्तिबद्ध होकर खड़ी थी। सूर्यकिरण के सम्पर्क से चमकने वाले उन वीरों के सोने तथा चाँदी के बने कमरबन्दों, कन्धों

महारजत-रजतादि-पट्टिकानाम्, स्कन्धोन्नमित-शक्ति-भल्लानाम्, कटि-विलम्बित-कृपाण-सौवर्ण-त्सरूणाम्, वेष्टित-गण्ड-युगल-चिबुकानाम्, राजत-लेप-लिप्त-लौह शृङ्खलोष्णीषिका-बन्धनानां च चाकचक्यम् अवलोचकलोचनमतीतडन। कलित-महाध्वजा परितः प्रसर्पिणो वीराश्च, सभेरीनादं श्रीशिवराजस्य महाराज-जयसिंहस्य च जयमजूघुषन्।

ततो महाराष्ट्रराजः सक्षेपेण रुद्रमण्डल विजय-वृत्तान्तमश्रावयत् जयसिंहम्। स च ससाधुवादमखिलानुत्साहयाम्बभूव। ततो महाराष्ट्रराजो गौरसिंह-श्यामसिंह-कूर्मसिंह-माल्यश्रीकादीन् प्रत्ये-

---

नाम्। भाषितानामिति यावत्। तत्कटिषु = वाराणां मध्यभागेषु, महारजतस्य = सुवर्णस्य, रजतस्य = दुर्वर्णस्य, आदिना रीत्यादेश्च, पट्टिकानाम्। स्कन्धेषु, उन्नमितानाम् = उन्नमय्य स्थापितानाम्, शक्तीनां भल्लानाञ्च। कटिविलम्बितानाम्, कृपाणानाम्, सौवर्णानां त्सरूणाञ्च। राजतलेपेन लिप्तानाम् लौहशृङ्खलाभिर्नानाम् उष्णीषिकाबन्धनानाम्। चाकचक्यम् = चमत्कृति। अवलोचकलोचनम् = द्रष्टृनयनम्। अतीतडत् = अजीघतत्, अभिभूत चकारेत्यर्थः। कलितमहाध्वजा = धारितविनयवैजयन्तीकाः। प्रसर्पिण = गच्छन्तः। अजूघुषन् = घोषितवन्तः।

---

पर रखे हुए शक्तियों तथा रीछों, कमर में लटकते कृपाणों तथा उनकी सुवर्ण की मूठों, वेष्टित कपोल युगल तथा दाढ़ी, रूपहली लौह शृखला की चमक दर्शकों की आँखों को चकाचौंध करती थी। विशाल ध्वजाओं को हाथों में लेकर चारों तरफ घूमने वाले वीर डङ्का बजाकर शिवाजी तथा महाराज जयसिंह की विजयध्वनि कर रहे थे।

बाद म महाराष्ट्रराज ने जयसिंह का रुद्रमण्डल पर विजय प्राप्त करने की घटना को सक्षिप्त रूप में सुनाया और महाराज जयसिंह ने भी साधुवाद देते हुए सबों को प्रोत्साहित किया। तत्पश्चात् शिवाजी ने गौरसिंह, श्यामसिंह, कूर्मसिंह तथा माल्यश्रीक आदि प्रत्येक वीरों का अङ्गुल्या निर्देश करते

कमङ्कुल्या निर्दिश्योक्तवान्—एत एव प्राधान्येन विहितसाहाय्या मम—इति। जयसिंहश्च तान् प्रशशंस, स्वहस्तेन चैकैकमसिधेनुकादानेन पर्यतोषयत।

अथ रघुवीरं निर्दिश्य शिवराजः कथितवान्—"महाराज! एष एव वीरबालो रुद्र-मण्डल-जयस्य प्रधान-कारणम्। अयमेव प्रथमं युद्धमारब्धवान्, अयमेव शर-प्रपातमगणयित्वा प्रथमं प्राचीरमारूढ, अयमेव रिपु-निकर-व्याप्ते दुर्गे प्रथमं सोत्फालमन्तः प्रविष्टः, अयमेव दुर्गाध्यक्षं निगृहीतवान्, अयमेव च परस्तात् समापतन्तीं यवनसेनां त्रिगुणामस्यल्पीयस्या सेनया पराजैष्ट"।

तदाकर्ण्य सर्वे प्रासीदन् ऋते दन्दह्यमानहृदयात् क्रूरसिंहात्।

अङ्कुल्या = करशालया। प्राधान्येन = वैशिष्ट्येन। एकैकम् = प्रत्येकम्। असिधेनुकायाः = छुरिकायाः, दानेन = समर्पणेन।

शराणाम् = इषूणाम्, प्रपातम् = सम्पतनम्। रिपुनिकरव्याप्ते = शत्रुसमूहाबृते। अस्यल्पीयस्या = अतितरां न्यूनया। पराजैष्ट = परास्तवान्।

प्रासीदन् = प्रसन्ना अभूवन्। समतुषत् = सन्तोषितवान्। प्राञ्च-

हुए कहा—ये ही वीर हैं जिन्होंने मुख्य रूप में मेरी सहायता की है। उस पर जयसिंह ने उन सबकी प्रशंसा की और अपने हाथ से प्रत्येक को पारितोषिक के रूप में एक-एक तलवार समर्पित किया।

तदनन्तर रघुवीरसिंह की ओर निर्देश कर शिवाजी ने कहा—महाराज! रुद्रमण्डल पर विजय पाने में प्रधान कारण यही वीर बालक है। प्रथमतः इसने ही युद्ध का प्रारम्भ किया था, बाणों की वर्षा का परवाह किए बिना ही प्राचीर पर सर्वप्रथम चढ़ने वाला भी यही है, शत्रुसमूह से व्याप्त दुर्ग के मध्य कूद कर प्रथम प्रवेश करने वाला भी यही है, दुर्गाध्यक्ष रहमत खाँ को पकड़ने वाला भी यही है और आगे से आती हुई (अपनी सेना से) त्रिगुण यवन सेना को अपनी छोटी सेना से पराजित करने वाला भी यही है।

महाराष्ट्रराजकृत रघुवीरसिंह की प्रशंसा सुनकर जलते हृदय वाले

सन्वरावीरादुत्थाय तस्मै स्वहस्तस्थं महासिमयच्छत्, साधुवादेन च समनूनुदत्। सोऽपि राजद्वयं प्रणम्य, असिं कटिदेशे सन्न-ह्यित्वा, निर्दिष्टस्थाने उपाविशत्। महाराष्ट्रेश्वरश्च "अयं पाञ्च-साहस्त्रिकता-योग्यः"–इति शनैर्जयसिंहकर्णे आजपत्, सोऽपि चा-न्वमूनुदत्। किञ्चित् किञ्चिदिदमन्यैरेव श्रुतम्। क्रूरसिंहस्तु हृदा-कलस्य शूलेनेव कर्णयोस्तुद्यमानो भ्रुवावाकुञ्च्य, मुखमवनम्य तथैवास्थात्।

ततो महाराष्ट्रेश्वराज्ञया सर्वेऽपि निगृहीता वीरा आनायिता-स्त्यक्ताश्च। ततो दुर्गाध्यक्षो रहोमतखानोऽपि तत्र समानीतो नि-र्मुक्तबन्धनस्तन्मुखमवनतशिराः स्थितः। तमालोक्य महाराष्ट्र-

पाञ्चसाहस्त्रिकता=पञ्चसहस्रसैनिकाध्यक्षता। योग्यः=अर्हः। अन्वमू-नुदत्=अनुमोदितवान्। तुद्यमानः=व्यथ्यमानः। आकुञ्च्य=वक्रीकृत्य।

निगृहीताः=चारकीकृताः। निर्मुक्तबन्धनः=विगलितनिगडः। अव-

क्रूरसिंह के अतिरिक्त सब प्रसन्न हो उठे। महाराज जयसिंह ने भी उठकर अपने हाथ का विशाल खड्ग ही रघुवीरसिंह को दे दिया और साधुवाद से भी प्रसन्न किया। रघुवीरसिंह भी दोनों महाराजों को प्रणाम कर जयसिंह द्वारा प्रदत्त खड्ग को कमर में लटका कर अपने स्थान पर जाकर बैठ गया। महाराष्ट्रराज ने धीरे से महाराज जयसिंह के कानों में कहा—'यह पाँच हजार सेना की अध्यक्षता करने योग्य है।' और जयसिंह ने भी उसका अनुमोदन किया। इस बात को और लोगों ने भी थोड़ा-बहुत सुन लिया। किन्तु उसे सुनकर अपने कानों में शूल के आघात का अनुभव करने वाले क्रूरसिंह भौंहों को आकुञ्चित कर, मुख को अवनत कर बैठा रहा।

तदनन्तर महाराष्ट्रराज की आज्ञा से पकड़ लिये गये सभी राजपूत वीर वहाँ लाये गये और मुक्त भी कर दिये गये। उसके बाद रहमत खाँ को भी वहाँ लाया गया और बन्धन से मुक्त कर दिये जाने पर वह उन

राज उवाच—

"वीर ! साधु दर्शितवानसि युद्ध-कौशलम्। उचितमाचरितवानसि स्वामि-पिण्डस्य। जयः पराजयश्च न स्वाधीनः। यदि विजितोऽसि, गृहीतोऽसि, बद्धोऽसि, ततो व्रीडा नोचिता। पलायनं वा रक्ष रक्षेति रोदनं वा व्रीडास्पदम्, न तु वीरता-पुरस्सरं बन्धो वा प्राणत्यागो वा। तदधुना मुक्तोऽसि। रोचते चेत् अस्माननुसर, अथ वा स्वच्छन्दं विजयपुरेश्वरमेवानुसर"।

स तु "वीरराज ! अत्यन्तमुपकृतोऽस्मि औदार्येणानेन, किन्तु यस्मिन् हस्ते विजयपुर-रक्षार्थं खड्गं वहन् जीवनं यापितवानस्मि,

नतशिराः = नम्रमस्तक।

स्वामिनः पिण्डस्य = अन्नादेः। व्रीडा = त्रपा। व्रीडायाः, आस्पदम् = स्थानम्। मुक्तः = परित्यक्तः। अनुसर = अनुगच्छ। स्वच्छन्दम् = स्वतन्त्रम्। क्रियाविशेषणम्।

(महाराष्ट्रराजप्रभृति) के सम्मुख मुँह झुकाकर खड़ा रहा। उसे देखकर महाराष्ट्रराज ने उससे कहा—

वीर ! तुमने अपनी युद्ध कुशलता का पूर्ण प्रदर्शन किया है। तुमने स्वामी के दिये अन्नपानादि के अनुरूप काम भी किया है। युद्ध में जय या पराजय अपने वश की बात नहीं है। यदि युद्धभूमि में तुम जीत भी लिये गये हो पकड़ भी लिये गये हो, और बाँध भी लिये गये हो तब भी तुम्हें लज्जित होना उचित नहीं है। युद्धक्षेत्र से भग जाने या शत्रुओं के समक्ष 'त्राहि त्राहि' करने में लज्जा है, वीरता का प्रदर्शन करते हुए बन्धन में आ जाना या प्राणत्याग लज्जास्पद नहीं है। अब तुम मुक्त कर दिये गये। मन चाहे तो हमारे साथ रहो और नहीं तो पुनः स्वच्छन्द होकर विजयपुरेश्वर के पास ही लौट जाओ।

शिवाजी की बात सुनकर रहमत खाँ ने कहा—वीरराज ! आपकी इस उदारता का मैं बहुत ही कृतज्ञ हूँ। किन्तु जिस हाथ में विजयपुर

नास्मिन्नेव दग्धहस्ते विजयपुर-विरोधिनां साहाय्याय निस्त्रिंशं माकलयितुमुत्सहते मे चेत"—इत्युक्तवान्।

तत. शिवराजेन यथोचितं विधेहीत्युक्त, गच्छन् कतिभिश्चिदेव पदैः परावृत्य पुन प्रोक्तवान्—

"महाराज ! वृद्धोऽसौ बहुभिर्युद्धवान्, किन्तु न भवादृशो वीर राज एव दृष्ट, न वा भावत्का इव योद्धार एव दृष्टा.। तथाऽपि निविवेदयिषामि-यद् भवत्सेनासु न सर्वं एव राजभक्ता. सन्ति। केचन विद्रोहिणोऽपि कपटेन स्व राजभक्त प्रदर्श्य भवत्कृपा-पात्र तामपि वहन्तो गूढ विद्रोहमाचरन्ति। तादृशेनैव केनचित् प्रथममेव सतर्कीकृता वयम्, अन्यथा अल्पेनैवाऽऽयासेन जय्यमासीद् भवा

दग्धहस्ते = भागधेयरहितकरे। आकलयितुम् = धारयितुम्।
विधेहि = कुरु। पदै = चरणै। परावृत्य = निवृत्य।
निविवेदयिषामि = निवेदयितुमिच्छामि। विद्रोहिण = शत्रवः।
भवत्कृपापात्रताम् = भवदीयदयाभाजनताम्। सतर्कीकृता = सावधानी

की रक्षा के लिये खड्ग ढोकर मैंने अपना सारा जीवन व्यतीत किया है उसी अभागे हाथ में विजयपुराधीश्वर के विरोधियों की सहायता के लिये खड्ग उठाने में मेरा मन उत्साहित नहीं हो रहा है।

तदनन्तर—जैसा उचित मालूम पड़े वैसा ही करो—इस प्रकार शिवाजी द्वारा कह जाने पर रहमत खाँ वहाँ से विजयपुर के लिये चल पड़ा। कुछ ही पग चलने के बाद लौट कर शिवाजी से उसने कहा—

महाराज ! इस वृद्ध ने बहुतों के साथ युद्ध किया, परन्तु न तो आज तक इसने आप जैसे वीर को ही देखा था और न आपके योद्धाओं के समान योद्धाओं को ही। फिर भी मैं कुछ निवेदन कर देना चाहता हूँ—आपकी सेना में सभी राज भक्त नहीं हैं। कुछ राजद्रोही भी छल से अपने को राजभक्त दिखला कर आपके कृपापात्र भी बने हुये हैं और छिपकर आपका विद्रोह भी किया करते हैं। उन्हीं राजद्रोहियों में से किसी व्यक्ति

सर्वे—न जानीमहे। न जानीमहे।

ततः क्षणं सम्पूर्णा सभा निर्मक्षिकसञ्चारा संवृत्ता। सर्वेऽपि "कस्य प्राणा अवसन्नाः? कस्य जीवन समाप्तम्? को मृत्युना वीक्षित? को वा कृतान्तेन पाशितः?" इति चिन्तयन्तस्तूष्णीका जडीकृता इव चित्र-लिखिता इव चावर्तन्त।

अथ पुनरेव निर्णेतुमारब्धवान् महाराष्ट्रपति—

महा०—अथ ज्ञायते ह्यः कश्चिद् अनुपस्थितो वा, विलम्ब्य समायातो वा?

मूर्सिंहः—महाराज! कश्चन श्रीचरणानामनुग्रह-पात्रमेव विलम्ब्य समागतः, प्राणदान-प्रतिज्ञया सनाथ्येय चेत् कथयेयं नामापि।

---

*निर्मक्षिकसञ्चारा=मक्षिक सञ्चारेणापि शून्या। अवसन्नाः=* समाप्तप्राया। पाशितः-बद्ध। जडीकृता इव=स्तम्भीकृता इव।

प्राणदानप्रतिज्ञया=अमुरदशसन्यरा। सनाथ्येय=सनाथितः स्याम्।

---

सब—हम लोग नहीं जानते, नहीं जानते।

उसके बाद सारी सभा थोड़ी देर के लिए स्तब्ध हो गई। "किसके प्राण जाने वाले हैं? किसका जीवन-काल समाप्त हो चुका है? किसे यमराज ने देख लिया है? किसे यमराज ने अपने पाश में फँसा लिया?" इस तरह सोचते हुये जडवत् तथा चित्रवत् सभी मौन होकर खड़े रहे।

तत्पश्चात् महाराष्ट्रराज ने पुन निम्नलिखित रूप में निर्णय करना प्रारम्भ कर दिया।

महा०—अच्छा तो यह ज्ञात है कि कल कोई अनुपस्थित या विलम्ब से यहाँ आया था?

मूर्सिंह—महाराज! आपका कोई कृपापात्र व्यक्ति ही कल विलम्ब से आया था। यदि आप मुझे प्राणदान की प्रतिज्ञा करें तो मैं उस व्यक्ति का नाम भी बतला दूँ।

महा०—न भयं ते। कथय केन विलम्बितम्?

शूर०—रघुवीरसिंहोऽत्यन्तविलम्बेनाऽऽगतः।

[ ततः सर्वेषु क्षणं चकितेषु निभृतमवस्थितेषु ]

महा०—मूर्ख! सत्यं कथय। हृष्टवानस्मि रघुवीरस्य पौरुषं भक्तिं च, न तव मिथ्या-कलङ्केनाङ्कितं भवेद् रघोर्यशः। रघुवीरस्योन्नतिमाकलय्य खिद्यसे-इति प्रलपसि। तत्सत्यं वद, अन्यथाऽधुनैव न भवसि।

[ इति शक्तिमुदतूतुलत्।

रघुवीरः—[ सप्रञ्जलिं बद्ध्वा ] महाराज! मिथ्या नाभिधत्ते। सत्यमहं किञ्चिद् विलम्बेन समायातः। शूरो न हन्तव्यः।

---

पौरुषम् = पुरुषार्थम्। भक्तिम् = एकतानसेवाम्। प्रलपसि = अनर्गलप्रलापं करोषि। न भवसि = मृतो भवेः।

---

महा०—किसी प्रकार का भय मत करो। कहो–किसने यहाँ आने में विलम्ब किया था?

शूर०—रघुवीर सिंह बहुत विलम्ब से आया था। [ उसपर सबके कुछ देर तक चकित तथा मौन हो जाने पर ]

महा०—अरे मूर्ख! सच बतलाओ। मैं रघुवीर की वीरता तथा राजभक्ति देख चुका हूं। तुम्हारे मिथ्याकलङ्क से रघुवीर का यश मलिन नहीं होने वाला है। तुम इसी लिये प्रलाप कर रहे हो कि रघुवीरसिंह की उन्नति देखकर तुम्हारा हृदय जल रहा है। अतः ठीक ठीक बतलाओ, नहीं तो अभी अभी समाप्त हो जाओगे। [ यह कहकर महाराष्ट्रराज ने अपनी 'शक्ति' को उठा लिया ]

रघु०—[ तत्क्षण हाथ जोड़कर ] महाराज! शूरसिंह झूठ नहीं कह रहे हैं। मैं सचमुच कुछ विलम्ब से कल आया था। शूरसिंह को आप न मारें

तदाकर्ण्य, सकलाऽपि सभा जडीकृतेव मोहितेव समाहितेव च संवृत्ता। अथ पटान्तेन स्वेदमपहृत्य शिवराजः क्रूरेण चक्षुषा रघुवीरं दिधक्षन्निव समगादीत्।

शिव०—मूढ! तर्हि किमिति विलम्ब्य समायातोऽसि?

क्रूर०—[ रघुवीराभिमुखम् ] कथय, कारणं कथय।

शिव०—क्षिप्रं कथय! किं न वेत्सि मदाज्ञा समुल्लङ्घनस्योल्बणं फलम्? यद्विलम्बितवानसि।

[ ततो भुवमालोकयन्, बद्धकर–सम्पुटो रघुवीरः, किमपि न प्रावोचत्। तदाकर्ण्याधिकं शङ्कितो महाराष्ट्रराजः पुनरवादीत् ]

महा०—मूढ! विद्रोहिन्! मिथ्यैव स्वामिभक्तिं प्रकटयसि?

---

समाहिता = सावधाना। किमग्रे भावीति समवलोकयितुम्।

उल्बणम् = कठिनम्।

---

रघुवीर सिंह की बात सुनकर सारी सभा जड़पदार्थ-सी, मूर्च्छित-सी और समाधिमग्न-सी हो गई। तत्पश्चात् पसीना पोंछ कर शिवाजी ने अपनी क्रूर दृष्टि से रघुवीर सिंह को देखा मानो अपनी क्रोधाग्नि से वे उसको जलाना चाह रहे थे और कहा भी।

शिव०—मूढ! तो विलम्ब से क्यों आये थे?

क्रूर०—[ रघुवीर सिंह की ओर देखकर ] कहो कहो देर से आने का कारण बतलाओ।

शिव०—शीघ्र बतलाओ! क्या तुम मेरी आज्ञा के उल्लङ्घन के कठोर परिणाम को नहीं जानते थे कि यहाँ विलम्ब से आये थे!

[ तदनन्तर नीचे को ओर देखता हुआ हाथ जोड़ कर खड़ा रघुवीर कुछ नहीं बोला। यह देख कर और भी अधिक सन्दिग्ध महाराष्ट्रराज ने पुनः कहा ]

महा०—मूढ! विद्रोही! झूठी स्वामिभक्ति ही दिखला रहे हो?

रघु०—प्रभो ! विद्रोहो मिथ्याऽऽचारो वा नास्मत्कुल-धर्मः।

महा०—तत्किमिति विलम्बितवानसि ?

रघु०— मनसैव "सौवर्णि ! तव साक्षात्कार एव विलम्ब-कारणम्, तदत्र किं कथयामि !"—इति विभावयन् मुखमालोकयन् पद-नखेन धरा-तलमुल्लिखन् निःशब्द एव समस्थित ]

महा०—[ अत्यन्त खिन्नः, स्विन्नश्च पटान्तेन स्वेदं परिहृत्य ] आः ! कथं स्वप्नमिव पश्यामि। यस्यैवं मधुरा गीः, यस्यैवं पराक्रमः, स एव च्छली !!

रघु०—महाराज ! अनीहमानस्यापि मे विलम्बो जातः, किन्तु

मिथ्याचारः=असदाचरणम्। अस्माकं कुलधर्मः = अन्वयकर्त्तव्यम्।
निःशब्दः = मौनी।
स्विन्नः = घर्मबिन्दुव्याप्तः।
अनीहमानस्य = अनिच्छतः।

रघु०—प्रभो ! विद्रोह करना या मिथ्याचार करना मेरे कुल का धर्म नहीं है।

महा०—तो फिर विलम्ब तुमने क्यों किया ?

रघु०—[ प्यारी सौवर्णी ! तुम्हारा मिलना ही यहाँ मेरे विलम्ब से आने का कारण है–इस बात को मन ही मन सोचता हुआ, जमीन की ओर दृष्टि लगाये पैर के नख से पृथ्वीतल को खरोंचता हुआ चुप ही खड़ा रहा ]

महा०—[ अत्यन्त खिन्न तथा पसीने से तरबतर हो जाने के कारण कपड़े से पसीना पोंछ कर ] आः ! क्या मैं स्वप्न देख रहा हूँ ! जिसकी इस तरह की मधुर वाणी, जिसका इस तरह का पराक्रम वही छल करने वाला भी है !

रघु०—महाराज ! नहीं चाहने पर भी मुझे यहाँ आने में विलम्ब तो

छल या स्वामि–विद्रोह वा न जानामि।

महा०—मूढ ! ईदृशैः कथनैः प्राण-रक्षा यत्नो व्यर्थः।

रघु०—प्रभो ! स्वामिनोऽन्नेन पुष्टमिदं शरीरम्, स्वामिन एव कृपाणेन विलीढं भवतु। यस्य तोषश्चिरमजीवयत्, तस्यैव रोषो व्यापादयतु। नाहं प्राणरक्षार्थं यते, न वाऽपराध-क्षमां याचे। किन्तु यत् सत्यं तद् ब्रवीमि, नाहं स्वामि विद्रोहापराधी, न वा छलं जाने, किन्तु न जाने केषां दुरदृष्टानां फल-स्वरूपो मे विलम्बः समभूत्। सत्यमिति कथयामि। विलम्बापराधस्य जीविकाच्छेदो वा शिरश्छेदो वा यथा रोचेत, तथा दण्डो विधेयः। विद्रोहाचरणन्तु न कृतवानस्मि।

विलीढम् = विनष्टम्। तोष = प्रसन्नता। व्यापादयतु = मारयतु। दुरदृष्टानाम् = दुर्भाग्याणाम्।

अवश्य हो गया था, परन्तु छल या राजविद्रोह का तो मैं नाम भी नहीं जानता।

महा०—मूढ ! इस प्रकार के कथनों से अपने प्राण की रक्षा के लिये तुम्हारा सारा प्रयास निरर्थ है।

रघु०—प्रभो ! आपके अन्न से यह शरीर पला है और आज आप के कृपाण से ही विनष्ट भी हो जाय ! जिसके सन्तोष ने मुझे इतने दिनों तक जिलाया है उसी का रोष आज मार भी डाले। मैं अपनी प्राणरक्षा की चेष्टा नहीं करता और अपने अपराध के लिये क्षमा भी नहीं चाहता। किन्तु जो सत्य है उसे मैं बतला रहा हूँ—मैं स्वामि विद्रोहात्मक अपराध करने वाला नहीं हूँ और छल करना भी नहीं जानता। किन्तु न जाने मेरे किस दुर्भाग्य का यह परिणाम है कि कल मुझे यहाँ आने में विलम्ब हो गया। मैं सच कह रहा हूँ—विलम्बात्मक अपराध के जिस प्रकार का दण्ड जीविकाच्छेद या शिरश्छेदन आप उचित समझें, मुझे दें, किन्तु मैंने विद्रोहात्मक कार्य तो नहीं किया है।

महा०—वाचाल ! कपटिन् ! तिष्ठ ! पश्यन्तु सर्वे विद्रोहिणो दण्डम् । [ इति शक्तिमुदतिष्ठिपत् ]

रघु०—महाराज ! अत्र भवतो भ्रमापनोदनाय तत्त्वं कथितवानस्मि । वाचालो नास्मि । अस्मत्कुलं कपटस्य कथामपि न जानाति । जननीमपि न स्मरामि । बाल्यस्यैव तातोऽपि सागरे मग्नः । प्रभुरेव जननी, जनकः, ईश्वरश्च । यदि मृतेऽपि वृद्धो गुरुर्वा नववयस्का एका अपरा व्यक्तिर्वा रोदिष्यति, नाऽन्यः । श्रीमच्चरणं ध्यायन् सुखेन प्राणांस्त्यक्ष्यामि । किन्तु यथा भवानेव पश्चात् दुःखेन न तप्येत, तथा विचार्य हन्तव्योऽयं बालः ।

---

वाचाल ! = मिथ्या बहुभाषिन् !
भ्रमापनोदाय = भ्रान्तिदूरीकरणाय ।
नववयस्का-एका अपरा-व्यक्तिः, एतेन गूढतया विलम्बकारणं प्रदर्शितम्, किन्तु दौर्भाग्यात्सौभाग्याद्वा तदानीं न शिवेनावधारितम् ।

---

महा०— वाचाल ! कपटी ! ठहरो ! विद्रोही को दिये जाने वाले दण्ड को सब लोग देखें । [ यह कहकर उन्होंने अपनी 'शक्ति' उठा ली ]

रघु०—महाराज ! श्रीमान् के भ्रम को दूर करने के लिये मैंने वस्तुस्थिति बतला दी है । मैं वाचाल नहीं । मेरा कुल कपट का नाम तक नहीं जानता । अपनी माँ का भी मुझे याद नहीं आ रही है । मेरी बाल्यावस्था में ही पिताजी भी समुद्र में डूब चुके हैं । आप ही मेरे लिये माता भी हैं, पिता भी तथा राजा भी । यदि मैं मर भी जाऊँगा तो एक वृद्ध गुरुजी और एक नववयस्का व्यक्ति ( सौवर्णी ) रोयेंगे, और कोई नहीं । श्रीमान् के चरणों का ध्यान करता हुआ मैं सुखपूर्वक अपने प्राण का परित्याग कर दूँगा । किन्तु इस बालक की हत्या आप सोच-विचार कर ही करें, ताकि पीछे आपको इसके लिये पश्चात्ताप न करना पड़े ।

महा०—नाहमधिकं शुश्रूषे तव व्यर्थप्रलपितम्।

[ इति कथयित्वा शक्तिं सज्जीकृतवान् ]

[ ततो जयपुराधीश्वरेण बहुशः सान्त्वितोऽपि, शक्तिं संस्थाप्यापि, क्रोधेनास्थिरः प्रोक्तवान् ] न त्वादृशानां निकटे जयपुराधीशानां खड्गः शोभते, तत् प्रतियच्छ।

रघु०—[ खड्गं सम्मुखेऽस्थापयत्। ]

महा०—दूरो भव, नाहं त्वादृशानां मुखमवलुलोकयिषामि।

रघु०—[ साष्टाङ्गं प्रणम्य निर्गतः ]

अथ मुहूर्त्तानन्तरं किञ्चित् प्रकृतिमापन्ने महाराष्ट्रेश्वरे महाराज-जयसिंहेन मन्दमुक्तम्—वीर! एकदा निर्दोषं बन्धुं वीरेन्द्रसिंहं कलङ्कितवानस्मि। स तु वैभवं त्यक्त्वा न जाने क्व गतः—

---

शुश्रूषे = श्रोतुमिच्छामि।

अवलुलोकयिषामि = अवलोकयितुमिच्छामि।

---

महा०—अब मैं तुम्हारा व्यर्थ का प्रलाप अधिक नहीं सुनना चाहता।

[ यह कहकर अपनी 'शक्ति' को शिवाजी ने सुसज्जित कर लिया ]

[ तदनन्तर जयपुर महाराज द्वारा बहुत प्रकार की सान्त्वना दिये जाने पर भी, शक्ति को रखकर भी, क्रोधकम्पमान शिवाजी ने कहा— ]

तुम्हारे जैसे नीच के पास जयपुराधीश्वर का खड्ग शोभित नहीं हो रहा है। अतः तुम इनका खड्ग इन्हें लौटा दो।

रघु०—[ खड्ग को सामने रख दिया ]

महा०—दूर हटो, तुम्हारे जैसे नीच का मैं मुँह तक देखना नहीं चाहता।

रघु०—[ साष्टाङ्ग प्रणाम कर वहाँ से चल पड़ा ]

तदनन्तर थोड़ी देर के बाद जब महाराष्ट्रराज शान्त हो गये तब जयपुरनरेश ने धीरे से उनसे कहा—वीर! एक बार निर्दोष बन्धु वीरेन्द्रसिंह को मैंने भी कलङ्कित किया है। वह सम्पत्ति को छोड़कर कहाँ चला

इत्यधापि स्मारं स्मारं खिद्ये । ततः कथयामि, दण्डे त्वरा न विधेया। मन्ये, अस्मिन् विषये बहु अवशिष्यते । तद् अङ्गीकरोषि चेत् प्रातरहमपि वास्तविक-विद्रोहिणं निश्चेतुं यते ।

महा०—नात्र मम विमतिः ।

जय०—उच्यतां प्रातः सर्वेऽप्येते मच्छिबिरमायान्त्विति ।

महा०—नरसिंह ! प्रिय माल्यश्रीक ! भवन्तः सर्वेऽपि प्रधानवीराः प्रातरेव महाराज-जयपुराधीश्वरस्य शिबिरं गच्छन्तु, पृष्टाश्च सत्यं वदन्तु ।

---

प्रकृतिम् = आवेशाविधुरावस्थाम् । आपन्ने = प्राप्ते । कलङ्कितवान् = मिथ्याक्षेपैराक्षिप्तवान् । वैभवम् = समर्थनम् । त्वरा = शीघ्रता ।

विमतिः = विभिन्ना मतिः । विपरीतः विचार इति यावत् ।

एवम्भूता क्षिप्रकारिताऽपि शिवराजपतनस्य कारणेष्वेकमित्यवधारणीयम् । या शैली पश्चादाभितैतद्विषयविवेचनाय जयसिंहेन स्वीकृता; सैव

---

गया—इसका पता भी नहीं है । आज बारम्बार उसकी याद कर खिन्न हो रहा हूं । इसलिए मैं कहता हूं—दण्ड देने में शीघ्रता नहीं करनी चाहिये । मैं समझता हूं कि इस विषय में अभी बहुत कुछ कर्त्तव्य अवशिष्ट ही है । अतः यदि आप चाहें तो सुबह मैं भी वास्तविक विद्रोही के निश्चय के लिये प्रयास करूं ।

महा०—इसमें मेरा वैमत्य नहीं है ।

जय०—अच्छा तो इन सबसे आप कह दें कि ये सब कल प्रातःकाल मेरे शिविर में आ जाएं ।

महा०—नरसिंह ! प्रिय माल्यश्रीक ! आप सब प्रधान वीर कल प्रातःकाल होते ही महाराज जयपुराधीश के शिविर में चले जायं और यदि आप कुछ पूछें तो आप लोग सत्य-सत्य बतलायें ।

जय०—सादिनः सत्वरं प्रेष्याः, ये रहोमत्तखानमपि सत्वरं परावर्त्त्य, अत्रैव स्थापयेयुः, रघुवीरं चाऽऽनयेयुः।

महा०—माल्य! तथा विधेहि।

माल्यश्रीकस्तथा विधातुं सादिनो धावितवान्। सायं समयमासन्नमवगत्य च सर्वे समुत्तस्थुः।

इति नवमो निश्वासः।

---

राजनीतिकयोग्यतापूर्णोऽति को नाङ्गीकुर्यात्! स्वाब्धतुल्यवीर्येण रहोमत्तखानेन कस्यचन सेनापतेर्व्यर्थहिंसायै कथितं भवेदित्यपि नावधारितं तदानीं यच्चदपि रुहराविलसितमित्यास्तां तावत्।

इति श्रीशिवराजविजयवैजयन्त्यां नवमनिश्वासविवरणम्।

---

जय०—घुड़सवारों को शीघ्र भेजवाये ताकि वे रहमत खाँ को भी शीघ्रता से लौटाकर यहीं रक्खें और रघुवीर को भी लौटा ले आवें।

महा०—माल्य! वैसा ही करो।

वैसा करने के लिये माल्यश्रीक ने घुड़सवारों को दौड़ाया एवम् सन्ध्या समय जानकर सब सभास्थान से उठ गये।

शिवराजविजय का नववाँ निश्वास समाप्त।

॥ श्री ॥

# दशमो निश्वासः

'मानो हि महतां धनम्।'
गङ्गा तीरमपि त्यजन्ति मलिनम्, ते राजहंसा वयम्।"

—मुक्तकम्

अथ प्रातरेव महाराज-जयसिंहो विसृज्य पर्य्यङ्कम् 'रघुवीरो निर्दोष.' इत्येव स्वप्नेषु पश्यन् प्रातर्विधेय-कर्मणो निवृत्य सभामधिष्ठाय चिरं निरणैषीत्। तेनाऽऽहूय, "सत्यं वद केन सूचितोऽसि, न ते भयम्, यथा निर्दोषो न भवेद्दण्डितस्तथा विधेहि"—

---

क्रूरेण क्रूरधिहन मिथ्याभियोग, क्रियत् क्षणस्य कृते स्वाभाविकत्वरयो स्वीकृतमपि च शिवबीर, स्वीय मान पालयितु तथा दूरीभूतो रघुवीरसिंहो यथा तदनिच्छयाऽन्वेषितोऽपि न लब्ध इत्युपगीयते "मानो हि महतां धनम्" इति "गङ्गातीरमि" ति च।

विसृज्य = परित्यज्य। पर्य्यङ्कम् = शोभनां खट्वाम्। प्रातर्विधेय-कर्मणः = उप कर्तव्यकार्यात्। निरणैषीत् = निरचैषीत्। आहूय = आकार्य। निर्दोषः = निरपराधः। विधेहि = कुरु।

---

"आत्मसम्मान ही महापुरुषों का सर्वस्व है।"

"हमलोग तो ऐसे राजहंस हैं जो दूषित हो जाने पर गङ्गा-तट का भी परित्याग कर देते।"

—मुक्तक

इसके बाद "रघुवीर निर्दोष है' इस प्रकार के स्वप्न दर्शन के पश्चात् प्रातःकाल में अपनी शय्या से उठकर महाराज जयसिंह अपने प्रातःकृत्य से निवृत्त हुये और तदनन्तर सभा में बैठकर चिरकाल तक उन्होंने विचार-विमर्श किया। उन्होंने रहमत खाँ को बुलाकर पूछा— 'सच सच बताओ—तुम्हें किसने सूचना दी है? तुम डरो मत। तुम ऐसा करो जिससे

इति पृष्टो रहोमत्तखान उवाच—'महाराज! अस्त्येकः क्रूरसिंहाख्यः सेनापतिः। तस्यैव साहाय्येन शास्तिखानेन पुण्यनगरं गृहीत-मासीत्। तेनैव वयमपि सूचिताः'।

ततः कोपकषायितेन महाराजेन क्रूरमानाययितुं सादिनः प्रेषिताः। स तु रात्रावेव गृहं त्यक्त्वा क्वापि पलायित इत्याकर्ण्य निश्चितस्तस्य दोष इति निरधारि। ततो रघुवीरमानाययितुं हयारोहान् विसृज्य संवादमाप्तवान्—यत् सभातो निर्वासितो रघुवीर आवासं गत्वा गुरुं गणेशशास्त्रिणं साष्टाङ्गं प्रणम्य, "अद्य निरागसोऽपि प्रभुणा विद्रोहीति कोपविषयीकृतोऽस्मि। धिङ् मे

कोपकषायितेन = रोषरक्तेन। आनाययितुम् = प्रापयितुम्। पलायित इत्याकर्ण्य, न केवलं रहोमत्तखानकथनेनैव दोषो निर्धारितो राजनीतिकुशलवशा जयसिंहेन, अपि तु पलायनरूपात्प्रत्यक्षाद्धेतोरिति बोधयति। आवासम् = निवासभूमिम्। दुरदृष्टम् = दुर्भाग्यम्। गुरुकण्ठम् =

कोई निर्दोष अपि दण्डित न हो।" इस प्रश्नपर रहेमत खाँ ने उत्तर दिया—'महाराज! एक क्रूरसिंह नाम का सेनापति है। उसी की सहायता से शाइस्ता खाँ ने पूना को घेर लिया था। हम लोगों को उसी से सूचना मिली थी।'

इसके बाद कोप से लाल लाल आँखों वाले महाराज ने क्रूरसिंह को बुलाने के लिये घुड़सवारों को दौड़ाया। परन्तु जब महाराज को यह खबर मिली कि क्रूरसिंह रात में ही अपना घर छोड़कर कहीं भाग गया तो उन्होंने यह निश्चय कर लिया कि अपराध क्रूरसिंह का ही था। फिर रघुवीर को अपने पास लाने के लिए जब उन्होंने घुड़सवारों को भेजा तो लौट कर घुड़सवारों ने उन्हें सूचना दी कि सभा से बाहर निकाल दिये जाने पर रघुवीर सिंह अपने घर गये और अपने गुरुदेव श्रीगणेश शास्त्री जी को प्रणाम करते हुये उनसे "आज निर्दोष होने पर भी मुझे विद्रोही समझ कर महाराज मेरे ऊपर बिगड़ गये, मेरे इस दौर्भाग्य को धिक्कार है।' ऐसा

थिष्यति, तपोभिर्वा शरीरं जर्जरयिष्यति! हन्त! हतोऽस्मि! को मां वृद्धं 'तात तातेति' मधुर-भाषण-पुरस्सरं सेविष्यते।

तदाकर्ण्य गणेशशास्त्रिणा सहैव सर्वेऽपि बाष्प-धाराभिः कपोलावस्नपयन्।

ततो रघुवीरान्वेषणाय बहूनश्वारोहान् विसृज्य गणेशशास्त्रिणं पुनरुवाच महाराजः—

वृद्ध! ह्यो रघुवीरोऽपि कुल-गौरवमशंसत, भवानपि चाऽऽम्रेड्य तत्कुलकथां संस्मरति। तस्य वीरताव्यवहारः, गम्भीरं भाषणम्, औदार्य-पूरितं हृदयम्, तेजस्विनी आकृतिश्च, कुलमेव परिचाययन्ति। किन्तु विशिष्य विज्ञातुमेतस्य भवतश्च वृत्तान्तं चपलं

---

अशंसत=अकथयत्। आम्रेड्य=द्विस्त्रिरुद्घुष्य। वीरताव्यवहारम्=शूरताकर्त्तव्यम्। औदार्यपूरितम्=उदारताभरितम्। तेजस्विनी=प्रतापमयी। आकृतिः=रूपम्। परिचाययन्ति=बोधयन्ति। चपलम्=

---

मुँह में जा पहुँचेगा, या नदी के प्रवाह में अपने शरीर को बहा डालेगा, या विष खाकर प्राणोत्सर्ग कर देगा, या कठिन तपस्या से ही अपने कोमल शरीर को जर्जर कर डालेगा। हाय! अब मर चुका। अब कौन सा व्यक्ति मुझे अपने मधुर बातचीत के साथ "तात! तात!" कहेगा और मुझ वृद्ध की सेवा करेगा।

शास्त्री जी का करुण क्रन्दन सुनते ही सब के मुँह आँसुओं से धुलने लग गये।

तत्पश्चात् रघुवीर को ढूँढने के लिये अनेक घुड़सवारों को भेजकर महाराज ने शास्त्री जी से कहा—वृद्ध शास्त्रीजी! कल रघुवीर ने स्वयम् अपने कुल का गुण-गान किया था और आप भी उसकी उच्च कुल स्थिति का वर्णन कर रहे हैं। इतना ही नहीं, उसके वीरतापूर्ण व्यवहार से, गम्भीरतापूर्ण वचनों से, उदारता भरे हृदय से तथा देदीप्यमान आकृति

मे चेतः। मन्ये भवन्तमपि कदाचन दृष्टवानस्मि, भवतो भाषण-भङ्गी चानुकरोत्यस्मद्देशीयानां परिपाटीम्। तद्विशकलय्य प्रोच्यताम्, कुतस्त्यो भवान्? किमितिहासश्च रघुवीरः?—इति।

तदाकर्ण्य वृद्ध उवाच—"महाराज! इतिहासमस्य श्रुत्वाऽधिकं खेदमावक्ष्यति भवान्, तदलं शोकसमुद्रमन्थनैः"। तत पुनः पुनराग्रहेण पृच्छ्यमानो वृद्धः शृण्वत्सु माल्यश्रीकगौरसिंहादिषु समवादीत्—

देव! किं न स्मर्यते भवता जितवार-भूस्वामी भवद्बन्धुः? यो

---

विशालवक्षसम्। भाषणभङ्गी = कथनशैली। परिपाटीम् = शैलीम्। क इतिहासो यस्य सः किमितिहासः = किमितिवृत्तः।

आवक्ष्यति = प्राप्स्यति। शोकसमुद्रस्य = खेदपारावारस्य, मन्थनैः = आलोडनैः।

जितवारनाम्नो ग्रामस्य भूस्वामी = ग्रामपतिः।

---

से भी उसके उच्चकुल का ही परिचय मिलता है। किन्तु उसके तथा आपके पूरे वृत्तान्त को स्पष्टरूप में समझने के लिये मेरे मन में उत्सुकता बनी हुई है। मैंने आपको भी प्रायशः पहले कभी देखा है और आपकी भाषणशैली भी मेरे देश के रहनेवालों जैसी ही लगती है। अतः आप मुझे विस्तारपूर्वक अपना परिचय दें और रघुवीर का भी सारा इतिहास बतलायें।

महाराज की वाणी सुनकर वृद्धशास्त्रीजी ने उत्तर दिया—महाराज! हम लोगों के इतिहास को सुनकर आप बहुत खिन्न हो उठेंगे। अतः इस शोक सागर का मथन करना व्यर्थ है। परन्तु बारम्बार महाराज द्वारा आग्रहपूर्वक पूछे जाने पर शास्त्रीजी सुनने के लिये दत्तचित्त माल्यश्रीक एवम् गौरसिंह आदि के बीच बैठे हुये महाराज से कहने लगे—

महाराज! क्या आप जितवार नामक गाँव के अधिपति अपने मित्र का स्मरण नहीं कर पा रहे हैं जिन्होंने निरपराध होने पर भी आपके

भवता विनैवापराधमवहेलितः सर्वस्वं त्यक्त्वा, राजपुत्र-देशमेव त्यक्तवान्।

जय०—कथं न स्मर्यते ? आजन्म स्मरिष्यामि, पश्चात्तापैश्च हृदयं धक्ष्यामि। [ पटान्तेन बाष्प परिमृजन् ] ततः—

गणेशशास्त्री—तस्यैवाहं पुरोहितोऽस्मि, तत्रैव मां भवान् बहुशोऽद्राक्षीत्।

जय०—आः ! स भवान् ! [ इत्युत्थाय प्रणनाम ]

गणेश०—[ आशिष उक्त्वा ] तेनैव सहाहमपि प्रचलितः।

जय०-किं तेनैव सह ? वीरेन्द्रेणैव सह ? किं वीरेन्द्रसिंहोऽधुनाऽपि भवदाश्रमे सहास्ति ? अपि तमालिङ्ग्य चिरताप-व्यथां

---

अवहेलितः = तिरस्कृतः। सर्वस्वम् = सर्वं धनम्।
पश्चात्तापैः = अनुतापैः। धक्ष्यामि = ज्वलयिष्यामि।
भवदाश्रमे = भवत्कुटीरे। चिरतापव्यथाम् = दीर्घविरहपीडाम्।

---

द्वारा अपमानित होकर अपनी सारी सम्पत्तियों के साथ-साथ आपके देश को भी छोड़ दिया था।

जय०—स्मरण कैसे नहीं करूँ ? मैं तो जीवनपर्यन्त उनका स्मरण करता रहूँगा और पश्चात्ताप से मेरा हृदय जलता रहेगा। [ तौलिये से आँसू पोंछते हुये ] अच्छा, इसके बाद·······

गणेशशास्त्री—मैं उन्हीं का पुरोहित हूँ। आपने मुझे वहीं कई बार देखा है।

जय०—अच्छा, आप उनके पुरोहित हैं। [ इतना कहते हुये उठकर महाराज ने उन्हें प्रणाम किया। ]

गणेश०—[ आशीर्वाद देते हुये ] उन्हीं के साथ मैं भी वहाँ से चल पड़ा था।

जय०—क्या उन्हीं के साथ ? उन्हीं वीरेन्द्रसिंह के साथ ? क्या वीरेन्द्रसिंह आज भी आपके साथ आपके आश्रम में रह रहे हैं ? क्या मैं

पर्यवसाययिष्यामि ?

गणेश०–महाराज ! अमुना वीरेन्द्रेणैव सह निर्यातोऽस्मि। वयं सर्वेऽपि प्रथमं द्वारकाधीशं द्रष्टुं प्रचलिता। ततो महता पोतेन मुम्बापुरीं निवर्तमाना अकस्माद् झञ्झावाताऽऽघातात् पोतपातमन्वभवाम। ततः सपदि मया वीरेन्द्रकुमारो रामसिंह उत्तरीयवाससा स्कन्धे बद्धः। दैवाद्वाऽऽवाभ्यामुभाभ्यां पुरोहितयजमानाभ्यां कार्पास-भार-द्वयं लब्धम्, तदवलम्ब्य यावत् पुरोऽवलोक्य सांयात्रिक-क्रन्दन-श्रवण-सञ्जातं रोमोत्कम्पमन्वभवाव, तावन्मन्दर-गण्ड-शैल इव पारावारतलमगात् पोतः।

---

पर्यवसाययिष्यामि = परितः समापयिष्यामि।

निर्यातः = निष्क्रान्तः। महता, पोतेन = जलयानेन। मुम्बापुरीम् = मोहमयीम् 'बंबे'। झञ्झावाताघातात् = वृष्टिकमहावायुताडनात्। पोतपातम् = जलयानपतनम्। सांयात्रिकाणाम्=पोतवणिजाम्। संयात्रा = समुदितयात्रा द्वीपान्तरयात्रा वा प्रयोजनमस्येति प्रयोजने ठञ्। क्रन्दनश्रवणेन = रोदनश्रुत्या, सञ्जातम् = सम्भूतम्। रोमोत्कम्पम् =

---

उनको आज गले लगाकर अपने पुराने पश्चात्ताप की व्यथा को समाप्त कर सकूँगा ?

गणेश०—जी हाँ, महाराज ! मैं तो ग्रामाधीश वीरेन्द्रसिंह के साथ ही वहाँ से चल पड़ा था। सब से पहले तो हम लोग द्वारकाधीश को ही देखने चले गये थे। बाद में जब वहाँ से हम लोग एक विशाल जलयान से बम्बई को लौट रहे थे उस समय एकाएक इतने जोरों से वर्षा तथा आँधी आयी कि हम लोगों का जलयान डूबने लग गया। तब झटके से मैंने अपने द्वितीय वस्त्र से वीरेन्द्रसिंह के सुपुत्र रामसिंह को अपने कन्धे पर बाँध लिया। सौभाग्यवश हम दोनों पुरोहित यजमान को समुद्र में तैरते हुये रूई के दो भार (गाँठ) मिल गये और उन दोनों का सहारा लेकर हम लोग जलयान की ओर देखते समय समुद्र-यात्रियों के करुणक्रन्दन को सुनकर रोमाञ्च का अनुभव कर ही रहे थे कि इतने में ही वह जलयान

क्षणं तरङ्गैरान्दोल्यमानो वीरेन्द्रसिंहो दृश्यमानोऽपि, ऊर्मि-राशिभिर्न जाने कुतो नीतः। अहञ्च रामसिंह-सहितो मूर्छितप्रायः समस्तां रात्रिं वीचि-प्रचयैर्दोदुल्यमानः, अरुणोदयसमये समपश्यम्—यत् केचन सांयात्रिका आवां स्वपोते उत्थाप्य, पयोधि-पय:क्षार-क्षरितप्रायां त्वचं तैलैर्मर्दयन्तीति। अथ कालेनोल्लाघौ आवामितः पुण्यनगरमायातौ। रामसिंहो दुरवस्थासमये स्वनामापि ख्यापयितुं लज्जमानो रघुवीरनाम्नाऽऽत्मानं परिचाययन् महाराष्ट्र-

---

पुलकम्। मन्दरस्य=तन्नामकोऽचलस्य। गण्डशैल इव=पर्वतच्युतस्थूलोपल इव। पारावारतलम्=समुद्रगर्भम्। अगात्=अगमत्।

आन्दोल्यमानः=हिल्लोल्यमानः। ऊर्मिराशिभिः=लहरिततिभिः। नीतः=प्रापितः। वीचिप्रचयैः=तरङ्गसङ्घैः। दोदुल्यमानः=उत्क्षिप्य-माणः। पयोधिपयसः=अम्भोधिवारिणः। क्षारेण=लवणभागेन। क्षरितप्रायाम्=जर्जरिताम्। उल्लाघौ=नीरोगौ। दुरवस्था-समये=

---

मन्दराचल की चोटी से गिरे हुये बड़े पत्थल के टुकड़े की तरह समुद्र में डूब गया।

यद्यपि थोड़ी देर तक समुद्र की तरङ्गों का आघात खाते हुये वीरेन्द्र सिंह भी दिखलाई पड़े तथापि उन तरङ्गों ने उन्हें कहाँ ले जा छोड़ा—इसका पता नहीं। इधर रामसिंह के साथ सारी रात उन तरङ्गों के बीच गोता खाता हुआ मृत-प्राय मैंने अरुणोदय के समय देखा कि कुछ यात्री लोग हम दोनों को अपनी नाव में रख कर समुद्र के खारे जल में चिर-काल तक तैरने के कारण रूखी पड़ गई हम लोगों की त्वचा पर तेल-मालिश कर रहे थे।

कुछ समय के बाद जब हम लोग स्वस्थ हो गये तब पूना आ गये। अपनी दुरवस्था की अवधि में अपने सच्चे नाम को बतलाने में लज्जा का अनुभव करते हुये रामसिंह भी अपने को रघुवीर नाम का एक साधारण व्यक्ति बतलाकर महाराष्ट्रराज शिवाजी के यहाँ दूत का काम करते हुये

राजस्य चरेषु प्राप्तजीविकः संवृत्तः। इतः परमवगत एव वृत्तान्त एतस्य भवताम्। हा! रामसिंहो मां वार्द्धक्ये विहाय न जाने क्व गतः? [ततः सर्व एव सर्वेऽपि सचिन्ताः समवर्तन्त। गौरसिंहादयोऽपि च परस्परमवलोक्य, किमपि व्याजिहीर्षव इव महाराज विवक्षुमाकलय्य, पुनस्तत्र एव दत्तकर्णाः समतिष्ठन्त]

जय०—[सजलनयनः समुच्छ्वस्य] शास्त्रिन्! रामसिंहो जीवति। मत्प्रेषिताः सादिनस्तमन्विष्य सपद्यानेष्यन्तीति विशिष्य सम्भावयामीति। अन्यथाऽपि स नाऽऽत्मानं व्यापादयिष्यति। यतो नास्मत्कुले जाता मूढयोषित इवाऽऽत्मानं घ्नन्ति। सोऽपि निश्चयेन गूढ-

अशोभनकाले। प्राप्तजीविकः = लब्धवृत्तिः। वार्द्धक्ये = वृद्धावस्थायाम्।
व्याजिहीर्षवः = व्याहर्तुमिच्छवः, आकलय्य = विज्ञाय। तत्र एव = तत्रैव। दत्तकर्णाः = अवहितश्रोत्राः।

विशिष्य = विशेषतः। सम्भावयामीति = अतितरां सम्भवति। अन्यथापि = अप्राप्तावपि। व्यापादयिष्यति = मारयिष्यति। मरिष्यतीति यावत्। मूढयोषित इव = मूर्खस्त्रिय इव। आत्मानं घ्नन्ति = आत्म-

अपना जीवन बिताने लग गया। उसके बाद का रघुवीर का इतिहास तो आपको ज्ञात ही है। हाय! पता नहीं—इस वृद्धावस्था में मुझे छोड़कर रामसिंह कहाँ चला गया! [इन बातों को सुनते ही सब चिन्तित हो पड़े। गौरसिंह आदि एक दूसरे की ओर देखकर कुछ बोलने को ही थे कि महाराज को ही बोलने की मुद्रा में देखकर उधर ही ध्यानस्थ हो गये]।

जय०—[आँखों में आँसू और लम्बी साँसें भर कर] शास्त्रीजी! यदि रामसिंह जीवित है तो इस बात की पूरी आशा है कि मेरे भेजे हुये घुड़सवार उसे खोजकर शीघ्र ही यहाँ ले आयेंगे। यदि ऐसा न भी हुआ तब भी वह आत्महत्या नहीं करेगा, क्योंकि हमारे वंशज किसी भी परिस्थिति में मूर्ख स्त्रियों की तरह आत्महत्या नहीं करते। मेरे मन में पूरा

पौरुषं प्रदर्श्य समये पुनरात्मानं परिचाययिष्यतीति विश्वसिति मे हृदयम् ।

गणेश०—महाराज ! तथाऽस्तु, चिरञ्जीवतु कुमार-रामसिंहः, स एव मेऽवलम्बः । न जाने तत्पिता प्रभुर्वीरेन्द्रो नक्रैर्भक्षितो वा, तरङ्गैरेव कथाऽवशेषीकृतो वा, तटं प्राप्यापि कृतान्तेन वीक्षितो वा, क्वापि पुत्रशोकाकुलो जीवति वेति ।

गौरसिंहः—शास्त्रिन् ! महाराज ! जीवति वीरेन्द्रसिंहो वीरवरः । नेदीयस्येव ब्रह्मचारि-कुटीरे जटिल-वेषेण वसति । स्वपुत्र रामसिंह-मेव प्राप्तुं देवमाराधयति । वयमपि चिरं कुमार-रामसिंहममार्गयाम,

---

हन्या कुर्वन्ति । गूढपौरुषम् = गुप्त पुरुषकारम् । विश्वसिति = विश्रम्भते ।

अवलम्बः = आधारस्तम्भः । नक्रैः = मकरै । यादोभिरिति यावत् ।
कथावशेषीकृतः = मृत्युं प्रापितः । कृतान्तेन = यमेन । वीक्षितः = दृष्टः ।

नेदीयसि = निकटस्थे । जटिलवेषेण = साधुवेषेण । आराधयति=

---

भरोसा है कि अवसर आने पर रामसिंह अपने लोकोत्तर पौरुष का प्रदर्शन करके अपने को स्वयम् प्रकट कर देगा ।

गणेश०—महाराज ! आपकी वाणी सत्य होवे । राजकुमार रामसिंह दीर्घजीवी हो । मेरा तो एकमात्र वही सहारा है । किन्तु मुझे इस बात का पता नहीं लग सका कि रामसिंह के पिता राना वीरेन्द्रसिंह ग्राहों के शिकार बन गये या तरङ्गों के आघात से ही मर गये या किनारे लगने के बाद ही उन पर यमराज की क्रूर दृष्टि आ पड़ी या आज भी अपने पुत्र के वियोग में विह्वल होते हुये कहीं जिन्दे ही हैं !

गौरसिंह—शास्त्रीजी ! महाराज ! वीरों में अग्रगण्य राजा वीरेन्द्रसिंह आज भी जीवित ही हैं । पास की ब्रह्मचारी की कुटिया में ही ब्रह्मचारी के वेष में वे रह रहे हैं । अपने प्रिय पुत्र रामसिंह को पाने के लिए ही ईश्वर की आराधना कर रहे हैं । हम लोग भी चिरकाल तक रामसिंह को ढूँढते रहे,

परन्तु रघुवीर एवायमिति परिचयो न लब्धः। हा दैव! विचित्रा ते घटना! यदर्थं ततो देवशर्म्मा वयञ्च चिराय रुदिमः; स एव कण्ठगतो मणिरिव न ज्ञातः।

ततः सर्वे चिरं बहुविधं वीरेन्द्रादि-विषये आलेपुः। परतः सर्वैः सह जयपुर-पुरन्दरः स्वयं कुटीरं गत्वा ब्रह्मचारि-वेषं वीरेन्द्रमालिलिङ्ग। उक्तवांश्च यद्-मयि क्षमां विधाय द्विगुण राज्यमङ्गीकृत्य सनाथ्यतां राजपुत्रदेशः - इति। सोऽवोचत्-महाराज! न भवतो दोषः, भवत्येव भाव्यम्। अहन्तु कुमार-रामसिंहस्य मुखं दृष्ट्वा काशीं गत्वा वयो निःशेषयिष्यामि। महा-राजेन रामसिंह एवान्विष्यताम्, तस्मै एव राज्यं दीयताम्।

सेवते। अमार्गयाम = अन्वेषयाम। रुदिमः = क्रन्दाम।

आलेपुः = आलाप चक्रुः। ब्रह्मचारिवेषम् = वर्णिलिङ्गिनम्। सनाथ्यताम् = स्वीक्रियताम्। भाव्यम् = भवितव्यम्। निःशेषयिष्यामि =

परन्तु इस बात की जानकारी नहीं मिल पाई थी कि रघुवीर ही रामसिंह है। हाय विधाता! तुम्हारी लीला भी अजीब है। जिसके लिए उसके प्रिय पिता, देवशर्मा तथा हम लोग भी चिरकाल से रो रहे हैं वह गले में लटके मणि की तरह पास में रहकर भी पहचान में न आ सका।

उसके पश्चात् सबों ने चिरकाल तक वीरेन्द्रसिंह आदि के प्रसङ्ग में आलाप विलाप किये। बाद में सबों के साथ ही जयपुराधीश ने स्वयम् उस कुटिया में जाकर ब्रह्मचारी के वेष में वर्तमान वीरेन्द्रसिंह को गले लगा लिया और उनसे कहा भी—मेरे अपराधों को क्षमा कर अब आप दूने राज्य का स्वीकार करें और राजस्थान को अपनी उपस्थिति से सनाथ करें।

वीरेन्द्रसिंह ने उत्तर दिया—महाराज! इसमें आपका कौन सा अपराध है! भवितव्यता टलती नहीं। किन्तु अब मैं रामसिंह का मुख देखकर काशी में ही अपना जीवन बिताऊँगा। अतः अब श्रीमान् रामसिंह की ही खोज करें और उसी को यह राज्य दें। हाय! मैं कितना बड़ा अन्धा हो गया कि

अन्धोऽहं यत् प्रत्यहं पश्यन्नपि नाज्ञासिषं-यद् रघुवीरो मे रामसिंहः—इति।

अथ गणेशशास्त्रिणाऽपि वीरेन्द्रः समालिङ्गितः। परतश्च खेदमया बहवः आलापा अभूवन्।

परम्परया वृत्तान्तमिमं शृण्वन्नेव महाराष्ट्रराजोऽपि कुटीरमायातो वाष्पैः कपोलौ क्षालयन्, "ममैवाविचार्यकारितायाः फलमेतत्"-इत्यसकृदुवाच। तावत्प्रविश्य भृत्येनैकेन कथितं "जयतु जयतु जयपुराधीश्वरः! तत्रभवतः सम्राजः पत्रमादाय दिल्लीतः सादिन आयाताः, शिबिरद्वारि च तिष्ठन्ति। अत्र प्रभवः प्रमाणम्"।

ततो वीरेन्द्रं गणेशं च बहुशः सान्त्वयित्वा सर्वेऽपि समुत्थाय स्वहयानारूढा वायुवेगेन निर्दिष्ट-शिबिरमायाताः। अन्तः प्रविश्य

---

समापयिष्यामि। नाज्ञासिषम् = नावेदिषम्।

अविचार्यकारितायाः = अनवधार्य करणस्य। असकृत् = अनेकवारम्।

---

प्रतिदिन देखने के बावजूद भी यह नहीं समझ सका कि वह रघुवीर तो मेरा ही बेटा रामसिंह था।

इसके बाद गणेश शास्त्री ने भी वीरेन्द्रसिंह का आलिङ्गन किया। तत्पश्चात् अनेक प्रकार के करुणापूर्ण वार्तालाप हुए।

जन परम्परा से इस वृत्तान्त को सुनते ही महाराष्ट्रराज शिवाजी भी वहाँ पहुँच गए और आँसुओं से अपने गालों को नहाते हुए बारम्बार कहने लगे—मेरे ही अविवेक पूर्ण व्यवहार का यह परिणाम है। इतने में ही एक दूत ने वहाँ आकर कहा—जयपुर-महाराज की जय हो, जय हो। दिल्ली-सम्राट् का एक पत्र लेकर उनके अश्वारोही दूत यहाँ आकर शिविर के दरवाजे पर खड़े हैं। ऐसी स्थिति में श्रीमान् ही प्रमाण हैं।

उसके बाद वीरेन्द्रसिंह तथा गणेश शास्त्री को अनेक तरह की सान्त्वना देकर सब उठ गये और अपने-अपने घोड़े पर सवार होकर बहुत तेजी से

पत्रं पठित्वा जयपुरेश्वरः सर्वान् विसृष्टवान्, रहसि च महाराष्ट्रेश्वरेण समालपत्।

जय०—राजन्, पत्रमिदं दिल्लीश्वरस्य।

महा०—आम्! अवगच्छामि।

जय०—भवतो मेलनेन प्रसीदति सम्राड् इति प्रकटयति।

महा०—प्रसादोऽयमत्रभवतः।

जय०—भवन्तं साक्षात्कर्तुं महाराजस्य महानभिलापः।

महा०—[ क्षणं तूष्णीं स्थित्वा ] तत्किं सम्राडित आजिगमिषति?

जय०—नहि नहि। तत्रैव भवन्तं सत्चिकीर्षति।

महा०—महाराज! भवद्वचने सर्वथा विहितविश्वासोऽस्मि,

---

मेलनेन = सन्धिना।

सत्चिकीर्षति = सत्कर्तुमिच्छति।

---

उस शिविर में आ पहुँचे जहाँ दिल्ली सम्राट् के दूत उनकी प्रतीक्षा कर रहे थे। शिविर में घुसने के बाद जब जयपुर-नरेश ने पत्र पढ़ा तब वे सबको बाहर हटाकर शिवाजी से एकान्त में बात करने लगे।

जय०—महाराज! यह पत्र दिल्लीसम्राट् का है।

महा०—हाँ, मैं जानता हूँ।

जय०—यह पत्र ऐसा बतला रहा है कि आपसे मिलने से दिल्ली-सम्राट् को बड़ी प्रसन्नता होगी।

महा०—यह तो उनकी (या आपकी) कृपा है।

जय०—आपको देखने की उत्कट अभिलाषा सम्राट् के मनमें है।

महा०—[ कुछ देर तक चुप रहने के बाद ] तो क्या सम्राट् यहाँ आना चाहते हैं?

जय०—नहीं नहीं। दिल्ली में ही आपका सत्कार करना चाहते हैं।

महा०—महाराज! आपकी बातों पर तो मुझे पूरा विश्वास है ही,

किन्तु न भवति मे प्रत्ययलेशोऽपि यवनेषु। यत् स्वगृहमागतं चिरविरोधिनं चेन्निगृह्णीयात्"

जय०—मैवम्, मैवम्, अहं तस्य पितुरसमीपे चिरं युद्धकार्यम-करवम्। तन्मामत्यन्तं सम्मानयत्येषोऽपि—इति निश्चिनोमि। अस्मासु मध्यस्थेषु न प्रतीपमाचरिष्यति सम्राट्।

महा०—[ चिरं चिन्तयित्वा ] महाराज! चिरं यवनैर्युद्धवानस्मि इति स्मरन् मे शत्रुता निश्चितं निग्रहीष्यति मां सम्राड्-इति न जाने कः कथयतीव मम कर्णे, लिखतीव च हृदये।

जय०—शत्रुरपि संहितो मित्रं भवति। ततोऽपि भवान् कुशलिनं त्यक्तवान् कुमारं मायाजिह्मम्, समर्य्यादा यापितवान् कुमारीं

---

प्रत्ययलेशः = मात्रयाऽपि विश्वासः।

प्रतीपम् = विरुद्धम्, शत्रुकृत्यम्।

निग्रहीष्यति = बद्ध्वा कारागारे निवासयति। कथयतीव=श्रावयतीव।

संहितः = सम्मिलितः। कुशलिनम् = अक्षतम्। समर्य्यादाम् =

---

परन्तु यवनों के ऊपर तो मैं जरा भी विश्वास नहीं रखता। यदि चिर-विरोधी होने के कारण वे अपने घर में पहुंचने पर पकड़ लें तो !!

जय०—नहीं नहीं ऐसा नहीं हो सकता। मैंने चिरकाल तक दिल्ली नरेश के पिता के पास युद्ध कार्य किया है और इसलिये दिल्ली सम्राट् भी मेरा बहुत ही सम्मान किया करते हैं—यह मैं निश्चित रूप में जानता हूँ। फिर हमारे मध्यस्थ रहते ऐसा प्रतिकूल काम सम्राट् कथमपि नहीं करेंगे।

महा०—[ बहुत देर तक सोच कर ] महाराज मैंने तो बहुत दिनों तक यवनों से लड़ाई की है। इसलिये सम्राट् मेरी शत्रुता की याद करते हुए मुझे अवश्य ही पकड़ रखेंगे। ऐसी बात कौन सा व्यक्ति मेरे कानों में कह सा रहा है और हृदय में लिख-सा रहा है। इसका पता नहीं लग रहा है।

जय०—मिलने के पश्चात् शत्रु भी मित्र बन जाता है। और भी, आपने जो सकुशल कुमार मुअज्जम को छोड़ दिया है, इज्जत के साथ

रसनारीम्, सपराक्रमं विजितवान् रुद्रमण्डलमहादुर्गम्—इति किं तेन न स्मरिष्यते ?

महा०—आर्य ! ये काशी-मथुरादि-तीर्थस्थानानि निरर्थं भ्रंशयन्ति, मन्दिराणि निपातयन्ति, प्रतिमाश्च चूर्णयन्ति, तेषां न सम्भाव्यते सौजन्य-लेशोऽपि। तत् क्षम्यताम्, युद्धे मर्तुमुपदिशति, न च मेऽन्तरात्माऽङ्गीकरोति दिल्ली-यात्राम्।

जय०—[ क्षण विचिन्त्य ] अथ मन्यताम्—मया लिखितं भवद्स्वीकारं श्रुत्वा पुनर्भवता सह युद्धमारभेत ?

महा०—तद् योत्स्ये !

---

धर्मरत्नपुरस्कृताम्। यापितवान् = प्रापितवान्। सपराक्रमम् = सबलप्रदर्शनम्।

निरर्थम् = निष्प्रयोजनम्। चूर्णयन्ति = पेषयन्ति। ध्वंसयन्तीर्थ्यावत्। उपदिशति = कथयति। अन्तरात्मा = अन्तःकरणम्। तदुक्तम्महाकविना—

"सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः"

---

रोशनआरा को लौटा दिया है और पराक्रमपूर्वक रुद्रमण्डल नाम की विशाल किला को जीत लिया है—इन बातों को क्या वे भूल जायेंगे ?

महा०—आर्य ! जो काशी, मथुरा आदि तीर्थ-स्थान को बिना किसी प्रयोजन के ही बरबाद करने वाले हैं मन्दिरों को व्यर्थ गिरा देने वाले हैं और देवमूर्तियों को चूर-चूर कर देने वाले हैं उनमें सज्जनता की तो गन्ध भी सम्भावित नहीं है। अतः आप क्षमा करें, मेरी अन्तरात्मा मुझे युद्ध में मर जाने की अनुमति दे रही है किन्तु दिल्ली जाने की नहीं।

जय०—[क्षण भर सोच कर] अच्छा तो मैं अब आपके दिल्ली न जाने की बात उन्हें लिखूँगा और उसे जान कर वे आपके साथ पुनः युद्ध करने को तैयार हो जायेंगे तब ?

महा०—तब युद्ध करूँगा।

जय०—एतस्मिन् विषये सत्वरता नोचिता। निरीक्ष्यताम्, ससेनोऽहमेव समीपे निवसामि। यदि भवता सह योद्धुमहमेवाऽऽदिश्ये ?

महा०—[ विचिन्त्य ] महाराज! मम कृपाणः स्वदेशीयानां शोणितं न पिपासति—इति पूर्वमेवोक्तवानस्मि। परं दिल्लीगमने निग्रहमाशङ्कते मे हृदयम्।

जय०—निग्रहो नाऽऽशङ्कनीयः, कुशलेन भवन्तं पुनरत्र परावर्तयितुमहं प्रतिजानामि। मम पुत्रो रामसिंहः स्वसहकारेण भवन्तं सभायां नेष्यति, सत्करिष्यति च। कुमार-मायाजिह्ममपि पत्रं लिखामि। सोऽपि ससम्मानं प्रतियापयिष्यति।

---

सत्वरता = शैघ्र्यम्। ससेनः = सवाहिनीकः। आदिश्ये = समाज्ञप्तः स्याम्। निग्रहम् = बन्धनम्। कुशलेन = क्षेमेण। परावर्तयितुम् = महाराष्ट्रदेश प्रापयितुम्। प्रतिजानामि = प्रतिज्ञा करोमि। स्वसहकारेण = निजसहायकत्वेन। सत्करिष्यति = आदरिष्यते। प्रतियापयिष्यति = प्रत्यावर्त्तयिष्यति।

---

जय०—इस विषय में हठात् निर्णय कर लेना आपके लिये उचित नहीं होगा। देखिये, मैं तो सेनाओं के साथ आपके यहाँ रहता ही हूँ। यदि सम्राट् मुझे ही आपसे लड़ने की आज्ञा दे देंगे तो ?

महा०—[ सोच कर ] महाराज! मेरी तलवार अपने देश के लोगों का खून पीना नहीं चाहती—यह बात तो मैंने पहले ही आपसे कह दी है। परन्तु दिल्ली जाने से तो मेरा मन पकड़ लिये जानेकी आशङ्का करता ही है।

जय०—पकड़ लिये जाने की कोई आशङ्का नहीं है। मैं प्रतिज्ञा करता हूँ कि आप सकुशल दिल्ली से यहाँ लौट आयेंगे। मेरा लड़का रामसिंह अपने साथ आपको सम्राट् की सभा में ले जायेगा और आपका सत्कार भी करेगा। मैं कुमार मुअज्जम को भी एक पत्र लिख दे रहा हूँ। वे भी आपको सम्मान के साथ वहाँ से भेज देंगे।

महा०—श्रुतं श्रीमता गोवधप्रतीकारविषये सम्राट्-समीपे पत्रमेकं प्रेषितमासीत, किन्तु तन्नाङ्गीकृतं तेन। एवमेव पुनर्भवदीय-मन्त्रणा-श्रवणे बधिरीभूय, यदि इतोऽपि स मयि पापमाचरेत् ?

जय०—तर्हि अहमपि स्वदेह-त्यागेन प्रायश्चित्तमाचरिष्यामि।

महा०—शान्तं पापम्, शान्तं पापम्। यथाऽऽज्ञाप्यते तथा करिष्यामि।

जय०—अथाधुना मध्याह्न-क्रिया निर्वर्तनीयाः। सपद्येव च दिल्ली यात्रा विधेया। तद्विषयेऽपरसमये आलपिष्यामः।

ततो महाराष्ट्रपतिः स्वालयमायातः। जयपुरेश्वरश्च स्वशिबिर

---

गोवधप्रतीकारविषये = गोहिंसानिवारणार्थम्। भवदीयायाः, मन्त्रणायाः = विचारणायाः, श्रवणे = श्रोत्रगोचरीकरणे। बधिरीभूय = अदत्तकर्णो भूत्वा। पापम् = निग्रहादिकम्।

प्रायश्चित्तम् = पापशोधनम्।

मध्याह्नक्रियाः = सन्ध्यादिकाः। निर्वर्तनीयाः = समापयितव्याः। अपरसमये = अन्यस्मिन् काले। आलपिष्यामः = सभाषणं करिष्यामः।

स्वालयम् = स्वसदनम्। निरवर्तयत् = समापितवान्। पर्यटनादिना=

---

महा०—मैंने सुना है कि आपने कभी दिल्ली सम्राट् के पास गोहत्या-निवारण के लिये एक पत्र लिखा था, पर उन्होंने आपकी बात नहीं मानी थी। यदि इस समय भी वे पूर्ववत् आपकी सलाह की उपेक्षा करके मेरे साथ अन्याय कर बैठें तब··· ?

जय०—तब मैं भी अपने शरीर को छोड़ कर ही इस पाप का प्रायश्चित्त कर लूँगा।

महा०—राम राम ! इस तरह मत कहिये। लीजिये, अब आप जैसी आज्ञा देंगे उसी के अनुसार मैं काम करूँगा।

जय०—अच्छा, अब पहले तो मध्याह्न-कृत्य सम्पन्न हो जाँय। शीघ्र ही दिल्ली की यात्रा करनी होगी। यात्रा के विषय में फिर बातें करेंगे।

उसके बाद शिवाजी अपने घर लौट आये। उधर जयपुर के महाराज

एव भोजनादि-क्रिया निरवर्तयत्। ततः किञ्चिच्छयनेन किञ्चित् पर्य्यटनादिना च दिनमयापयत्।

अथास्तङ्गते मरीचिमालिनि सर्वतो व्याप्ते महान्धकारे चपलित-चञ्चु-पुटासु प्राचीमवलोकमानासु चकोरीषु शनैरुदगान्निशानाथः।

समयोऽयं शरदन्तस्य, ऋतुरेष हिम, शीतल· समीरः सरति, द्विगुणीकृत वस्त्रं रोचते चिरमरुणा सन्ध्या रात्रीभूता। ईदृशे समये तोरण-दुर्ग-समीपे हनुमन्मन्दिरात् पूर्वतः पुष्पवाटिकायामासन्दीषु उपविष्टास्तिस्रो बालाः परस्परमेवमालपन्ति स्म।

---

भ्रमणादिना। अयापयत् = अक्षपयत्।

चपलितचञ्चुपुटासु = चञ्चलितत्रोटिषु। प्राचीम् = ऐन्द्रीम्। अवलोकमानासु = पश्यन्तीषु। शशिन उदयमानस्य निरीक्षणार्थम्। उदगात् = ऊर्ध्वमायात्, उदित इति यावत्।

शरदः अन्तः, तस्य। हिमः = हेमन्त। शीतलः = हिममिश्रः। चिरमरुणा = अतिलोहिता। रात्रीभूता = रात्रिताङ्गता। सन्ध्याकाल एव रात्रिमासनमिति यावत्। आसन्दीषु = वेत्रासनिकासु।

---

ने भी अपने शिविर में ही भोजन-पान आदि कर लिये। तत्पश्चात् कुछ देर सो कर और कुछ देर घूम-घाम कर उन्होंने वह दिन बिताया।

उसके बाद सूर्यास्त हो जाने के कारण जब सर्वत्र घना अन्धकरा छा जाने से चञ्चल चोंचवाली चकोरी पूरब दिशा की ओर देख रही थी उसी समय चन्द्रमा उदित हो उठा।

शरत् ऋतु का अन्त हो चुका था, हेमन्त ऋतु आ चुकी थी, ठण्ढी हवा बह रही थी, दुशाले लोगों को प्रिय लग रहे थे और चिरकाल तक लालिमा से सम्पन्न सन्ध्या रात्रि के रूप मे परिवर्त्तित हो चुकी थी। उस समय सिंहद्वार के पास हनूमान् जी के मन्दिर से पूर्व दिशा में बनी फुलवारी मे कुर्सियों पर बैठी हुई तीन बालिकाएँ आपस में निम्नलिखित वार्त्तालाप कर रही थीं—

प्रथमा—सौवर्णि ! समाश्वसिहि समाश्वसिहि, कदाचिदलीको भवेदेष वृत्तान्तः। चारुहासिनि ! सान्त्वय सान्त्वय सहचरीम्।

चारुहासिनी-प्रियसखि ! सत्यं वदति विलासिनी। यावन्निश्चित्य न ज्ञायते; यावन्न प्रामाणिकैर्न कथ्यते; तावन्मुधा शोकेनात्मनो म्लपनं व्यर्थम्।

सौवर्णी—[ अञ्चलेन बाष्पमपहृत्य ] विलासिनि ! चारुहासिनि ! गतदिवसमारभ्यैव विमनायमानं मे चेतः। रात्रौ निद्रामपि न लब्धवती, किञ्चिल्लग्ननिमेषा च भयङ्करान् स्वप्नान् दृष्टवत्यस्मि, मध्याह्ने च भोजनशालायाः पृष्ठतो गच्छतोर्न जाने कयोरालापमिमं भयानकमश्रौषम्। सत्यतां चैतस्य विह्वलीभवद् हृदयमेव मे प्रमाणी-

---

अलीकः = असत्यः। 'अलीकं त्वप्रियेऽनृते' इत्यमरः।

प्रामाणिकैः = सत्यवाग्भिः। मुधा = वृथा। व्यर्थम् = अनावश्यकम्

विमनायमानम् = उन्मनायमानम्, खिन्नमिति यावत्। किञ्चिल्लग्न-निमेषा = ईषन्मुद्रितनयना। भयङ्करान् = भीतिजनकान्। भोजनशालायाः = पाकशालायाः। विह्वलीभवत् = खेदमिश्रमौत्सुक्यमाभजत्।

---

पहली बालिका—अरी सौवर्णी ! धीरज बान्धो, धीरज बान्धो। शायद यह बात झूठी हो ! चारुहासिनी ! अपनी सखी को सान्त्वना दो।

चारु०—प्यारी सखी ! विलासिनी का कहना ठीक है। जबतक इस बात के विषय में ठीक ठीक जानकारी न मिल जाय और जबतक प्रामाणिक लोग न कहें तबतक इस विषय में निराधार शोक करके अपने मन को खिन्न बनाना व्यर्थ है।

सौवर्णी—[ आँचल से आँसू पोछकर ] विलासिनी ! चारुहासिनी ! कल से ही मेरा मन खिन्न हो गया है। रात में मुझे नींद भी न आई, जब किसी तरह झपकी आई तो मैंने बहुत ही भयङ्कर स्वप्न देखे। पता नहीं, दोपहर की वेला में भोजनशाला के पीछे से गुजरने वाले किन दो व्यक्तियों की बातचीत मैंने सुनी ! किन्तु मेरा यह व्याकुल हृदय उस बातचीत की

करोति। भगिन्यौ! क्षत्रियकन्याऽहम्, दृढा मे प्रतिज्ञा, तमेव वरयिष्यामि ब्रह्मचर्येणैव वा शरीरहतकं शोषयिष्यामि।

चारु०-प्रियसखि! सिद्ध्यन्तु ते मनोरथा। तमेव प्राप्स्यसि, तमेव वरयिष्यसि। अञ्जनीसूनुस्साधयतु ते कार्यम्।

सौ०-[निःश्वस्य] आ! किं तादृशा आकृतिविशेषा अपि विद्रुह्यन्ति? कथमेष मिथ्या-कलङ्कः स्थान लब्धवान्?

विला०-प्रिये! यदि मिथ्यैष कलङ्कः, तदचिरादेव स्वय महाराष्ट्रराजः पश्चात्तापेऽतप्यमान पुनस्तमन्विश्य, अभ्यर्हिततरे पदे

---

प्रमाणीकरोति = निश्चाययति। वरयिष्यामि = विवाहयिष्यामि। शरीरहतकम् = व्यर्थीभूत देहम्।

अञ्जनीसूनुः = वायुतनयो हनूमान्।

आकृतिविशेषाः = विशिष्टस्वरूपाः। स्थानम् = पदम्।

अचिरात् = शीघ्रम्। तप्यमानः = क्लिश्यमानः। अभ्यर्हिततरे=अतिपूजनीये। नियोक्ष्यति = नियोजयिष्यति।

---

सत्यता को प्रामाणित कर रहा है। बहनो! मैं क्षत्रिय की लड़की हूँ। मेरी तो यही अटल प्रतिज्ञा है कि मैं उसी व्यक्ति से विवाह करूँगी, अन्यथा विवाह किए बिना ही इस निरर्थक शरीर को क्षीण कर डालूँगी (शरीर का अन्त कर डालूँगी)।

चारु०—प्यारी सखी! तुम्हारी कामनाएँ पूरी हों। तुम्हें वह व्यक्ति मिलेगा ही और तुम उसी के साथ विवाह भी करोगी। अञ्जनीपुत्र हनूमान् जी तुम्हारे कार्य को सम्पन्न करें।

सौव०—[लम्बी साँसें भरकर] अहा! क्या उस तरह के मनोहर आकार भी विद्रोही हो सकते हैं? यह झूठा कलङ्क कैसे फैल गया?

विला०—प्यारी सखी! यदि यह कलङ्क झूठा ही है तब तो पश्चात्ताप से व्याकुल महाराष्ट्रराज ही स्वयम् शीघ्रता से उसे ढूँढकर किसी अच्छे पद

नियोक्ष्यति । दैवघटनायामलं शोकेन ।

सौ०—शोको हि कलङ्क-विषये ! यद्यहं युद्धे तस्य क्षत्रियधर्मेण प्राणत्यागमप्यश्रोष्यम् ; तत् सुखेन तन्नाम संस्मृत्य स्वयमपि प्राणान् व्यसर्क्ष्यम् । परं कलङ्को न सह्यते क्षत्रियैः ।

तावद् दूरतः—"अत्तिके ! अत्तिके !" इति समश्रावि बालस्येव सम्बोधनम् । ततः सपदि समुत्थाय चारुहासिनी स्वरोऽभिमुखीभूय "गोपाल ! एते समागच्छावः"—इत्युच्चैरुच्चार्य सौवर्णीं बहुशः सान्त्वयित्वा, "भ्रातृजाये ! उत्तिष्ठ, यावः"—इति विलासिनीमपि सह नीत्वा मन्दिराभिमुखं प्रययौ ।

दैवघटनायाम् = अदृष्टव्यापारे ।

क्षत्रियधर्मेण = "युद्धे चाप्यपलायनम्" इत्येवंरूपेण । व्यसर्क्ष्यम् = अत्यक्ष्यम् ।

समश्रावि = आकर्णितम् । यावः = गच्छावः ।

पर उसकी नियुक्ति कर डालेंगे । इस भाग्यचक्र के लिये शोक करना व्यर्थ है ।

सौव०—भाग्यचक्र के लिये नहीं, शोक तो झूठमूठ के कलङ्क के लिये हो रहा है । यदि मैं यह भी सुन लूँगी कि उन्होंने युद्ध में अपने क्षात्रधर्म का पालन करते ही अपने प्राण छोड़ दिये तो मैं प्रसन्नतापूर्वक उनके नाम का स्मरण करती हुई अपने प्राण को भी छोड़ दूंगी । परन्तु क्षत्रियों के लिये कलङ्क असह्य होता है ।

इतने में ही दूर से "बहन ! बहन !" यह आवाज, किसी बालक के द्वारा किये गये सम्बोधन की तरह, सुनाई पड़ी । सुनते ही चारुहासिनी झट से उठ गई और जिस तरफ से आवाज सुनाई पड़ी थी उस तरफ मुँह फेर कर—"गोपाल ! बस, अभी आई"—इतना उत्तर तारस्वर से देती हुई सौवर्णी को उसने सान्त्वना दी । बाद में "अरी भाभी ! उठो, अब हम लोग चलें" इतना विलासिनी से कहकर उसके साथ ही मन्दिर की ओर चल पड़ी ।

सौवर्णा तु व्यामूढेवोत्थाय क्षुपात् क्षुपं कुटात् कुटं प्रति पर्य्यटन्ती कदली-दल-खण्डमाच्छिद्य, तेनैवाऽऽत्मानं वीजयन्ती, आत्मानमपि विस्मरन्ती, पूर्वतो बहुदूरं निर्गता तडाग पर्यन्तमायाता विकचानां भ्रमद् भ्रमर-झङ्कृतानां कैरवाणां शोभामवलोकयन्ती, सोपानैरवतर्तुमारब्धवती च अकस्माच्छुश्राव निःश्रेणि प्रान्तर्थ-शिला वेदिकास्थस्य कस्यापि "उल्लङ्घ्य सिन्धोः सलिलम्" इति हनूम-

व्यामूढेव = विक्षिप्तेव । क्षुपात् = ह्रस्वशाखिनः । "ह्रस्वशाखाशिफः क्षुपः" इत्यमरः । कुटात् = वृक्षात् । "अनोकहः कुटः शालः" इत्यमरः । पर्य्यटन्ती = भ्रमन्ती । कदलीदलखण्डम् = रम्भापत्रभागम् । वीजयन्ती = व्यजनयन्ती । भ्रमद्भिः = चलद्भिः, भ्रमरैः = द्विरेफैः झङ्कृतानाम् = सशब्दानाम् । कैरवाणाम् = अम्भोजानाम् । सोपानैः = निःश्रेणीभिः । निःश्रेणिप्रान्तरथायाम् = अधिरोहिणीकोणस्थायाम्, शिलावेदिकायाम् = प्रस्तरवितर्दिकायाम्, स्थस्य = स्थितः । सलिलमिति—

... .. सलीलम्
यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्काम्
नमामि तं प्राञ्जलिराञ्जनेयम् ॥

इधर सौवर्णी भी विक्षिप्त की तरह एक झाड़ी से दूसरी झाड़ी की ओर, एक वृक्ष से दूसरे वृक्ष की ओर चक्कर लगाती हुई, केले के पत्ते को तोड़कर उसे पंखे की तरह झलती हुई पूर्व दिशा की ओर काफी दूर तक चलते चलते जब तालाब के पास जा पहुँची और वहाँ भिनभिनाते चञ्चल भौंरों से आक्रान्त विकसित कमल कुल के सौन्दर्य को देखती हुई सीढ़ियों के माध्यम से नीचे उतरने को ही थी कि एकाएक उसने सुना कि सीढ़ियों के पास के पत्थर के चबूतरे पर वर्तमान कोई व्यक्ति "उल्लङ्घ्य सिन्धोः सलिलम्" (समुद्र के दुस्तर जल का उल्लङ्घन करके) इत्यादि हनूमान्‌जी के स्तोत्र

सौ०—[ चकितेव ] भगवन् ! धन्यं भवतस्तपोबलम् ! न किमप्य ज्ञातं स्वामिनः । परतः कथ्यताम् ।

स्वा०—स तु प्रभुणा विद्रोहीत्यवहेलितः !

सौ०—अपि सत्यमेतत् ? हा कष्टम् !

स्वा०—[ पुनर्विचिन्त्य ] तथ्योऽयं वृत्तान्तः ।

सौ०—ततः ?

स्वा० ततः स नाहमपराधीति प्रभुमसकृत्तदुक्त्वा प्रणम्य गृहादिकमखिलं विसृज्य क्वापि निर्गतः ।

सौ०—धिक् ! नाहं तादृशमुदारस्वभावं कुलीनं युवानं विद्रोहीति विश्वसिमि । सूर्यो यदि प्रत्यगुदियात्, गगनतलं वा प्रफुल्लकमल-

अवहेलित = तिरस्कृतः ।

तथ्यः = सत्यः ।

प्रत्यक् = पश्चिमायाम् । अव्ययमिदम् । उदियात् = उदयं प्राप्नुयात् । प्रफुल्लकमलमण्डलमण्डितम् = विकसितपद्मनिचयनिचितम् । तदीयस्य,

सौव०—[ चकित-सी होकर ] भगवन् ! आपका तपोबल धन्य है । आपके लिए तो कुछ भी अज्ञात नहीं हो सकता । कृपया इसके आगे की बातें भी बतलायें ।

स्वामी—महाराज ने विद्रोही समझ कर उस क्षत्रिय युवक का अपमान किया ।

सौव०—क्या यह सत्य है ? हाय ! यह तो बहुत ही दुःखद बात है ।

स्वामी—[ फिर कुछ सोचकर ] हाँ, यह सत्य ही है ।

सौव०—अच्छा तो उसके बाद ... ?

स्वामी—इसके बाद वह युवक "मैं अपराधी नहीं हूँ" यह बात बार-बार महाराज से कहकर उन्हें प्रणाम किया और पीछे अपने घर बार को छोड़कर कहीं निकल गया ।

सौव०—हाय ! धिक्कार है ! मुझे तो विश्वास नहीं होता कि उस तरह का उदार स्वभाव वाला कुलीन युवक भी विद्रोही हो सकता है । भले ही

मण्डल मण्डितमवलोक्येत, ततोऽपि न भवेन्मे विश्वासस्तदीयकपटस्य।

स्वा०—[ मुखमन्यत कृत्वा, मन्द मन्दम् ] भाग्यमिद तस्य यद् भवत्येव दृढ = धार्मिक प्रत्येषि।

सौ०—स्वामिन्! भक्तिबलेन परोक्षमपि प्रत्यक्षं भवतः। कथयतु भवानेव किं सत्य वीरोऽसौ प्रभु द्रुग्ध व्यरुणत्?

स्वा०—तस्य वंशे प्रभुद्रोही कोऽपि नाभूत्, सोऽपि विनैव दोष मात्सर्य्य-पूरितेनेर्ष्या परवशेन पिशुनेन निन्दितः, विनैव विचार प्रभुणा कोपविषयीकृतः।

कपटस्य = प्रवञ्चनस्य।

प्रत्येषि = विश्वसिषि।

भक्तिबलेन = देवसेवाबलेन। परोक्षमपि = इन्द्रियागोचरमपि। प्रत्यक्षम् = साक्षात्। व्यरुणत् = व्यद्रुह्यत्।

मात्सर्यपूरितेन = परोत्कर्षासहिष्णुत्वभरितेन। ईर्ष्यापरवशेन = विद्वेषपरतन्त्रेण। पिशुनेन = सूचकेन खलेन वा।

भगवान् सूर्य भी पश्चिम दिशा में उदित होने लग जाँय और शून्य आकाश-मण्डल भी विकसित कमल कुल से मण्डित दीखने लग जाँय परन्तु मुझे इस बात में विश्वास नहीं हो सकता है कि उस युवक ने राजा के साथ छल किया होगा।

स्वामी—[ मुँह फेरकर धीरे धीरे ] यह तो उस युवक का सौभाग्य है कि आप भी उसे इतना कट्टर धार्मिक मान रही हैं।

सौव०—स्वामी जी! तपस्या के प्रभाव से परोक्ष भी आपके लिए प्रत्यक्ष है। आप ही बतलाएँ कि उस वीर ने क्या वस्तुत राजद्रोह किया था?

स्वामी—उसकी वंशपरम्परा मे आजतक कोई भी राजद्रोही व्यक्ति नहीं हुआ है। वह भी निरपराध था किन्तु दूसरों की उन्नति को देखने में असमर्थ विद्वेष-पूर्ण किसी चुगलखोर ने महाराज के समक्ष उसकी झूठी शिकायत कर दी और महाराज भी बिना सोचे विचारे ही उसपर बिगड़ गये।

बद्धपरिकरः समाकुञ्चितजटः स्वतुम्बीपात्रादेकां छुरिकामादाय, हस्ते धृत्वा, किञ्चिदग्रत उपसृत्य. योद्धुं सज्जः समतिष्ठत। स त्वागत्य स्वामिद्वितीयां सौवर्णीमाकलय्य, कोपस्फुरिताधर उवाच-"कुलटे! रघुवीरं चुम्बसि, भिक्षुकांश्चेतादृशान रहसि भाषसे। न च मया बहुशः प्रार्थ्यमानाऽपि पूर्णतया वीक्षसे। तदद्य त्वां बलादश्वस्य पृष्ठे बद्ध्वा नेष्यामि"।

स्वामी—कस्त्वं रे! सतीं कुमारीं कुलटां वदसि! कस्य सामर्थ्यमस्मिन् हनूमत उद्यानप्रान्ते एवं बलात्कारं मनसाऽपि चिन्तयितुम्?

---

सहायः, यस्याः सा, पक्षे वस्तुतश्च प्रकृते स्वामी=पतिरेव द्वितीयो यस्याः सा। कोपस्फुरिताधरः=क्रोधचञ्चलोष्ठः। भिक्षुकान्=याचकान्। रहसि=एकान्ते।

सतीम्=सच्चरिताम्। कुमारीम्=अविवाहिताम्। कुलटाम्=व्यभिचारिणीम्। सामर्थ्यम्=शक्तिः। उद्यानप्रान्ते=वाटिकैकदेशे। बलात्कारम्=साहसकर्म।

---

उतरते देखते ही स्वामी जी ने भी कमर कसकर अपनी जटाओं को बाँधकर अपने तुम्बे से एक छूरा निकाला और थोड़ा-सा आगे बढ़कर उसके साथ युद्ध करने के लिये तैयार हो गये। उधर उस युवक ने आते ही जब देखा कि सौवर्णी के साथ एक ब्रह्मचारी भी है तो उसका अधरोष्ठ क्रोध से काँपने लग गया और फिर सौवर्णी से उसने कहा—"अरी कुलटा! एक ओर तो तूँ रघुवीर को चूमती है और दूसरी ओर इस तरह के कपटी भिक्षुकों से भी एकान्त में बातें किया करती है। मैं इतनी प्रार्थना तेरी करता पर मेरी ओर तो तू पूरी-पूरी दृष्टि भी नहीं डालती। ये लो, आज मैं तुझे बरबश बाँधकर घोड़े के पीठ पर अपने साथ ले चल रहा हूँ"।

स्वामी—अरे! तुम कौन हो? इस सती कन्या को कुलटा कह रहे हो? हनूमान् जी की इस वाटिका में किसी अबला के साथ बलात्कार करने के लिये सोचने की भी हिम्मत किसकी हो सकती है?

ततः स आह—भिक्षुक ! त्वमपि च्छुरिकां वहसि। (विहस्य) त्वयि भिक्षापात्रं शोभते, न तु शस्त्रम्।

स्वा०—मूढ ! ब्रह्मचर्य-व्रत-रक्षायै भिक्षापात्रं वहामः, किन्तु क्रूरस्य तव हत्यायै शस्त्रमपि धारयामः।

सः-[ निश्चिन्त स्तब्धीभूय ] किं कथयसि ? क्रूरसिंहं परिचितवानसि ? ततोऽपि किम् ? तवोपवीतं पश्यन् ब्रह्महत्याया बिभेमि।

स्वा०—नास्मि ब्राह्मणः। अहं क्षत्रिय ब्रह्मचारी। जाने त्वाम्, त्वमेव क्रूरसिंहोऽसि ! त्वमेव रघुवीर-निर्वासन-पिशुनोऽसि, त्वमेव च कुलकन्या बलात्कार-पातक-पतयालुरसि। पश्यत्वेपाऽपि

ब्रह्मचर्यव्रतस्य, रक्षायै = पालनाय। भिक्षापात्रम् = याच्ञाभाजनम्। क्रूरस्य = क्रूरनाम्नः, कठोरकृत्यनिरतस्य च हत्यायै = मारणाय।

स्तब्धीभूय = स्थगितीभूय नामश्रवणतः। परिचितवान् = विज्ञातवान्।

रघुवीरस्य निर्यासने = निष्कासने। पिशुनः = "चुगुलखोर" इति हिन्दी। कुलकन्यायाः = कुलीनबालिकायाः, बलात्काररूपे पातके = अघे,

उस पर उस युवक ने कहा—अरे भिक्षुक ! तुम भी छूरा रखते ! [ हँसकर ] यह भिक्षापात्र तुम्हें शोभा देता, यह छूरा नहीं।

स्वामी—मूर्ख ! अपने ब्रह्मचर्य व्रत के निर्वाह के लिये मैं भिक्षापात्र भी रखता हूं और तुम जैसे 'क्रूर' की हत्या के लिये यह छूरा भी।

वह युवक—[ कुछ स्तब्ध-सा होकर ] क्या कह रहे हो ? तुम 'क्रूर सिंह' को पहचानते हो क्या ? और यदि पहचानते हो हो तो इससे क्या होनेवाला है ? केवल तुम्हारे यज्ञोपवीत को देखकर मुझे ब्रह्महत्या का भय हो रहा है।

स्वामी—नहीं नहीं, मैं ब्राह्मण नहीं हूं। मैं तो क्षत्रिय-कुल का एक ब्रह्मचारी हूं। मैं तुम्हें अच्छी तरह जानता हूँ, तू ही क्रूरसिंह है ना ? रघुवीर को निकलवाने वाला चुगलखोर भी तू ही है, इस कुलीन कन्या के साथ बलात्कार जैसे महापाप से अपने को नीचे गिराने वाला भी तू ही है। लो,

क्षत्रिय-कुमारी रघुवीर-प्रत्यर्थिनः प्राणदण्डम् ।

तत सक्ष्वेडमुभौ दत्तान् वामाश्च मार्गाश्चरन्तौ विकोश च्छुरिका-हस्तौ परस्पर जिघांसया समवर्तिपाताम् । तावदकस्मात् क्रूरसिंहः स्वामिनो वाम भुज-मूल लक्ष्यीकृत्य छुरिकां प्रहिणवान । स्वामी तु बाहु-स्पृष्टाग्रच्छुरिकमेव हस्त वामहस्तेन दृढ गृहीत्वा, दक्ष-हस्तेन तस्य वक्षसि च्छुरिकया दृढ प्राहरत्, अपातयच्च । स तु पतितमात्रः समुवाच—"रे ! रघुवारस्यैव छुरिकया निहतोऽस्मि" स्वाम्युवाच—"मूढ ! न जानासि रघुवीर एव राघवः ! माञ्च राघवाचार्य इति वदन्ति जनाः । व्यर्थमेव रघुवीर कलङ्कितमा-नसि-इति भुङ्क्ष्व खलता लताया॰ फलम् ।" क्रूरस्तु तत्क्षणादेवोर्ध्व-

पतयालु = पतनशील । रघुवीरस्य, प्रत्यर्थिनः = शत्रो ।

सक्ष्वेडम्=ससिंहनादम् । चरन्तौ=भ्रमन्तौ । विकोशच्छुरिकाहस्तौ= नग्नासिधेनुकाकरौ । जिघांसया = मारणेच्छया । समवर्तिपाताम्= समस्थिपाताम् । बाहौ स्पृष्टा=ससक्ता, अग्रच्छुरिका=असिधेनुकाग्र यस्मिन्ने वम्भूतम् । वक्षसि = उरसि । प्राहरत्=अताडयत् । अपातयत्=अनीनयत् । निहत॰ = ताडित । खलताल्लताया = दुष्टताव्रतते । ऊर्ध्वश्वासप्रश्वासयाः=

आज यह क्षत्रिय-कुमारी भी रघुवीर के शत्रु को दिये जानेवाले प्राणदण्ड को अपनी आँखों देख ले ।

उसके बाद सिंहनाद के साथ ताल ठोंकते हुए म्यान से बाहर निकाले गये अपने अपने छुरे को हाथ में लेकर एक दूसरे को मारने की इच्छा से दोनों व्यक्ति आमने सामने खडे हो गये । उस झट से क्रूरसिंह ने ब्रह्मचारी जी की बायीं भुजा के मूल को लक्ष्य करके छुरा चलाया । इधर स्वामीजी ने भी—बाँयें हाथ से उसके छुरा लिये हाथ को कस के पकड कर दाँये हाथ से क्रूरसिंह के हृदय पर अपने छूरे से ऐसा भयङ्कर प्रहार किया जिससे क्रूरसिंह जमीन पर गिर गया। गिरते ही वह चिल्ला उठा—"अरे ! मैं तो समझ रहा हूँ कि मुझे रघुवीर का ही छूरा लगा है !" स्वामीजी ने कहा—"अरे मूर्ख ! क्या तुम नहीं जानते कि रघुवीर ही 'राघव' है ! मुझे ही लोग 'राघवाचार्य' कहा करते हैं । ये लो,

श्वास-प्रश्वास-पराधीनः समुत्तम्भितनयनः प्रस्खलद्रुधिर-धारा-स्नपित-सोपानः "हा रघुवीर ! हा राघव ! कृतस्य फलमासादितवानस्मि । निर्दये सौवर्णि ! त्वदर्थं नङ्क्ष्यामि" —इति घुरघुरायितेन कण्ठेनाप्येतत् मुहुराम्रेडयन् प्राणानत्याक्षीत् ।

राघवाचार्यस्वामी च क्रूर-कवोष्ण-रक्ताक्तां छुरिकां दक्ष-कराङ्गुलि-पृष्ठं करभं मणिबन्धं कूर्परं च तडागजलेन प्रक्षाल्य, छुरिकां कोशेनाऽऽच्छाद्य, तुम्बी-पात्रे निधाय, जटाजूटं पुनः प्रसार्य, उत्तरीयं स्कन्धे सन्धार्य, मृगचर्मासनमाकुञ्च्य कक्षे धृत्वा,

---

मरणकालिकश्वासप्रश्वासयोः, पराधीनः = वशगः । समुत्तम्भितनयनः = समुत्तानमाननेत्रः । प्रस्खलन्त्या = पतन्त्या, रुधिरधारया = लोहितप्रवाहेण, स्नपितानि=निर्णिक्तानि, सोपानानि = निःश्रेणयो येन सः । त्वदर्थम्=त्वत्कृते । नंक्ष्यामि = म्रिये । प्राणान् = असून् ।

क्रूरस्य कवोष्णेन रक्तेन, अक्ताम् आर्द्रां छुरिकाम् । करभम्=कराद्बहिः । "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः । मणिबन्धम्=हस्ताग्निकरधनस्थितस्थानम् । कूर्परम् = कफोणिम् । "केहुनी" इति हिन्दी । तुम्बीपात्रे = अलाबुभाजने । उत्तरीयम् = उत्तरासङ्गम् । आकुञ्च्य =

---

तुमने जो रघुवीर के ऊपर मिथ्या आरोप लगाया था उसके बदले अपनी दुष्टतास्वरूप लता के विषम फल का उपभोग करो ।" छूरा लगते ही क्रूरसिंह ऊर्ध्वश्वास का शिकार बन गया, उसकी आँखों में चक्कर आ गया, उसके हृदय से बहती हुई खून की धारा से सीढ़ियाँ धुल गईं और खुर्राटे भरे कण्ठ से—"हा रघुवीर ! हा राघव ! मुझे अपने कुकृत्य का फल मिल गया । दयाशून्य सौवर्णी ! तेरे ही लिये मैं मर रहा हूँ"—यह कहते-कहते उसने प्राण छोड़ दिये ।

उसके पश्चात् राघव स्वामी ने भी क्रूरसिंह के गरम खून से भीगे छूरे, अपने दाँये हाथ के अङ्गुलिपृष्ठ, करभ ( कलाई से लेकर नाखून तक का हिस्सा ), कलाई तथा केहुनी को उस तालाब के पानी से धोकर—छुरे को कोष ( म्यान ) में बन्द करके अपने तुम्बे में रख लिया और अपने

र्णीमुवाच-सुन्दरि ! मा स्म भैषीः। उत्तिष्ठ त्वदालय-पर्यन्तं
मनुसरिष्यामि। कुशलेन तातभवन-पर्यन्तं यापयित्वा स्वच्छन्दं
चरिष्यामि।

सौवर्णी तु दृष्ट्वेमां रोमहर्षिणीं घटनाम्, प्रत्यक्षीकृत्य च
ामिनो विलक्षणं वीर्यम्, कोऽयम्? कुतोऽयम्? इति विभावयन्ती,
ूष्णीका तेन सह स्वावासाभिमुखमुपससार। स्वालयस्य निकटे
न विसृज्यमाना च प्रणम्य "स्वामिन्! पुनः कदा दर्शनं भवेद्-
ाधारण-बन्धोः, जीवन-दीक्षा-गुरोः श्रीचरणस्य?" इति पृष्टवती।
स्वच्छन्दा वयम्, यदा कदैव पुनरायास्यामः" इत्युक्तीर्णा, "नैषा

---

ह्लोप्य। कक्षे=बाहुमूले। अनुसरिष्यामि=अनुव्रजिष्यामि।

रोमहर्षिणीम्=पुलककारिणीम्, भीषणामिति यावत्। विभावयन्ती=
वेवेचयन्ती। तूष्णीका=वाग्यता। स्वावासाभिमुखम्=स्वनिवाससमु-
खम्। असाधारणबन्धोः=निष्कारणमित्रस्य। जीवनदीक्षा-गुरोः=

---

मृगचर्म को लिपट कर कांख में दबाते हुये सौवर्णी से कहा—"सुन्दरी
सौवर्णी! डरो मत। चलो तेरे घर तक मैं भी तेरे साथ चलूँगा और
कुशलपूर्वक तुझे तेरे पिता के घर तक पहुँचाने के बाद फिर स्वच्छन्दता-
पूर्वक वहाँ से चल दूँगा।"

वह सौवर्णी उस रोमाञ्चकारी घटना को तथा स्वामीजी की अद्भुत
वीरता को देखकर उनके विषय में—"ये कौन हैं? कहाँ से आये हैं?"—
इस प्रकार तर्क वितर्क करती हुई चुपचाप स्वामीजी के साथ अपने घर की
ओर चल पड़ी। जब घर के पास ले जाकर स्वामीजी उसे छोड़ने लगे तब
उसने उन्हें प्रणाम करके पूछा—"स्वामीजी! श्रीमान् जैसे असाधारण
बन्धु और जीवनदीक्षा के गुरु के दर्शन फिर कब होंगे?" इस पर
स्वामीजी ने उत्तर दिया—"हम लोग स्वच्छन्द हैं। कभी फिर आ
जायेंगे।" उसके बाद बारबार इस दासी को आप भूलेंगे नहीं, बराबर

श्वास प्रश्वास-पराधीन समुत्तम्भितनय-
स्नपित-सोपानः 'हा रघुवीर ! हा राघव
यानस्मि । निर्दये तीर्याणि ! त्वदर्थं नश्यथा
कण्ठेनास्पष्ट मुहुराक्रन्दन् प्राणानत्याक्षीत् ।

राघवाचार्यस्वामी च क्रूर-कवोष्ण-
कराङ्गुलि पृष्ठ करभ मणिबन्ध कूर्पर
छुरिका कोशेनाऽऽच्छाद्य, तुम्बी-पात्रे
प्रसार्य उत्तरीय स्कन्धे सन्धार्य, मृगवत्

---

मरएकालिकश्वासप्रश्वासयोः, पराधीन.=व
समुत्तनमानेन । प्रस्खलन्त्या=प्र
प्रवाहेण स्नपितानि-निर्णिक्तानि, सा।
त्वदर्थम्-त्वत्कृते । नश्यामि=म्रिये ।

क्रूरम् कवोष्णन रक्तन, अत्ताम् भ
"मणिबन्धादाकनिष्ठं करस्य करभो बहि
निकरस्थनस्थितस्य । कूर्परम्=कफो
तुम्बीपात्र=तुम्बाभाजने । उत्तरीयम्

---

तुमने जो रघुवीर के प्यार भिय्या आशा
दुष्टतास्वरूप स्त्री के विघन पत्र का उप
मर्श्वस्वाश का शिकार बन गया, उसक
हृदय से बहता हुई खून की धारा से स
कण्ठ से—"हा रघुवार ! हा राघव !
गया। दयाशून्य सौवर्णी ! तेरे ही लिय
प्राण छोड़ दिये।

पश्चात् राघव स्वामी ने
हाथ के अङ्गुलिपृष्ठ, कर
कलाई तथा केहुनी को
(म्यान) में बन्द करके

एकदा तु रात्रौ भटवेषेण स्वप्रजा अवलोकयितुं पर्य्यटन् महाराष्ट्रराजोऽकस्मात् द्रुम–निचय–च्छायातो द्रुतमागच्छन्तं कञ्चन महात्मानमिवादर्शत्। स तु पीत–रेणु–रूषित–सर्वाङ्गः, रामनामाङ्कितोत्तरीयः, "जय जयेति" वदन् प्रणमन्त गुप्ताकारमेन शनैरुवाच–

"वीर! राजपुत्र-देशीया राजानोऽप्येते कन्यादानैर्यवनैरात्मानं सम्बध्नन्तोऽर्द्धयवना एव, ये स्वतन्त्रानार्यदेशान् विजित्य यवन-हस्ते समर्पयन्तो वीरम्मन्यतया श्मश्रु परिमृशन्ति। इयं धन्यता वा जघन्यता वा प्रमाणमत्र श्रीमद्हृदयमेव। कोऽयमा-

---

भटवेषेण = राजपुरुषनेपथ्येन। द्रुमनिचयच्छायातः = वृक्षप्रकरच्छायायाः। महात्मानम् = साधुम्। पीतरेणुरूषितसर्वाङ्गः = रामरजस्फुरितसकलशरीरः। गुप्ताकारम् = गूढाकृतिम्।

कन्यादानैः = बालिकार्पणैः। यवनैः, सहयोगे तृतीया। आत्मानम् = स्वम्। सम्बध्नन्तः = सम्मेलयन्तः। अर्धयवनाः = नेमम्लेच्छाः। स्वतन्त्रान् = स्वाधीनस्वदेशीयनरपतिरक्षितान्। वीरम्मन्यतया = भटम्मन्यतया। श्मश्रु = मुखलोम। परिमृशन्ति = स्पृशन्ति। "मूछों पर ताव देते हैं" इति भाषायाम्। धन्यता = श्रेष्ठता। जघन्यता = नीचता। सकल-

---

एक रात अपनी प्रजा की स्थिति को जानने के उद्देश्य से वीरवेष में परिभ्रमण करते हुये महाराष्ट्रराज ने वृक्षों की छाया से एक महात्मा जैसे व्यक्ति को शीघ्रता से अपनी ओर आते हुये देखा। सम्पूर्ण शरीर में रामरज लगाये हुये, राम नाम से अङ्कित द्वितीय वस्त्रवाले उस महात्मा ने गुप्तवेष में घूमनेवाले महाराष्ट्रराज को जयध्वनिपूर्वक प्रणाम करके धीरे से कहा—

"वीर! स्वतन्त्र हिन्दूराज्यों को जीतकर यवनों के हाथों में समर्पित करने में भी अपनी वीरता का अभिमान करते हुये मूँछ पर ताव देनेवाले और अपनी-अपनी कन्या के अर्पण द्वारा यवनों के साथ सम्बन्ध स्थापित करनेवाले ये राजपुताने के राजा लोग भी वस्तुतः अर्ध यवन ही हैं। इनकी यह महत्ता है या नीचता—इसके निर्णय के लिये आपका हृदय ही प्रमाण

सीन्मानसिंहस्य मानः; यद् यवनार्थमुदयपुराधीश्वरं सकल-भारताभिजन-मान्यं मेदःपाट-परिवृढमत्यन्तमचिक्लिशत् ? तस्यैवाद्ध्वन्येषोऽद्धवन्यो ढुण्ढारवन्यवन्यध्यक्षो जयसिंहः। मा श्रीमानस्य मायामयीमुररीकरोतु मन्त्रणाम्। यत्येत चेद्, महाराष्ट्रैः सह विजयपुरेश्वरः गोलकुण्डेश्वरः उदयपुरेश्वरः, योधपुरेश्वरः, अपरे च बहवो वीरवरा महाराजा दिल्ली-दलन-पक्षमवलम्बेरन्। तदलं वृद्धेन जयसिंहेन ज्यौतिष-पण्डितेन! अथवैष जर्जरो निर्जरसां राजा,

भारताभिजनमान्यम् = समस्तहैन्दवनिवासिमाननीयम्। मेदःपाटपरिवृढम्=मेवाराधीश्वरम्। "मेवाड" इत्यधुना प्रसिद्धः शब्दो 'मेदःपाट' शब्दापभ्रंश इति व्यासादीनामभिप्रायः। तर्करत्नमहोदयास्तु स्वीयेऽमरमङ्गले संयुक्तत्विक मेवारशब्दमेव तद्वाचकत्वेन स्थिरयन्ति। उभयोरपि शक्तत्वं साधुत्वञ्चेति विवेचनापटवः। अचिक्लिशत् = क्लेशितवान्। अध्वनि = मार्गे। अध्वन्यः = पथिकः। ढुण्ढारवन्याः=ढुण्ढारारण्यस्य, राजपुत्रदेशे जयपुरप्रान्तो 'ढुण्ढार' इत्युच्यते, या, अवनी = पृथ्वी, तस्याः, अध्यक्षः=स्वामी। ढुण्ढारशब्देन वनीशब्द समोन्ततद्वाचिना तदध्यक्षस्य चारण्यकत्वमुद्घोषितम्। मायामयीम्=प्रवञ्चनायुक्ताम्। मन्त्रणाम्=परामर्शम्। यत्येत=यत्न क्रियेत। जर्जरः=वृद्धः। निर्जरसाम्=देवानाम्। राजा=अधिपतिः।

है। मानसिंह के लिये यह कौन-सी मानास्पद बात हुई जो उन्होंने समस्त भारतवासियों के सम्मान्य 'उदयपुर' सम्राट् 'मेवाड़' के अधिपति को यवनों के पक्ष से इतना क्लेश दिया है। ये 'ढुण्ढार'-वन-प्रदेशाधिपति जयसिंह भी मानसिंह के ही पथ के पथिक हैं। इस की कपटपूर्ण मन्त्रणा का स्वीकार श्रीमान् कदापि न करें। यदि आप प्रयत्न करें तो मराठों के साथ-साथ विजयपुर के महाराज, गोलकुण्डेश्वर, उदयपुराधीश, योधपुर के राजा तथा अन्यान्य बहुत से महाराज भी दिल्ली पर चढ़ाई में आपका साथ दे सकते हैं। इसलिये इस वृद्ध भविष्यवक्ता जयसिंह की चिन्ता आप न करें। इस बूढ़े को देवराज इन्द्र बनने

भर्जयतु च भवान् स्वगर्जन तर्जन ज्वलनेन वर्ज्यानेतान् भारतद्रुहः।"

तदाकर्ण्य यावद् वीरशिवराजः किमपि विवक्षति, तावद् घनच्छाय-पलाशि-पटल एवालीयत स्वामी। महाराष्ट्रेश्वरश्च सचिन्तो निवृत्य तादृक्षानेव स्वप्नान् पश्यन् रात्रिं निनाय। पुनश्च यथासमयं मित्रैर्दिल्लीयात्रामेव निर्णीय, स्वात्मीयस्य स्वर्णदेवस्य हस्ते निखिलं महाराष्ट्र-देश-राज्य-भारं समर्प्य, अश्वारोहिणां पञ्चशतीं सहस्रञ्च पदातीनां सह नीत्वा, मातरं प्रणम्य, जयपुराधीश्वरादेशानुसारेण तदीयैरपि शतसङ्ख्यैः सादिवीरैर्वृतो

---

मृतः स्वर्गसिंहासनमलङ्करोतिति यावत्। भर्जयतु = दाहयतु। स्वगर्जनतर्जनाभिन्नेन, ज्वलनेन = दहनेन। रूपकम्। वर्ज्यान् = वर्जनीयान्, अस्पृश्यान्।

घनच्छायपलाशिपटले = सान्द्रच्छायवृक्षसमूहे। अलीयत = अदृश्यतां गतः।

स्वात्मीयस्य = स्वीयस्य। स्वपद सार्थम्। जयपुराधीश्वरस्य, आदेशस्य = आज्ञायाः, अनुसारेण। तदीयैः = जयसिंहीयैः। सादिवीरैः =

---

दें, किन्तु आप अपने सिंहनाद तथा कोपानल से इन भारतद्रोही पतित यवनों को जला दें।

साधु की बात सुनकर वीर शिवाजी कुछ कहने को चाहते ही थे कि सहसा वे साधु घनी छाया वाले वृक्षों के समूह में ही अन्तर्हित हो गये। तब महाराष्ट्रराज चिन्तित अवस्था में ही अपनी राजधानी लौट आये और उसी प्रकार के स्वप्न देखते हुये उन्होंने उस रात को बिताया। पुनः उचित समय पर अपने मित्रों से दिल्ली जाने का निश्चय करने के बाद आत्मीय 'स्वर्णदेव' के हाथों महाराष्ट्र राज्य का सारा भार सौंप दिया और ५०० घुड़सवारों एवम् १००० पैदल सेनाओं को साथ लेकर अपनी आराधनीया माता को प्रणाम करके जयपुर नरेश जयसिंह के आदेशानुसार उनके

गौरेण, स्तन्यजीवेन, माल्यश्रीकेण, कविवर-भूषणशर्म्मणा च सहितोऽनिच्छन्नपि दिल्लीं प्रतस्थे। प्रथमेनैव दिनेन क्रोश-दशक-मतिवाह्य, शैलतटेषु उपकारिका आयोज्य, सायं समये पर्वतस्यै-कस्य शोभा-वीक्षण-व्याजेन मित्रैरेव सहाधित्यकामारूढः, तत्रैव शिलासु स्थित्वा विमनायमानः पुनरात्मीयैरेवमालपत्।

महा०—न जाने किमिति ग्लायतीव मे हृदयम्।

माल्य०—महाराज! शत्रु-गृह-प्रवेश एव ग्लानि-कारणम्।

भूषण०—महाराज! ग्लानिर्नाऽऽवहनीया, न रोचते चेदद्यापि प्रतिनिवृत्य जयसिंह सेनैवासनीया। प्रस्थीयते चेद् दिल्लीं गत्वा,

---

अश्वारोहिभटैः। अनिच्छन्नपि = अनभिलषन्नपि। उपकारिका = पटमण्डपानि। शोभावीक्षणव्याजेन = छटावलोकनच्छद्मना।

ग्लायति = क्षीणहर्षतामापद्यते।

शत्रुगृहप्रवेश = रिपुसदनगमनम्।

असनीया = क्षेप्तव्या, जेतव्येति यावत्। प्रस्थीयते = गम्यते। हरिद्रा-

---

भी १०० घुड़सवारों के साथ गौरसिंह, स्तन्यजीव, माल्यश्रीक एवं कविवर भूषण शर्मा सहित अनिच्छा से भी दिल्ली को चल पड़े। पहले दिन ही १० कोशों की दूरी को तय करके पर्वतीय प्रदेश में डेरा डाला और सन्ध्या के समय पर्वत की शोभा को देखने के छल से केवल अपने मित्रों को ही साथ लेकर एक पर्वत की अधित्यका ( ऊपर का समतल भूमि ) पर गये। वहीं पत्थर पर बैठ कर खिन्न चित्त से अपने मित्रों के साथ फिर विचार करने लग गए।

महा०—पता नहीं, मेरा मन इतना खिन्न क्यों हो रहा है।

माल्य०—महाराज! शत्रु के घर में जाने के कारण ही मन इतना खिन्न हो रहा है।

भूषण—महाराज! खिन्नता नहीं रखनी चाहिये। यदि अब भी मन न रहा है तो हम लोग लौट चलें और जयसिंह की सेना को ही पहले

अवरङ्ग जं.बोऽपि वीक्षणीयः। न भवतस्तथा ग्लानिः, यथा स ग्लायति भवत्स्मरणेन। दृष्ट्वैव भवन्तं हरिद्रा-द्रव स्नापित कपोल इव निःशोणितवदनः, विस्मृततुरङ्गः, पारिप्लवकुरङ्ग इव कुरङ्गः, पर्यन्वेपितसुरङ्गः, सवेपथु-दुरङ्गः सवत्स्यति समासादित-भयानक-नवरङ्गोऽवरङ्गः। येन भवानी-नामक खड्गेन भवानीकिनीविजयलाभवता भवता विविधा आपद उत्तीर्णाः, हस्ते एवास्ति स खड्गो भवतः।

---

द्रवेण = महारजनरसेन, स्नापितौ = धौतौ, कपोलौ = गण्डस्थले यस्य सः। निःशोणितवदनः = निर्लोहिताननः। विस्मृततुरङ्गः=अनवधृताश्वः। पारिप्लवकुरङ्ग इव = चञ्चलहरिण इव। कुत्सितो रङ्गः=वर्णः यस्य सः। पर्यन्वेपितसुरङ्गः = गवेषितपलायनमार्गः। सवेपथूनि = सकम्पानि, दुरङ्गानि = दुरवयवाः, यस्य सः। समासादितः=लब्धः, भयानकः, नवः रङ्गो येन सः। भवानीकिन्याः=ससारस्थितनिखिलशत्रुवाहिन्याः, विजयलाभवता = जय प्राप्तवता। आपदः = आपत्तयः।

---

जीत लें। यदि दिल्ली ही चलना है तो चलें, चलकर औरङ्गजेब को भी देख ही लें। आपको याद करते ही जितनी खिन्नता औरङ्गजेब के मन में आ जाती होगी उतनी खिन्नता आपके मनमें नहीं हो सकती है। आपको देखते ही उस औरङ्गजेब का वदन इतना पीला हो जायेगा जिससे ऐसा प्रतीत होने लग जायेगा कि उसके दोनों गाल हल्दी के रस से धुल गये हैं, उसे अपने घोड़े की याद नहीं रह जायेगी, चञ्चल हरिण की कालिमा की तरह उसके शरीर पर भी कालिमा छा जायेगी, अपने को छिपाने या भागने के लिये वह सुरङ्ग खोजने लग जायेगा, भय-कम्पन से उसके शरीर के सारे अङ्ग-प्रत्यङ्ग विकृत हो जायेंगे और उसके चेहरे पर क्षण-प्रति-क्षण रूप परिवर्तन दीख पड़ने लग जायेगा। जिस 'भवानी' नाम के खड्ग से समस्त ससार की सेना को जीतने वाले आपने इतनी विपत्तियों को झेला है वह 'भवानी' तो आपके हाथ में ही है।

तावदकस्मादेकतः समश्रावि—"महाराज ! विरम, इतोऽपि प्रतिनिवर्तस्व, मा विश्वसिहि दिल्ली कलङ्कम्, खड्गमाश्रय" इति गम्भीरः शब्दः । सर्वैस्ततः पातितदृष्टिभिश्च स एव घृत-तुम्बी-पात्रः, काञ्चन-चूर्ण-प्रचय-रुचिर-मृत्स्ना-मर्दित-सर्वाङ्गः,कृत-कुङ्कुम-तिलकः,तुलसी-माला-लसद्विशाल-वक्ष स्थलः, त्रिदण्डो स्वामी राघवाचार्यो दृष्टः । स त्वागतमात्र एव दक्षिण-हस्तमुत्थाप्य गम्भीरस्वरेण पुनरगादीत्—

समश्रावि = श्रुत । प्रतिनिवर्तस्व = परावृत्ति स्वीकुरु । मा विश्वसिहि, दिल्लीकलङ्कमिति शेषः, मा विश्वास विधेहि, अवरङ्गे । अत्र माशब्दो ननु माङ्, अत एव न लुङ् । खड्गमाश्रय = खड्गमाश्रय । घृततुम्बीपात्रः = गृहीतालाबुभाजन । काञ्चनचूर्णप्रचयवत् = हिरण्यक्षोदव्रातवत्, रुचिरया मृत्स्नया = प्रशस्तमृदा, मर्दित सर्वाङ्गं यस्य स । त्रिदण्डी = दण्डत्रयवान् । अर्जुनेनापि त्रिदण्डधारणमेव कृत सुभद्राहरण-प्रकरणे । ब्राह्मणसन्यासिना सदा दण्डत्रयधारणमेवोचितमिति स्पष्ट निरूपित विहितकल्पनकश्चरिमलक्ष्यइने पण्डितस्वामिरामभिश्रशास्त्रिभिर्महामहोपाध्यैरिति मूलकृदनुमोदिता तच्छिष्यकृता टिप्पणी । सोऽयं सम्प्रदायवाद इति न विस्मर्तव्यम् । वैष्णवा हि त्रिदण्डिनः । वैष्णवपुराणेषु त्रिदण्डधारणमनुनादं, शैवेषु चैकदण्डधारण दरीदृश्यत इति नेद किमपि । शिवाणा स्वपदनव बालबुद्धिप्रतारणातिरिक्त न किमपीति पुराणमतदीपिकायां विस्पष्ट प्रतिपादितमिति तत एवावेक्षणीय सादरविज्ञै । सिद्धान्तन्तु नीलसरस्वती जानातु ।

उसी समय कहीं से यही गम्भीर शब्द सुनाई दिया—"महाराज ! रुक जाँय । यहाँ से भी आप लौट जाँय । दिल्लीकलङ्क यवन का विश्वास न करें, अपनी तलवार उठावें" । उस शब्द सुनकर सबों ने उधर दृष्टि डाली तो वे ही त्रिदण्डी स्वामी राघवाचार्य दीख पड़े जिनके हाथ में कमण्डलु था, सुवर्ण के चूर्ण की तरह रमणीय रामरज से जिनका सारा शरीर लिप्त था, जिनके ललाट में कुंकुम का तिलक सुशोभित हो रहा था और जिनका विशाल वक्ष स्थल तुलसी की माला से विकसित हो रहा था । आते ही स्वामी जी ने अपनी दायीं भुजा उठाकर गम्भीर स्वर से पुनः कहा—

"वीर ! इतोऽपि विरम । चिर-प्रवृद्धं वैरम् । अविश्वास्योऽवरङ्गजीवः । दिल्लीतो दूरं महाराष्ट्र-सेना । स्फुरति च मे वामं नयनम् , तदितोऽपि निवृत्यताम् । यदि दिल्ली-वल्लभस्याऽऽज्ञया जयपुरेश्वरो युध्यते, तद् योत्स्यामहे [ विचार्य ] युध्यन्ताम् । राजपुत्रदेशीया युद्धकुशलाश्चेन्महाराष्ट्रा अपि दुर्बलेन करेण न वहन्ति चन्द्रहासम् । युद्धे प्राणांस्त्यदयथ, ततोऽपि मार्तण्ड-मण्डलं भित्त्वा स्वर्गमार्गमाकुलयिष्यथ । यदि विजेष्यध्वे, ततोऽपि लोकद्वये कीर्त्यां कीर्तिं धर्मरक्षा-पुण्यञ्च लप्स्यध्वे । अलं कुक्कुट-मेदो-मेदस्वि-तुन्द-तुन्दिलस्य,

---

इतोऽपि = अस्मादपि स्थानात् । चिरप्रवृद्धम् = दीर्घकालवर्धमानम् । वामम्=दक्षिणेतरम् । पुंसाम् अशकुनमिदमिति लोकप्रसिद्धम् । योत्स्यामहे= सङ्ग्रामयिष्यामः । त्वयापि कर्तृकोटौ निक्षेप इति शिवराजभृत्येष्वन्यतम इति विचाल स्यात् , साधुनाकरत्वं प्रकटितं स्यादिति विचार्य आह युद्धयन्ताम् , भवद्भिरिति कर्तृपदम् । दुर्बलेन = बलशून्येन । आकुलयिष्यथ = क्षोभयिष्यथ । लोकद्वये = इहामुत्र च । कीर्त्याम् = कीर्तनीयाम् , गेयामिति यावत् । कीर्तिम् = यशः । धर्मरक्षायाः = वैदिकधर्मपा-

---

"वीर ! अब भी आप लौट जाँय । यवनों के साथ आपकी पुरानी शत्रुता है । औरङ्गजेब का विश्वास नहीं करना चाहिये । मराठे सैनिक दिल्ली से बहुत दूर हैं । साथ ही, मेरी बायीं आँख भी फरक रही है । अतः यहाँ से भी आप अपनी राजधानी को लौट चलें । यदि दिल्लीधसम्राट् औरङ्गजेब की आज्ञा पाकर जयपुर-नरेश युद्ध करने को उद्यत होते हैं तो युद्ध करेंगे । [ सोचकर ] युद्ध करें । यदि राजपुताने के निवासी युद्ध कुशल होते हैं तो मराठे भी कमजोर हाथों से अपने खड्ग नहीं पकड़ने वाले हैं । यदि युद्ध में आप लोग मर भी जाते हैं तब भी सूर्यमण्डल का भेदन करके आप लोग स्वर्ग-मार्ग में ही उथल पुथल मचायेंगे (नरक में नहीं) । यदि विजय हुई तो इहलोक तथा परलोक में गान करने योग्य यश एवम् धर्मरक्षणजन्य पुण्य की प्राप्ति होगी । मुर्ग-मुसल्लम खाने से मोटी तोन्दवाले और मदिरापान के

वारुण्या व्याघूर्णित-नयनस्य, अवरङ्गजीवस्य गृहावग्रहणी-घर्षणेन । आः ! नावलोकयितुं शक्नोमि !! यो महाराष्ट्र-मण्डल-चक्रवर्ती; स एवाद्य दिल्लीकलङ्कस्य करप्रदः संवृत्तः !! धर्म-धारि धौरेयः पातकपुञ्ज-पतयालुं प्रेक्षितुं पथिकः ! कर-कलित-भवानी-करवालोऽपि जाल्मस्य पाटच्चर-परिपन्थिनोऽग्रे विनयं दर्शयिष्यति !! हा दैव ! विचित्रा ते गतिः !"

तदाकर्ण्य क्षणं सर्वे चित्र-लिखिता इव नीरवाः संवृत्ताः । ततो महाराष्ट्रपतिरवादीत्—

---

लनस्य, पुण्यम् = धर्मम् । कुक्कुटमेदोभिः = चरणायुधमांसादिभिः, मेदस्विना = चिक्कणेनोन्नतेन च, तुन्देन, तुन्दिलस्य = वृहत्कुक्षेः । वारुण्या = मदिरया, व्याघूर्णिते = चाञ्चल्यमुपयाते, नयने, यस्य तस्य । गृहावग्रहण्याः = देहल्याः, घर्षणेन = घट्टनेन । करप्रदः = राजस्वसमर्पकः । पातकपुञ्ज-पतयालुम् = अघौघपतनशीलम् । प्रेक्षितुम् = द्रष्टुम् । पथिकः = पान्थः । जाल्मस्य = धूर्तस्य । पाटच्चरपरिपन्थिनः = लुण्ठकस्य शत्रोः । विनयम् = नम्रताम् ।

नीरवाः=निःशब्दाः ।

---

कारण चक्कर काटती हुई आँखों वाले औरङ्गजेब के डेहरी पर माथा रगड़ने का क्या फल होगा ! अहा हा ! अब देखा नहीं जाता ! जो महाराष्ट्रदेश के सम्राट् हैं वे आज दिल्लीकलङ्क औरङ्गजेब को कर देनेवाले हैं ! जो धर्मात्माओं में श्रेष्ठ हैं वे आज पापपुञ्ज से पतित यवन को देखनेवाले पथिक हैं ! 'भवानी' जैसे खड्ग को हाथ में लेकर भी उस धूर्त, गुण्डों के सरदार के आगे झुकने जा रहे हैं । हा विधाता ! आपकी कैसी विचित्र विधि है !"

स्वामी जी की बातें सुनकर थोड़ी देर के लिये तो सब चित्रवत् स्तब्ध हो गये । किन्तु बाद में महाराष्ट्रराज ने कहा—

नवीन-संन्यासिन् ! हृदयग्राहि ब्रूषे। परन्तु कथय, यदि भारतीयानां वैदिक-धर्मावलम्बिनामेव मांसैर्मांसलीक्रियेत भारत-वसुमती, तत् किं न भवति पापम् ?

राघवाचार्यः—पापं कस्य ? यो विरोधिनां पक्षमवलम्ब्य स्वबन्धूञ्जिघांसति, यत्कुलजा यवनानां श्यालत्वे श्वशुरत्वे च प्रतिष्ठां मन्यते; तस्य। न त्वेतस्य, यः स्वधर्मं रक्षितुं द्विषतो रुणद्धि। [ततः सर्वेषु क्षणं नीरवेषु पुनः] वीर ! गत-दिवसेऽपि भवन्तं कथितवानस्मि, तदेव चाद्याप्याम्रेडितवानस्मि। गच्छाम्यहमधुना तीर्थान्यटितुम्, स्वस्ति भवते, यथा रोचेत तथा विधेयम्—

---

नवीनसंन्यासिन् ! =अचिरगृहीतसन्यास ! चिरात्र धर्मो विचारित इत्येव ब्रूषे इति हार्दम्। हृदयग्राहि = मनोहारि, क्रियाविशेषणम्। मांसलीक्रियेत=पुष्टा क्रियेत। भारतवसुमती = हैन्दववसुन्धरा। जिघांसति=हन्तुमिच्छति। श्यालत्वे=पत्नीभ्रातृत्वे। श्वशुरत्वे= पत्नीपितृत्वे। द्विषतः = शत्रून्। आम्रेडितवान्=द्विस्त्रिः कथितवान्। तीर्थानि = पुण्यस्थानानि। अटितुम् = भ्रमितुम्। शालजाले = वृक्षसमूहे।

---

"युवक सन्यासी जी ! आप तो जँचनेवाली बातें कर रहे हैं। परन्तु आप ही बतलायें कि यदि वैदिक धर्मावलम्बी भारतवासियों के मांसों से ही यह भारत भूमि भर जायेगी तो क्या इसमें पाप नहीं ?"

राघवाचार्य—पाप किसको लगनेवाला है ? जो शत्रुपक्ष का अवलम्बन करके अपने बन्धुओं को भी मारना चाहता है, जिसके कुल के लोग पतित यवनों के साले और श्वशुर बनने में ही अपनी प्रतिष्ठा समझते हैं उसको पाप लगेगा, अपने धर्म की रक्षा करने के लिये शत्रु से लड़ने वालों को नहीं। [ उसके बाद सबके मौन हो जाने पर पुनः ] वीर ! मैं कल भी आपसे कह चुका हू और आज भी मैंने उसी बात को दुहराया है। लीजिये, मैं तो अब तीर्थयात्रा में चल रहा हूँ, आपका कल्याण हो ! अब आपको

[ इत्युक्त्वा सपदि शाल-जाले निलिल्ये ]

महा०—( उच्चैर्निश्वस्य ) गगन-गिरेवाऽऽलपितमिदम् । किं कुर्याम् ? स्मार स्मारमिमां गिरं स्व बाल्य-स्वप्नानिव पुनश्चक्षुषोरग्र इव पश्यामि-यद् यवनदुर्गाणि वशीकृतवानस्मि, सुदूर पर्यन्त देवमन्दिरेषु ध्वजा उड्डीयन्ते, मथुरा-वृन्दावन-वाराणस्यादि-तीर्थेषु निर्भयं श्रीमद्भागवत-रामायणादि-कथा घोष्यन्ते, वयं दिल्लीमपि आवृतवन्तः कम्बोज-पर्य्यन्त यवनाः पराजिताः—भवानी च स्वयमिव प्रकटीभूय यवनहतकैर्योद्धुं मामुत्साहयते। तत् किं व्यर्था एवैते स्वप्नाः ? व्यर्थ एव भवानी-समुत्साहः? किमद्य

"वनोकह कुटः शाल" इत्यमरः। निलिल्ये = निलीनः।

गगनगिरा=नभोवाण्या। उड्डीयन्ते=दोधूयन्ते। घोष्यन्ते = उच्चैः कथ्यन्ते। आवृतवन्तः = अवरुद्धवन्तः। व्यर्थाः = निष्प्रयोजनाः।

जैसा अच्छा लगे वैसा करें [ यह कहकर तत्क्षण ही स्वामी जी वृक्षों के पुञ्ज में अन्तर्हित हो गये ]

महा०—[ लम्बी सांसें भर कर ] यह तो आकाशवाणी जैसी लगती है। क्या करूं ? इस बात की याद करने पर तो मेरे बाल्यकाल के स्वप्न—मैंने यवनों को किलाओं को जीत लिया है, मन्दिरों पर काफी दूर तक पताकाएँ फहरा रही हैं मथुरा, वृन्दावन तथा वाराणसी आदि तीर्थों में निर्भयभाव से श्रीमद्भागवत, महाभारत आदि की कथाएँ सुनाई जा रही हैं, हम लोगों ने दिल्ली को भी घेर लिया है, कम्बोज ( हिन्दुकुश के उत्तरी प्रदेश ) तक यवनों की पराजय हो चुकी है—पुनः मेरी आँखों के सामने प्रस्तुत जैसे हो चुके हैं और इधर यह 'भवानी' खड्ग भी स्वयम् प्रकट सा होकर इन दुष्ट यवनों के साथ लड़ने के लिये मुझे उत्साहित कर रहा है। क्या मेरे ये सारे स्वप्न व्यर्थ ही हो जायेंगे ? क्या 'भवानी' का यह उत्साह भी निरर्थक ही होने वाला है ? क्या आज दिल्ली का कलङ्क औरङ्गजेब मुझे

दिल्ली-कलङ्को मां निग्रहीष्यति ? न जाने किं भावि ! दिल्लीं प्रस्थितोऽस्मि। स सन्यासी च निवारयति। अकारण-बन्धुरेष तथ्यं ब्रूते—इति निश्चिनोति मे हृदयम् !

(क्षण सर्वेषु नीरवेषु) भूषण०—महाराष्ट्रराज ! यस्य भवतो नामापि श्रुत्वा यवन-रमणीनां गर्भाः पतन्ति, अवरङ्गजीवं च ज्वर इवाऽऽविशति, कस्तं निग्रहीष्यति ? यदि गगन-विहारी विहङ्गराजः पिञ्जरे निगृह्येत; यदि शार्दूलो वशे क्रियेत, यदि वा नागनाथोऽनन्तो घटे मुद्र्येत, ततोऽपि को जानीते सम्भाव्येत भवतो निग्रह-कथा न वा ? तच्चिन्ता-चक्रेणालम् ! यदि कोपकषा-

निग्रहीष्यति = स्वायत्तीकरिष्यति, दण्डयिष्यति। अकारणबन्धुः = निष्प्रयोजनमित्रम्। तथ्यम् = सत्यम्।

गर्भाः = औदरिका बालाः। ज्वरः = शरीरताप.। गगनविहारी = आकाशचारी। विहङ्गराजः = गरुड़। पिञ्जरे = पक्षिस्थित्यर्थं निर्मिते लोहादियन्त्रे। शार्दूल = मृगाधीशः। नागनाथः = सर्पराजः। अनन्तः = तन्नामा, शेष इति यावत्। घटे = गगरे। मुद्र्येत = नियन्त्र्येत। निग्रहकथा = नियन्त्रणवार्ता। चिन्ताचक्रेण = चिन्तनव्रातेन। कोपक-

पकड़ लेगा ? क्या होने वाला है उसका पता नहीं लग रहा है ! मैं दिल्ली के लिए चल चुका हूँ, पर ये सन्यासी जी वहां जाने से मुझे रोक रहे हैं। स्वार्थ हीन बन्धु होने से ये सत्य ही कहते होंगे—ऐसा मन कह रहा है।

[ क्षणभर सबके स्तब्ध हो जाने के बाद ]

भूषण—महाराष्ट्रराज ! आपका नाम भी सुनकर यवनियों के गर्भ गिर जाते हैं, औरङ्गजेब को ज्वर जैसा हो जाता है, फिर आपका कौन पकड़ सकता ? भले ही आकाश में विचरण करने वाले पक्षिराज गरुड़ का पिंजड़े में बन्द कर लिया जाय सिंह को भी वश में कर लिया जाय, और शेषनाग को भी एक छोटे घड़े में मूँद दिया जाय फिर भी आपके पकड़ जाने की

यितो रणाङ्गणे बलेन जयसिंहस्यापि शिरस्यसिमसिष्यसि; तन्मन्ये तस्योष्णीषं लौह-शिरस्त्रं सकवचमङ्गं महोपवेशनं दन्तावलञ्च द्विकृत्वा वसुधां विदार्य कमठ-पृष्ठे रेखां विधास्यसि। यदि च अवरङ्गजीवमरुणेनापाङ्गेनापि निरीक्षिष्यसे; तत्तं मूर्छयिष्यसि। दिल्लीं गच्छ वा, परावर्तस्व वा, न भवति ते आशङ्कास्थानं किमपि। दिल्लीं प्रयात आपत्सु पतितोऽपि कौशलेन प्राणोद्धार कुशलेन स्वदेशमायास्यसीति निश्चितं वदामि, मा स्म शङ्किष्ठा

---

पायितः=रोपक्षेप । असिम् = चन्द्रहासम् । असिष्यसि=क्षेप्स्यसि। उष्णीषम् = शिरोवेष्टनम्। लौहम् = आयसम्, शिरस्त्रम् = शीर्षत्राणम्। सकवचम्=सतनुत्राणम्, महोपवेशनम्=विशालासनम् । दन्तावलम्=करिणम् । वसुधाम् = धरित्रीम् । विदार्य=विभिद्य । कमठपृष्ठे = कच्छपपृष्ठे । रेखाम् = चिह्नम् । अरुणेन= क्रोधरक्तेन । अपाङ्गेन= नेत्रप्रान्तेन । मूर्च्छयिष्यसि = मूर्छितं विधास्यसि । आपत्सु = विपत्सु । कौशलेन = नैपुण्येन । प्राणोद्धार = लब्धनिष्क्रमणः । कुशलेन=शिवेन । मा स्म शङ्किष्ठा = शङ्का मा कृथा ।

---

युद्ध होकर युद्धक्षेत्र में जयसिंह के मस्तक पर भी बलपूर्वक अपना खड्ग चलावें तो मैं समझता हूँ कि आपका खड्ग उसकी पगड़ी, उसके लोहे के टोप (Helmet), कवच सहित उसके शरीर, उसके हाथी के पीठ पर के गद्दे और उसके हाथी को भी दो टूक और पृथ्वी को विदीर्ण करता हुआ पृथिवी के भार को ढोने वाले 'कच्छपराज' की पीठ पर भी अपना चिह्न बना डालेगा। यदि औरङ्गजेब के ऊपर आप अपनी कोपारुण दृष्टि भी डाल देंगे तो वह मूर्छित हो जाएगा। चाहे आप दिल्ली जाँय या लौट जाँय, पर मुझे किसी प्रकार की आशङ्का का आधार नहीं दीखता। यदि दिल्ली जाने पर आप कथञ्चित् आपत्ति मग्न भी हो जाएँगे तब भी मैं निश्चयपूर्वक यह कहता हूँ कि आप अपने कौशल से अपने को उस आपत्ति से बाहर निकाल कर कुशलपूर्वक अपने देश लौट आएँगे ही। मुझ ब्राह्मण की वाणी

ब्राह्मण-वचने। यथा रोचेत तथा विधेहि।

[ मुहूर्तं सर्वेषु स्तब्धेषु ] माल्य०—भगवन् ! चिर-विचारेण निश्चिते विषयेऽलं चिन्तया ! जयपुरेश्वरेण सन्धिर्विहितः। भवतो दिल्लीतः कुशल-निवर्तनं वृद्धेन महाराजेन प्रतिज्ञातम्, सन्ति च रामसिंह-मायाजिह्म-प्रभृतयस्तत्रापि भवत पक्षावलम्बिनः। सशस्त्रा वयमपि। स भवतो विरुद्धमाचरिष्यति चेत्, सर्वोऽप्येष देशो विद्रोहस्य ज्वालाभिरिव ज्वलिष्यतीति दिल्लीश्वरोऽपि वेवेत्ति। जयसिंहेन सह युद्धे पराजय इति स्पष्टमुक्त दैवज्ञवर्येण देवशर्मणा। दिल्लीत आपदोऽप्युल्लङ्घ्य, हनूमानिव लङ्कात कुशलेन निवर्तिष्यते—

स्तब्धेषु = मौनिप्रायेषु। कुशलनिवर्त्तनम् = क्षेमेण परावृत्तिम्। सशस्त्राः = सायुधाः। वेवेत्ति = अतितरां जानाति। दैवज्ञवर्येण = मौहूर्तिकशिरोमणिना। क्रियासमभिहारेण = वार वारम्। दैवज्ञैः = अदृष्टज्ञै., ज्यौतिषिकैः। प्रतिष्ठामहे=गच्छामः। ताश्च ता आपदश्च तदापदः=भाविवि-

में आप सन्देह न करें। तथापि आपको जैसा अच्छा लगे वैसा करें।

[ थोड़ी देर तक सबके चुप हो जाने के बाद ]

माल्य०—भगवन्! जिस विषय में पहले ही पर्याप्त विचार के बाद निश्चय हो चुका है उस विषय में पुनः सोचना व्यर्थ है। जयपुर-नरेश ने तो सन्धि कर ली है और भी, वृद्ध जयपुरेश्वर ने दिल्ली से कुशलपूर्वक आपके लौट आने की प्रतिज्ञा भी की है। दिल्ली में भी रामसिंह, कुमार सुभङ्ग आदि बहुत से लोग आपके समर्थक हैं और हमलोग भी सशस्त्र हैं। यह बात औरङ्गजेब भी अच्छी तरह जानता है कि यदि वह आपके प्रतिकूल आचरण करेगा तो यह सारा देश विद्रोह की ज्वाला में जलकर भस्म हो जाएगा। महान् ज्यौतिषी देवशर्मा ने तो साफ-साफ यह भी कह ही दिया है कि जयसिंह के साथ युद्ध करने में हम लोगों की पराजय अवश्यम्भावी है। आपत्तियों के आने पर भी उनसे छुटकारा पाकर लङ्का से हनूमान् की तरह दिल्ली से आप सकुशल लौट आएँगे—यह बात

इति च नियासममिहारेण कथ्यते देवचैर्ब्राह्मणैः। तद् यदि दिल्लीं प्रतिष्ठामहे, तदा तदापदोऽपि समुत्तीर्य परावर्तिष्यामहे—इतीष्टदेवं स्मृत्वाऽऽरब्धस्यैवान्तगमनं विधेयम्।

एवमालपतामेव तेषां सगर्जनमेको व्याघ्रः सम्मुखं समापप्तत्। शिववीरश्च सपदि समुत्थाय, दक्ष-कर-धृत-विकोश-च्छुरिको वामे चर्म च धृत्वा तमभिपतितः। यावत्स व्याघ्रः पूर्वकराभ्यां तमाच्छन्दति, तावत्स चर्मणि तदग्रकरौ प्रतिरुध्य, अन्तः प्रविश्य,

---

पत्ती। समुत्तीर्य = उल्लङ्घ्य। परावर्तिष्यामहे = प्रत्यागमिष्याम। स्वदेशं प्रतीति शेषः। इष्टदेवम् = महाकालिकादिम्। आरब्धस्य = अनुष्ठितस्य। 'अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम्। आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्॥'

इति हि प्रामाणिकाः।

सगर्जनम् = सक्ष्वेडम्। व्याघ्रः = शार्दूलः। समापप्तत् = आगतः। दक्षे करे धृता विकोशा = नग्ना, छुरिका येन सः। चर्म = असिरक्षणीम्। पूर्वकराभ्याम् = अग्रिमचरणाभ्याम्। पशूनामग्रिमौ द्वौ हस्तौ, पाश्चात्यौ च चरणाविति विवेकः। आच्छन्दति = आवृणोति। अन्तः = उदरान्तिके।

---

भविष्यवेत्ता ब्राह्मण लोग बारम्बार कह रहे हैं। इसलिये यदि हम लोग दिल्ली चलें भी तो भी वहाँ आई हुई सारी आपत्तियों से मुक्त होकर अपने देश लौट आयेंगे ही—यह सोच कर अपने इष्टदेव का ध्यान करते हुये प्रारब्ध यात्राकार्य का विधिवत् समापन ही करना उचित है।

इस प्रकार सबों की बात चीत चल ही रही थी कि इतने में एक गुर्राता हुआ बाघ सामने से दौड़ पड़ा। वीर शिवाजी झट से उठ कर दायें हाथ में अपने नङ्गे छूरे और बायें में ढाल लेकर उस पर टूट पड़े। ज्योंही उस बाघ ने अपने दोनों आगे के पैरों से शिवाजी के ऊपर आक्रमण किया त्योंही वीर शिवाजी ढाल से उसके दोनों पैरों को रोक कर आगे बढ़े और

छुरिकयोदरं विददार। तत्क्षणमेव च शिवसहचरा अपि स्वस्व खड्गैस्तमोतप्रोतं चक्रुः। अथ सर्वैस्तमालिङ्ग्य 'विजयस्व विजयस्व, शुभसूचकमिदम्' इति व्याजह्रे। दिल्लीगमनं च पुनः स्थिरयित्वा स्वोपकार्यां विविशे।

× × ×

समयोऽयं महामहिम-हिमाच्छन्न-शिशिरस्य। ऋतुनैतेन दिनानां परिणाहः, तमीनां तनुता, पयोजानां प्रसन्नता, सलिलानां सुखावगाह्यता च लुण्ठिता। भगवान् भास्करो दक्षिणस्थः। निर्वा-

विददार = द्विधा चकार। ओतप्रोत = छिद्रानुविद्धम्। व्याजह्रे = कथितम्। स्वोपकार्यां = स्वशिविरम्। विविशे = प्रविष्टा। सर्वैरिति शेषः।

× × ×

महामहिम्ना = प्रचुरप्रभावेण। हिमेन = प्रालेयेन, आच्छन्नस्य = आवृतस्य, शिशिरस्य। परिणाहः = विशालता। लुण्ठितः = इति लिङ्ग-विपरिणामेनान्वीयते यथायथम्। तमीनाम् = रात्रीणाम्। तनुता-लघुता। पयोजानाम् = कमलानाम्। प्रसन्नता = विकासशीलता। सुखेन = आनन्देन, अवगाह्यता = स्नानयोग्यता। सहोक्तिरलंकारः। लुण्ठिता = चोरिता।

उसके पेट को छूरे से उन्होंने फाड़ दिया। उसी समय शिवाजी के साथियों ने भी उस बाघ को अपनी अपनी तलवार से खण्ड-खण्ड कर दिया। इसके बाद सबों ने शिवाजी को गले लगाकर उनकी विजयध्वनि की। पुनः दिल्ली यात्रा के विषय में निर्णय करके सब अपने-अपने शिविर में चले गये।

× × × ×

भयङ्कर हिमपात से आच्छन्न शिशिरऋतु का समय था। वह ऋतु दिनों की लम्बी अवधि को, रात के छोटेपन को, कमलों की प्रसन्नता को और जल की अनुकूल स्नान करने की क्षमता को समाप्त कर चुकी थी। भगवान् सूर्य दक्षिणायन हो चुके थे। हिमपात के कारण (कुहासे के कारण)

सितः। गगनतलं च प्रायिक प्रालेय पातैर्धूम-धूसरितमिव विहितम्। साम्प्रतं तैल-ताप-तूलिका-तरुणी-ताम्बूलादिष्वेव कृतादरा जनाः। जगत्प्राणो जगति प्राणिनो जडीकुर्वन् जवेन वहति। आखण्डल-दिक्कुण्डलतामात्रमुपेयुषः, शुकतुण्ड-च्छवेः, मार्त्तण्ड-मण्डलस्य, अचण्डानां मरीचीनां कोमलमुत्तापं सिषेवयिषूणां शाद्वलेन पथा प्रयातानां वन्यजन्तूनां पाद-क्षेप-विहृता नैशीय-

निर्वासितः = निरस्तः। प्रायिकैः = प्रायोभवैः, प्रालेयपातैः = हिमानीपतनैः। धूमधूसरितमिव = धूममलिनमिव। तैलम् = स्नेहः, तापः = अग्न्यातपादिजन्मा, तूलिका = तूलवती, तरुणी = युवती, ताम्बूलम् = नागवल्ली, इत्येतेषु। कृतादराः = विहितमर्यादाः। जगत्प्राणः = समीरणः। प्राणिनः = जनान्। जडीकुर्वन् = स्तब्धीकुर्वन्। जवेन = वेगेन। आखण्डलदिशः = ऐन्द्रया हरितः, कुण्डलतामात्रम् = कर्णभूषणतामात्रम्। उपेयुषः = प्राप्तवतः। शुकतुण्डच्छवेः = कीराननकान्तेः। मार्त्तण्डमण्डलस्य = सूर्यमण्डलस्य। अचण्डानाम् = अकठोराणाम्। मरीचीनाम् = दीधितीनाम्। उत्तापम् = औष्ण्यम्। सिषेवयिषूणाम् = सेवितुमिच्छूनाम्। शाद्वलेन = घासमयेन। प्रयातानाम् = गतानाम्। वन्यजन्तूनाम् = आरण्यकजीवानाम्। पादक्षेपविहृताः = चरणपातदलिताः। नैशीयानाम् =

आकाश धुँधला सा दीख रहा था। तेल, आग, रजाई, तरुणी तथा ताम्बूल आदि में ही लोगों की आसक्ति बढ़ रही थी। उधर संसार को अनुप्राणित करने वाली हवा भी इतनी तेजी से बह रही थी कि इस जगत् के सभी जीव-जन्तु जाड़े से शिथिल हो रहे थे। पूर्वदिशा के कुण्डलमात्र के रूप में में वर्तमान तथा सुग्गे के मुख की जैसी लाली से सम्पन्न सूर्यमण्डल की मन्द किरण की अनुकूल गर्मी के अनुभव करने की इच्छा रखने वाले और घास से भरे रास्ते से गुजरने वाले जङ्गली जीव जन्तुओं के पादाघात से जो रात के गिरे पाले कहीं-कहीं फट पड़े थे उन्हीं से शिकारियों को पशुओं के जाने के मार्ग का संकेत मिल रहा था। सुन्दरियों के साथ न रहने पर

मिहिका-प्रचय-भङ्गा एव, आखेटक्रीडा-कौतुकिनां पन्थानमुपदिशन्ति। सुन्दरी-संसर्ग-रहितमपि वीरमण्डलमिदं प्रायिकसीत्कारं प्रणिताधरं सरोमाञ्चं सवेपथु चास्ति। दिने सवेग-घोटक-धावनेन न लक्षितो हिम-पात-व्रात-घातः, निशीथिन्यान्तु वरूथिनीय मन्थरिता।

तदेवं स्थिरप्रतिज्ञास्ते प्रस्थिताः पथिषु प्रायो गोधूम-यवाऽऽढकी-मसूराऽतसी - सर्षप - हरिमन्थक - हरितानि परिपक्व-

---

रात्रिपतितानाम्, मिहिकाप्रचयानाम् = हिमनिकराणाम्, भङ्गाः=छेदाः। आखेटक्रीडाकौतुकिनाम् = मृगयाव्यसनिनाम्। पन्थानम् = मार्गम्। उपदिशन्ति = प्रकटयन्ति। पथि पतितहिमानीषु चरणचङ्क्रमणचिह्नेन मृगयवः पशुगमनमार्गं निशीथे निश्चिन्वन्तीति तात्पर्यम्। सुन्दरीणाम् = वनितानाम्, संसर्गेण = सम्पर्केण, रहितम् = शून्यम्। वीरमण्डलम् = वीरकदम्बकम्। प्रायिकः = प्रायोभवः, सीत्कारः = अधरखण्डनादिकालिकः शब्दविशेषः यस्मिन्। प्रणिताधरम् = व्रणोष्ठम्। सरोमाञ्चम् = सपुलकम्। सवेपथु = सकम्पम्। स्त्रीसंसर्गे भावि सर्वमिदं हिमानीसम्पर्कतोऽभेदीति विवेचनीयम्। सवेगघोटकधावनेन = सजवाश्वशीघ्रगत्या। हिमपातव्रातघातः = हिमानीताडनम्। निशीथिन्याम् = तमस्विन्याम्। वरूथिनी = सेना। मन्थरिता = शीथ्यजवा।

स्थिरप्रतिज्ञाः = निश्चितसन्धाः। गोधूमः = "गेहूँ", यवः = "जौ", आढकी = "अरहर", मसूरः = "मसूर", अतसी = "तीसी", सर्षपः = "सरसों", हरिमन्थकः = "चना", एभिः, हरितानि = हरिद्वर्णवन्ति।

---

भी वीरों का समूह सीत्कार, अधरोष्ठ के घाव (शीत के समय ओठों का फट जाना स्वाभाविक है), रोमाञ्च तथा कम्पन से युक्त हो रहा था। दिन में तो तेजी से घोड़े के दौड़ने से हिमपात का अधिक असर सेना पर नहीं पड़ पाता था पर रात में तो सेना की गति धीमी पड़ ही जाती थी।

इस प्रकार भी सत्यप्रतिज्ञता के कारण वे लोग आगे बढ़े। रास्ते में कहीं तो गेहूँ, जौ, अरहर, मसूर, तीसी, सरसों और चने के पौधों से हरे-भरे, कहीं

धान्य-कपिशानि निबिडेक्षु-दुर्गमाणि छिद्यमान-मुद्ग-माष-वल्लाणि क्षेत्राणि निरीक्षमाणाः, तत्क्षणच्योतितेक्षुरसं रसयन्तः, नवीनान् सतीनान् खादमाना, कृत्त-कलम-पुष्कल-पटलेषु वृष-भावली-चालनेन धान्य-पवन-कार्यं सम्पादयतां खट्वाः परित्यज्य सकौतुकं महाराष्ट्र-वीर-मण्डलमवलोकयतां खेट-खर्वट-वासिनां निरीक्षण-कौतुकमावहन्तः, सूच्यग्रैरहिफेन-फलानि निर्यासार्थं

परिपक्वैः धान्यैः, कपिशानि = कपिशवर्णानि । "श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते" इत्यमरः। निबिडेक्षुदुर्गमाणि = सान्द्रेक्षुदुर्गमानि । इक्षु', "ऊख" इति हिन्द्याम् । छिद्यमानानि = कर्त्यमानानि मुद्गमाषवल्लाणि येषु तानि । "मूँग, उरदी, बाजरा" इति लौकिकाः शब्दाः । तत्क्षणच्योतितेक्षुरसम् = तत्कालनिस्सारितेक्षुद्रवम् । रसयन्तः = आस्वादयन्तः, पिबन्त इति यावत् । नवीनान् = नूतनान् । सतीनान् = निष्पावान् । "केराव" इति हिन्दी । खादमानाः = खादन्तः, कृत्तानाम् = खण्डितानाम्, कलमानाम् = धान्यानाम्, पुष्कलपटलेषु = पूलव्रजेषु । वृषभावलीनाम् = बलीवर्दपङ्क्तीनाम्, चालनेन = भ्रामणेन । धान्यपवनकार्यम् = धान्यपूतीकरणकर्त्तव्यम् । "दँवरी" इति लोके । सम्पादयताम् = कुर्वताम् । खट्वाः = पर्यङ्किकाः । सकौतुकम् = सकुतूहलम् । अवलोकयताम् = पश्यताम् । खेटखर्वटवासिनाम् = क्षेत्रान्तरालस्थरिक्तभूमिनिवासिनाम् । निरीक्षणकौतुकम् = अवलोकनकुतुकम् । आवहन्तः = धारयन्तः । सूच्यग्रैः = स्यूतिकरणाग्रैः अहिफेनफलानि = "पोस्ता" इति ख्यातानि फलानि । निर्यासार्थम् =

पके धान की पीतिमा से मनोहर, कहीं घनी ऊख के कारण दुर्गम और कहीं मूँग और उरदी की लताओं के उत्पाटन तथा बाजरे की कटनी से सुशोभित खेतों के सौंदर्य को देखते हुए, ऊख के ताजे रस का पान करते हुए, नये नये मटर के दानें (छीमी) खाते हुए, खेतों में बनाई गई झोपड़ियों में रहकर काटे गये धान की पुल्लियों के ऊपर बैलों के परिभ्रामण के द्वारा (धान की) दबनी (कण मर्दन) करते हुए भी महाराष्ट्र देश के

घर्षयन्तीनां कलमान् कृन्ततीनामारण्यक-शुष्क-गोमयराशीश्चिन्वतीनां ग्राम्य-चेटीनां शिवराज-यशोमयानि गीतानि शृण्वन्तश्च कतिपयैरेव सप्ताहैरहोमदनगरम्, विराट-देशम्, इन्द्रपुरम्, उज्जयिनीम्, गोपालपुरम्, मथुरां च समुल्लङ्घ्य, अङ्गर्तुरसेन्दु-मित-वैक्रमाब्दस्य [ १६६६ ] वसन्तारम्भे दिल्लीनिकटं प्रापुः।

---

तन्निःसृतदुग्धप्रायविपार्थम्। निर्यासः = "गोंद, लासा" इति लोके। अहिफेनम् = "अफीम" इति हिन्दी। घर्षयन्तीनाम् = घट्टयन्तीनाम्। कलमान् = धान्यानि। कृन्ततीनाम् = खण्डयन्तीनाम्, आरण्यकानाम् = वन्यानाम्, शुष्कगोमयानाम् = "गोइठा" इति ख्यातानाम्, राशीन् = समूहान्। चिन्वतीनाम् = सकलयन्तीनाम्। ग्राम्यचेटीनाम् = ग्रामीणभृत्यानाम्। गीतानि = गीतीः। अहोमदनगरम् = "अहमदनगर" इति ख्यातम्। विराटदेशम् = विदर्भप्रान्तम्, "बरार" इति ख्यातम्। इन्द्रपुरम् = "इन्दौर" इति ख्यातम्, "इन्द्रावती"ति तद्वाचकोऽपरः संस्कृतशब्दस्तत्रत्यैर्बहुधाऽङ्गीकृतः। उज्जयिनीम् = अवन्तीम्। गोपालपुरम् = वृन्दावनम्। अङ्गानि षड् वेदस्य, ऋतवः षट्, रसाः षट्, इन्दुः-एकः "अङ्कानां वामतो गतिरि"ति-१६६६-सङ्ख्यया, मितस्य = परिमितस्य, वैक्रमाब्दस्य = विक्रमराज्यादतीतहायनस्य। वसन्तारम्भे = मधुप्रारम्भे। प्रापुः = प्राप्तवन्तः।

---

उन वीरों को मण्डली को कुतूहल पूर्वक देखने वाले कृषकों के दर्शन-कौतुक का मजा लूटते हुए और सूई की नोक से अफीम के फल को उसके रस निकालने के लिए बींधने वाली, धान की फसल काटने वाली और जंगल में सूखी गौहरी चुनने वाली गाव की दासियों द्वारा गाये जाने वाले शिवाजी के यशोगीत को सुनते हुए कुछ ही सप्ताहों में अहमद नगर विदर्भ देश (बरार), इन्दौर, उज्जयनी, वृन्दावन एवं मथुरा होते हुए १६६६ विक्रमाब्द की बसन्त ऋतु के आरम्भ में दिल्ली के पास पहुँचे।

दिल्लीतः कियद्दूरे यमनातटे शिबिर-सन्निवेशो गिरिग्राम समीपे विहित, जयसिंह-प्रेषिता' सादिनश्च महाराष्ट्राधीश-समागम-सवाद-कथनाय यमुनामुत्तीर्य दिल्लीं प्रविविशु ।

रात्रौ सर्वेषु सुप्तेषु, एकाकी महाराष्ट्र-महनीयो माल्यश्रीकसहायो बहिर्निर्गत्य यमुनातटे प्रालेयस्नाते पाषाण-खण्डे समुपविष्ट । कदाचित् श्याम-श्यामैस्तरङ्ग-पटलैर्वहन्तीं यमुनाम्, कदाचन गगन-महासागर-फेन पटलायित तारका-पटल, पश्यन्, क्वचिच्च दीप-प्रचय-सूचित-प्रासाद-मण्डलां यवनराजधानीं

गिरिग्रामस्य = "गुडगाव" इति ख्यातस्य, समीपे = अन्तिके। उत्तीर्य = नावा सन्तीर्य, परतट गत्वा ।

महाराष्ट्रमहनीयः = महाराष्ट्रपूजनीय । माल्यश्रीक सहाय' = सहचरो यस्य स । एतत्रैकाक्तितायां नाद्वितीयताया तात्पर्यम्, अपि तु, समानद्वितीयशून्यतायामिति वेदितव्यम्। प्रालेयस्नाते = हिमभूषिते । श्यामश्यामै. = अतिश्यामै, तरङ्गपटलै. = लहरिव्रातै, वहन्तीम् = चलन्तीम् । गगनमहासागरस्य = नभोनीरनिधे, फेनपटलै =डिण्डारचयैरिवाऽऽचरितम्। रूपकम्। तारकापटलम् = उडुगणम्। दीपप्रचयेन सूचितानि प्रासादमण्डलानि = हर्म्यसमूहाः, यस्या ताम्। निभाल

दिल्ली से कुछ दूर ही यमुना के तट पर स्थित गुड़गाँव के पास उन सबों ने अपना शिविर रक्खा और जयसिंह द्वारा उनके साथ भेजे गये घुड़सवारों ने महाराष्ट्र राज शिवाजी के (दिल्ली) आगमन की सूचना देने के लिए यमुना को पार करके दिल्ली पहुँचे ।

इधर जब रात में सब सो गए तब महाराष्ट्रसम्राट् शिवाजी ने माल्यश्रीक को साथ कर लिया और शिविरसे बाहर निकल कर पाले से भीगी शिला पर जाकर बैठ गए। कुछ देर तक तो कभी यमुना की सावली तरङ्गों की छवि को, कभी आकाश स्वरूप महासमुद्र में फेन के टुकड़ों की तरह शोभायमान तारों की मण्डली की चमक को देखते हुए और कभी दीपक समूह से जिसके

निभालयन्, मुहूर्तं निभृतमेवावतस्थे। परतः समवोचत्—"मित्र! इयमेव राजधानी युधिष्ठिरादीनां क्षत्रिय-कुल-भूषणानाम्। अत्रैव पृथ्वीराजोऽपि चरमवीर उवास। एतस्या एव नाम श्रावं श्रावं हीरात-काम्बोज-गान्धार-समरकन्द-प्रभृति-देशवास्तव्याः स्वप्नेऽपि "पलायध्वं! भोः पलायध्वम्"—इति विलेपुः; सैवेयमधुना तद्देश-वासिभिरेव कदर्य्यैर्भुज्यते। अहह! तत्रैव सनातनधर्मस्य तिरस्कारः। अत्रैव मया प्रवेष्टव्यम्। भगवान् भव्यं विदधातु!"

---

यन् = पश्यन्। क्षत्रियकुलभूषणानाम् = क्षात्रान्वयालङ्काराणाम्। चरमवीरः = अन्तिमः शूरः। एतस्या एव = दिल्ल्या एव। हीरातः="ईरान" इति ख्यातः, काम्बोजः = "काबुल" इति प्रसिद्धः, गान्धारः = 'कन्धार' इत्यपभ्रंशीभूताभिधेयः, समरकन्दः = एवमेव प्रसिद्धः, एव प्रभृतिदेशाना वास्तव्याः = निवासिनः। द्वन्द्वबहुव्रीहि-समासानन्तरं षष्ठी तत्पुरुषः। "वसेस्तव्यत् कर्त्तरि णिच्।" तद्देशवासिभिः=हीरातादिदेशीयैः। कदर्य्यैः = नीचैः। भुज्यते = शास्यते। भव्यम् = कल्याणम्।

---

राजमहल दूर से ही दिखाई पड़ रहे थे ऐसी औरङ्गजेब की राजधानी दिल्ली की छटा को देखने में थोड़ी देर चुप ही बैठे रहे। पर बाद में शिवाजी ने माल्यश्रीक से कहा—"मित्र! क्षत्रिय कुलालङ्कार महाराज युधिष्ठिर आदि की यही राजधानी थी। महान् शूर पृथ्वीराज भी यहीं रहते थे। इसी राजधानी का नाम सुनकर ईरान, काबुल, गान्धार तथा समरकन्द आदि देश के लोग (राजा) स्वप्न में भी यही सोचा करते थे—"अरे! भागो, भागो!" किन्तु आज उन्हीं ईरान आदि देशों के नीच लोग इसमें मजा लूट रहे हैं! हाय! आज उसी दिल्ली में सनातन धर्म की ऐसी दुर्दशा हो रही है! आज मुझे उसी दिल्ली में प्रवेश करना है! भगवान् हम लोगों का कल्याण करें!"

माल्य०—विदधातु भव्यं भगवान् !

तावदकस्माद् यमुनातटादुद्भूता समश्रावि कस्यापि उदार-गम्भीरा वाणी—"सर्वथा भव्यं विदधातु भगवान्"—इति ।

तत 'कुतोऽयम् ? कोऽयम् ?' इति विजिज्ञासमानैः सावधानतया तत एव निपुणं निरीक्षमाणैरदर्शि यत् कश्चन हस्ते पुष्पं गृहीत्वा स्वाभिमुखमायातीति । समीपमागते च तस्मिन्नुभाभ्यां दृष्टं यत्स एव स्वामी पूर्वावलोकितः—इति ।

राघवाचार्यः—सर्वथा भव्यं विदधातु भगवान् ! गृह्यतां मथुराधीशस्य प्रसादकुसुममेतद् ।

महाराष्ट्रराजः—स्वामिन् ! कथमेवं वेगेन समायातो महाराष्ट्रदेशाद् दिल्लीं भवान् ?

---

उद्भूता = उत्थिता । समश्रावि = श्रुता ।

विजिज्ञासमानैः = विज्ञातुमिच्छद्भिः । सावधानतया = मनोयोगपूर्वकम् । 'अवधानं समाधानं प्रणिधानम्' इत्यमरः ।

---

माल्य०—भगवान् कल्याण करें ! ऐसा कहिए ।

इतने में ही एकाएक यमुनातट की ओर से किसी की उदार गम्भीर वाणी सुनाई पड़ी—"भगवान् सब प्रकार से कल्याण करें !"

तदनन्तर ' यह कहाँ से आ रहा है ? कौन है ?" इस तरह की जिज्ञासा से जिधर से शब्द सुनाई पड़ा था उस दिशा की ओर सावधान होकर दोनों व्यक्तियों ने हाथ में फूल लिए उन्हीं की ओर आते हुए एक व्यक्ति को देखा । तब शिव जी और माल्यश्रीक दोनों ने देखा कि वह व्यक्ति था वही स्वामी जिसे उन लोगों ने पहले भी देखा था ।

राघवाचार्य—भगवान् सब प्रकार से (आपका) कल्याण करें ! महाराज ! मथुराधीश (भगवान् श्रीकृष्ण) का प्रसादरूपी यह पुष्प लें ।

महाराष्ट्रराज—स्वामी जी ! इतनी तेजी से महाराष्ट्र देश से आप दिल्ली कैसे आ गए ?

राव०—राजन्! सन्यासिनो वयमलौकिकाभ्यास-परायणाः, तदस्मिन् विषये भवता किमपि न प्रष्टव्यम्।

महा०—[ कराभ्यामाशी कुसुम गृहीत्वा शिरसा सयोज्य ] महानयमनुग्रहः!

माल्य०—[ प्रणम्य ] अलौकिक एषोऽनुग्रहः श्रीमत्कः।

राव०—न बहु वचनीयम्। सम्राजा सह सतर्कैर्व्यवहर्तव्यमित्येव कथयामि। यवनराजेन भवदागमन-वृत्तान्त उपलब्धः। श्व एव साक्षात्कारो भविष्यति। इतोऽपि वदामि—साक्षात्कारानन्तरं बहु न स्थेयम्। नि शस्त्रेण कदाऽपि न भाव्यम्। न कोऽपि तदीयो विश्वसनीयः। शिविरं प्रविशत। शेध्वम्। गच्छाम्यहम्। केवलमाशीःसम्भावनायैवाऽऽयातः। [ इत्युक्त्वाऽन्धतमसे विलीनः ]

अलौकिकाभ्यासे = आकाशगमनादिरूपे, परायणाः = सलग्नाः।
अनुग्रहः = कृपा। श्रीमतामय श्रीमत्कः = मावत्कः।
भवदागमनवृत्तान्तः = भवत्प्राप्तिसमाचारः। उपलब्धः = प्राप्तः।

राव०—राजन्! हम सन्यासियों की अलौकिक कार्य करने की प्रवृत्ति है। अतः आप इस विषय में कुछ न पूछें।

महा०—[ दोनों हाथों से आशीर्वाद पुष्प को लेकर माथे लगाते हुए ] यह श्रीमान् की बहुत बड़ी कृपा है!

माल्य०—[ प्रणामपूर्वक ] यह तो श्रीमान् का हम लोगों पर एक अलौकिक अनुग्रह है!

राव०—मुझे आप से बहुत नहीं कहना है। केवल इतना कहता हूँ कि यवन सम्राट् के साथ आप सावधान व्यवहार करेंगे। यवनराज औरङ्गजेब को आपके आने की खबर मिल चुकी है। कल ही भेंट होने वाली है। यह भी कह देता हूँ कि मिलने के बाद अधिक देर तक वहाँ रुकेंगे नहीं, कभी शस्त्रहीन होकर नहीं रहेंगे। यवन-राज के किसी भी व्यक्ति पर आप विश्वास न करेंगे। जाइए, अपने शिविर में जाकर सो जाइए। अब मैं भी चलता हूँ। यहाँ तो केवल आशीर्वाद देने के लिए ही मैं आया था [ यह कहकर स्वामी जी घनान्धकार में विलीन हो गए ]।

महा०—माल्य ! दिल्ली-प्रस्थान-वार्तारम्भ समयमारभ्यैवैतेन सह परिचयो जात । कोऽयम् ? किमित्यकारणमस्मान् स्निह्यति ? न जाने ।

माल्य०—दिनेष्वय नावलोक्यते, रात्रावेव मिलति ।

महा०—रात्रावपि च चिर नावतिष्ठते । पञ्चषा एव वार्ता आलप्य सपदि प्रयाति ।

माल्य०—ईदृशो गम्भीरः स्वर उदारा च वाक् न श्रुता कस्यापि ।

महा०—न कस्यापि ! [ निःश्वस्य ] ऋते एकस्मात् क्षत्रिय-युवकात् । [ ततो द्वावपि क्षण तूष्णीकौ दीर्घमुष्ण निःश्वस्य, पटान्तेन चक्षुषी अमार्ष्टाम् । ]

स्थेयम् = स्थातव्यम् । शेध्वम् = शयन कुरुत ।
स्निह्यति = प्रीणाति ।
अमार्ष्टाम्–प्रोञ्छताम् । 'चक्षुषी' इत्यस्य ईदन्तद्विवचनत्वेन प्रगृह्यता ।

महा०—माल्यश्रीक ! दिल्ली आने की बातचीत के प्रारम्भ के समय से ही इनके साथ हम लोगों का परिचय हो चुका है । ये कौन हैं ? मैं नहीं समझ पाता कि ये हम लोगों के प्रति अकारण इतना स्नेह क्यों दिखलाते !

माल्य०—दिन में तो इन्हें कभी नहीं देखा । जब भी आते हैं तो रात में ही ।

महा०—रात में भी तो ज्यादे देर तक टिकते नहीं । केवल दो-चार बातें करके ही शीघ्रातिशीघ्र चले जाते हैं ।

माल्य०—महाराज ! किसी का इस तरह का गम्भीर स्वर तथा उदार वचन तो आज तक सुनाई ही नहीं पड़ा था !

महा०—[ लम्बी साँस लेकर ] हाँ, एक क्षत्रिय युवक को छोड़कर और किसी का तो नहीं सुनाई पड़ा था ! [ इतना कहने के बाद दोनों व्यक्ति थोड़ी देर मौन रहे और बाद में लम्बी एवम् गरम साँसें भरकर अंगोछे से अपनी आँखों को दोनों ने पोंछा ]

अथ उभौ शिविराभिमुखं चलितौ पथः पार्श्वे परिवर्तमान-स्यैकस्य पर्कटी-वृक्षस्य भिन्नाञ्जन-श्यामल-च्छायात "महाराष्ट्र-राज! क्षणमित आयाहि, किमपि कस्याश्चिद् दुःखिन्या वचनं निवेदयामि"-इति कस्या अपि योषित इव वचनं श्रुतवन्तौ।

महा०—माल्य! केयम्?

माल्य०—पुनः शृणुवः!

अन्धकारात् पुनः—दयस्व, दयस्व महाराज! केवल वक्तुं किमपि एतावत् कष्टं सोढ्वा आयाताऽस्मि। तत्रैव क्षणमपेक्षस्व, आगत्य निवेदयामि।

महा०—आगच्छ, तिष्ठावः।

तावदुभाभ्यां दृष्टम्-यदेका नील-वसन-परिधानोत्तरीय कञ्चु-

---

पर्कटीवृक्षस्य=प्लक्षद्रुमस्य। भिन्नाञ्जनश्यामलच्छायातः=स्फुटिताञ्जनकृष्णच्छायायाः। दुःखिन्याः=खिन्नाया।

सोढ्वा = क्षान्त्वा। अपेक्षस्व = अपेक्षा कुरु, तिष्ठेति यावत्।

नीलानि = कृष्णवर्णानि, वसनपरिधानोत्तरीयकञ्चुकानि यस्याः सा।

---

उसके पश्चात् जब दोनों शिविर की ओर चले तो रास्ते के पास ( सड़क के किनारे ) लगे पाकड़ के पेड़ की फूटी अञ्जन की तरह साँवली छाया से किसी स्त्री की जैसी आवाज सुनाई पड़ी—"महाराष्ट्रराज! जरा यहाँ तो आइए, एक दुःखिया अबला का एक सवाद मुझे कहना है।"

महा०—माल्य! वह कौन हैं?

माल्य०—जरा एक बार फिर सुन लें।

पुन. छाया से आवाज आई—दया करें महाराज! दया करें। आप से कुछ कहने के लिए ही इतना कष्ट उठाकर मैं यहाँ आयी हूँ। यदि आप यहाँ नहीं आना चाहते तो वहीं जरा सा रुक जायँ, मैं वहीं आकर कहती हूँ।

महा०—आओ! हम लोग रुके हुए हैं।

इतने ही में उन दोनों ने देखा कि एक पवन सुन्दरी वहाँ आई, उसके

किका विरहित-पादभूषणा, अन्धतमसवशादस्पष्टदृष्टरूपा यवन-सुन्दरी समागत्य, एकेन हस्तेन सपूर्वकायनमनं प्रणम्य समुपस्थिता। तां तथाभूतामालोक्य महाराष्ट्रपतिः समार्दवमगादीत्।

महा०—सुन्दरि! कथय, का त्वम्? कुत आयाता? किमिच्छसि? किं कथयसि? आः! न ते भयं सर्पेभ्यो भूतेभ्यः पिशाचेभ्यो वा? केन प्रहिताऽसि? कथमस्मान् अत्रत्यान् ज्ञातवत्यसि? कथं कृत-हिम-कण-पातं कालिन्दी-कूलाऽऽघातं वातं सहसे? कथं वा घोरेऽन्धतमसे कलिन्दतनयोत्तुङ्ग-तरङ्ग-भङ्ग-भयङ्कर-तटे सर्ज-खर्जूर-पर्कटी-गहने प्रदेशे समागच्छन्ती न भीताऽसि?

विरहितपादभूषणा = नूपुरादिशून्या, प्रच्छन्नतारक्षार्थम्। अस्पष्टदृष्टरूपा = अपूर्णावलोकितवेषा। एकेन हस्तेन = अद्वितीयेन करेण। प्रणतिरीतिरिव यवनेषु प्रसिद्धः "सलाम" इति शब्देन। सपूर्वकायनमनम् = कायपूर्वभागशिरोनमनपुरस्सरम्। समार्दवम् = सकोमलत्वम्।

प्रहिता = प्रेषिता। अत्रत्यान् = इह स्थितान्। कृतहिमकणपातम् = विहितप्रालेयखण्डपतनम्। कालिन्दीकूलाघातम् = यमुनातटताडनम्। वातम् = पवनम्। कलिन्दतनयाया उत्तुङ्गैः = अत्युन्नतैः, तरङ्गभङ्गैः, भयङ्करे = भीतिदायिनि, तटे = कूले। सर्जैः खर्जूरैः पर्कटीभिश्च गहने = दुरवगाहे।

पूरे कपड़े नीले रङ्ग के थे, पैरों में कोई आभूषण नहीं था और घने अन्धकार के कारण उसका स्वरूप भी पूर्ण व्यक्त नहीं हो रहा था। आते ही उसने झुक कर सलाम किया और सामने खड़ी हो गई। उसे उस दशा में खड़ी देखकर महाराष्ट्रराज शिवाजी ने कोमल शब्दों में उससे पूछा—

महा०—सुन्दरी! बतलाओ तुम कौन हो? कहाँ से आ रही हो? क्या चाहती हो? क्या कहना है? अरी! तुम्हें साँप, भूत या पिशाच से भी डर नहीं होता? यहाँ तुम्हें किसने भेज दिया? तुमने हम लोगों को यहाँ कैसे देख लिया? हिमकण से सम्पृक्त यमुनातट की ठण्डी हवा को तुम कैसे सह पाती हो? इस घने अन्धकार में भी प्रचण्ड तरङ्ग ध्वनि से भयङ्कर और साल, खजूर एवम् पाकड़ के वृक्षों से भरे इस यमुना के तट पर आते समय तुम्हें डर नहीं लगा?

यवनी—[ अञ्जलिं बद्ध्वा ] महाराज ! दिल्लीश्वर-दुहितुस्तत्र-भवत्या रसनार्य्या अन्तरङ्ग-सखीं मामवगच्छ ।

महा०—अहो ! अपि प्रसीदति तत्र भवती ? अपि वा नन्दति आयुष्मान् कुमार-मायाजिह्मः ?

यवनी—महाराज ! सर्वे कुशलिन इति कथनं व्यवहारः । तथाऽपि भगवती कुमारी रसनारी तु कथं कुशलिनी, यदि सदा हरिद्रा-द्रव-क्षालित-ताली-दल-प्रख्यां कपोल-पालीं वहति ।

महा०—स्फुटं वद, का चिन्ता ? किं वा दुरवापं दिल्ली-वल्लभ-क्रोड-क्रीडाऽतिवाहित-बाल्यानां महाराज-कुमारीणाम् ? मादृश-जनाधीनं वा किमस्ति, यन्निशीथेऽपि त्वां प्रेषितवती ।

---

व्यवहारः = आचारपालनम् । हरिद्राद्रवेण = महारजनरसेन, क्षालितस्य = धौतस्य, तालीदलस्य, प्रख्याम् = समाम् । विरहखेदात् पीतता ।

दुरवापम् = दुःखेन प्राप्तुं योग्यम् । दिल्लीवल्लभक्रोडक्रीडया = दिल्लीशाङ्कलीलया, अतिवाहितम् = यापितम्, बाल्यं याभिस्तासाम् । निशीथे = अर्धरात्रे । 'अर्धरात्रनिशीथौ' इत्यमरः ।

---

यवनी—[ हाथ जोड़कर ] महाराज ! आप मुझे दिल्लीसम्राट् की बेटी 'रोशनआरा' की अन्तरङ्ग सखी समझें ।

महा०—वाह ! वाह ! अच्छा, राजकुमारी प्रसन्न तो हैं ? क्या चिरायु राजकुमार 'मुअज्जम' भी सानन्द हैं ?

यवनी—महाराज ! व्यवहारतः तो यही कहना पड़ता है कि सभी सानन्द हैं । किन्तु जब राजकुमारी रोशनआरा के गाल हल्दी के रंग से रंगे तलफल के समान पीले पड़े हैं और फिर वास्तविकता के आधार पर भी उन्हें ( रोशनआरा को ) सानन्द कैसे कह सकती ?

महा०—ठीक ठीक बताओ—राजकुमारी को किस चीज की चिन्ता पड़ी है ? दिल्लीनायक की गोद में खेलती हुई अपनी बाल्यावस्था को बिताने वाली राजकुमारी के लिए कौनसी चीज दुष्प्राप्य हो सकती है ? यहाँ—मैं उनके लिये क्या कर सकता हूं जिसके लिये उन्होंने अर्धरात्रि में तुम्हें मेरे पास भेजा है ?

यवनी—महाराज ! महाराज-कुमार्य एव महाराजेषु रज्यन्ते। यस्मिन्नुराग, तदलाभ एव खेदस्य कारणम्।

महा०—ओ. ! अवगच्छामि। माल्यश्रीक! सम्राट्-कुमारी भामनुरागेणानुगृह्णाति।

माल्य०—सत्यमौदार्यमिदं कुमारीहृदयस्य!

महा०—सुन्दरि ! मद्वचनेन ब्रूहि तत्रभवतीं यद्-"महाभागे ! निवेदितवानस्मि तत्र भवत्याः परावर्तन-समये। तदद्यापि भवत्याः पिता चेदनुमन्येत, तत्प्रस्तुतोऽस्मि स्वहस्तेन श्रीमत्याः स्वेदानपनेतुम, बाल-व्यजनेन च वीजयितुम्। दिल्लीवल्लभस्याननुमत तु को नाम शक्तो मनसाऽपि चिन्तयितुम् ?" इति। सुन्दरि ! सद्यो यथागतं निवर्तस्व। अहमपि स्वप्नेष्वपि राजकुमारीं पश्यामि, जागरितोऽपि

महाभागे ! = श्रेष्ठभागधेये ! परावर्तनसमये = परावृत्तिवेलायाम्। अनुमन्येत = स्वीकुर्यात्। स्वेदान् = रतिश्रमोद्भूतघर्मबिन्दून्। अपनेतुम् = दूरयितुम्। विवाहयितुमिति यावत्। अननुमतम् = अस्वीकृतम्। यथागतम् = यथा आयात तथा। पुरोगताम् = अग्रे स्थिताम्।

यवनी—महाराज ! महाराजकुमारियाँ महाराजों में ही अनुरक्त होती हैं। जिसमें उनका मन अनुरक्त है उस व्यक्ति का न मिलना ही उनकी चिन्ता का कारण है।

महा०—अच्छा, मैं समझ गया। माल्यश्रीक ! देखो—राजकुमारी मुझसे प्रेम करती है।

माल्य०—राजकुमारी के हृदय की यह उदारता तो यथार्थ ही है।

महा०—सुन्दरी ! तुम जाकर मेरी ओर से राजकुमारी से कह दो—'महाभागे ! आपको लौटाते समय मैं निवेदन कर चुका हूं। अतः यदि आपके पिता की सम्मति होगी तो मैं अपने हाथों से आपके पसीने को पोंछने तथा आपके लिए पंखा झेलने के लिये प्रस्तुत हूँ। क्या दिल्ली-सम्राट् के प्रतिकूल कुछ करने की कल्पना भी कोई कर सकता है ?' सुन्दरी ! जैसे तुम यहाँ आई वैसे ही अभी लौट जाओ। राजकुमारी

च तद्गतचित्ततां पुरोगतामिव विलोकयामि। किन्तु किं करोमि? दुर्घटो हि संयोगः। त्वमात्मानमाच्छाद्य गूढसञ्चारा कृष्णाभिसारिकेव समायाताऽसि। यदि केनापि वीक्ष्येथा, तत्सम्भाव्यते पक्षद्वयेऽपि विपत्तिरिति। वयमद्यैव समायाताः राजसाक्षात्कारोऽपि न कृतः। कियत्कालं च स्थास्यामः। ब्रूहि तत्र भवतीं धैर्यमवलम्बितुम्। प्रयाहि, प्रयाहि—

इत्युक्ता सा पुनः क्षणं मन्दस्वरेण किमपि समालप्य, साभिवादनं निवृत्ता। इमौ च शिविरं प्रविश्य सुषुपतुः।

× × ×

---

गूढसञ्चारा = गुप्तगतिः। कृष्णाभिसारिका = कृष्णवसनाद्युपहिता याऽभिसारिकाऽभिसरति सा कृष्णाभिसारिकेत्युच्यते। अभिसारिका च "कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका" इति कुवलक्षणा वेदितव्या। वीक्ष्येथाः=दृष्टा स्याः। कर्मवाच्यम्। पक्षद्वये=स्वनारीपक्षे मराठपक्षे च। अवलम्बितुम् = धारयितुम्। साभिवादनम् = सनमस्कृति, क्रियाविशेषणम्।

× × ×

---

मैं मैं भी इतना आसक्त हूँ कि स्वप्न में भी राजकुमारी को ही देखता हूँ और जगते समय तो मुझे ऐसा लगता है कि राजकुमारी मेरी आँखों के सामने हैं। किन्तु मैं करूँ क्या? हम दोनों का मिलन घट नहीं पा रहा है। देखो, तुम भी अपने को छिपाकर ही गुप्त रीति से काले वेश-भूषा वाली अभिसारिका की तरह यहाँ आई हो। यदि किसी ने तुम्हें देख लिया तब तो समझो कि दोनों के लिए ही विपत्ति है। हम लोग आज ही आए हैं, अभी राजा से भेंट भी नहीं हो पाई है। अभी कुछ दिन यहाँ रहना है। जाओ, राजकुमारी से धैर्य-धारण के लिए कहो। जाओ, जाओ।

महाराज द्वारा इतना कहे जाने पर वह यवनी मन्दस्वर से पुनः कुछ कहकर महाराज को सलाम करती हुई लौट गई। इधर महाराज शिवाजी तथा माल्यश्रीक अपने शिविर में घुसकर सो गये।

परेद्युर्विहित-स्नान-भोजनादि-क्रियैर्मित्रगणैः सह समुल्लोचतले समुपविष्टे महाराष्ट्रराजे प्रतीहारेण प्रविश्य प्रणम्य कथितम्—

"महाराज! अम्बर-राजकुमारः समायाति"—इति। तदाकर्ण्य स्वयमुत्थाय प्रविशन्तमम्बर-पुरन्दर-पुत्रं रामसिंहं समालिङ्ग्य समानीय स्वपार्श्वे उपवेश्य स्वयमुपविष्टः। महाराष्ट्रराजो वीरोचितां तेजस्विनीमुदारां तदाकृतिं पश्यन्नतितरां मुमुदे। रामसिंहश्च चिरात् तस्य नाम यशः प्रतापं च श्रायं श्रायं बाल्यमयापयदिति विस्फारित-नयनं मुहूर्तं तमपश्यत्, परतश्च महाराष्ट्रराजेन आपृष्ट-कुशलः, साञ्जलि सादरवचनं यथाचारमुक्त्वा कथितवान् यद्—

---

समुल्लोचस्य = शोभनस्य वितानस्य, तले=निम्नस्थाने। प्रतीहारेण= दौवारिकेण।

अम्बरराजस्य = जयपुरेशस्य, कुमारः = तनयः। तेजस्विनीम् = प्रतापप्रदर्शिकाम्। विस्फारितनयनम्=सुविकासितनेत्रम्, क्रियाविशेषणम्। आपृष्ट कुशल यस्य सः।

---

दूसरे दिन जब स्नान-भोजन आदि करने के बाद अपने मित्रों के साथ महाराष्ट्रराज शिवाजी शामियाने के तले बैठे हुए थे तब द्वारपाल ने आकर उनसे कहा—

"महाराज! जयपुर के राजकुमार आ रहे हैं" यह सुनते ही शिवाजी स्वयं उठकर आते हुये जयपुर के राजकुमार रामसिंह को गले लगाकर अपने पास ले आये और वहाँ उन्हें बैठाकर स्वयम् भी बैठ गये। राजकुमार रामसिंह की वीरोचित तेजःसम्पन्न उदार आकृति को देखकर महाराष्ट्रराज शिवाजी बहुत ही प्रसन्न हुये। इधर शिवाजी के नाम, यश तथा प्रताप को सुनते-सुनते अपनी बाल्यावस्था को बिताने वाले रामसिंह भी कुछ देर तक तो शिवाजी को भरी आँखों देखते ही रह गये। फिर बाद में जब महाराष्ट्रराज ने उनसे कुशल आदि पूछा तब हाथ जोड़कर आचारानुकूल आदरपूर्ण उत्तर देकर रामसिंह ने उनसे कहा—

आर्य ! तातचरणानां पत्रं प्राप्तवानस्मि । यथा स मम मान्यस्तथैव भवान् इति भवद्योग्येनाऽऽदेशेन सर्वथाऽनुकम्पनीयोऽहम् ।

महा०—एषा परमदया क्षत्रिय-कुलावतंसस्याम्बरेश्वरस्य । भवन्तञ्च बन्धुं प्राप्य अतितरां प्रसीदामि ।

तदनन्तरं चिरमुभयोर्जात आलापः । परस्तान्मन्दमालपन्म-हाराष्ट्रराजो यद् दिल्लीश्वर-दर्शन-विषये भवतः का सम्मतिः ? इति ।

स आह—सम्प्रति चण्डश्चण्डमरीचिरिति मुहूर्त्तं विलम्ब्य गन्तव्यम् । दिल्लीश्वरो भवन्तमागतं ज्ञातवानस्ति ।

तदाकर्ण्य किञ्चित् स्मयमाने महाराष्ट्रराजे पुनर्विचार्येव प्रावोचत्—

---

भवद्योग्येन = मदर्हेण । अनुकम्पनीयः = दयनीयः ।

चण्डः = प्रचण्डः । चण्डमरीचिः = भास्करः ।

स्मयमाने = ईषद्धसति । "दिल्लीश्वरसाक्षात्कारो विधेयो न वेति

---

'आर्य ! मुझे पिताजी का पत्र मिला है । मेरे लिये वे जितने पूज्य हैं उतने ही पूज्य आप भी हैं । इसलिये योग्य सेवा करने की आज्ञा देकर मुझे आप अनुगृहीत करें ।"

महा०—यह तो क्षत्रियकुलालङ्कार जयपुर सम्राट् की मेरे ऊपर बहुत बड़ी कृपा है । आप जैसे बन्धु को पाकर तो मुझे बड़ी ही प्रसन्नता है ।

उसके बाद दोनों के बीच चिरकाल तक बातचीत चलती रही । पश्चात् महाराष्ट्रराज ने धीरे से उनसे पूछा—"दिल्लीश्वर के दर्शन के प्रसङ्ग में आपकी सम्मति क्या है ?"

राजकुमार रामसिंह ने उत्तर दिया—अभी तो धूप बहुत ही तीखी है । अतः थोड़ी देर रुककर चलना ही अच्छा होगा । दिल्लीश्वर को आपके यहाँ आने की खबर मिल चुकी है ।

इस बात को सुनकर जब शिवाजी ने मुस्करा दिया तब रामसिंह ने पुनः उनसे कहा—

भगवन् ! भवान् कुशलेन निवर्तनीयः—इति पित्रा लिखितमस्ति। तदत्र प्रतीपं नाऽऽशङ्कनीयम्। द्रष्टव्यः सम्राट्।

ततो माल्यश्रीक आह—प्रतीपे आचरिते महाराष्ट्र-देशे तथा समर-ज्वलन-ज्वालाः प्रसरिष्यन्ति, यथा भारते यवनसम्राड्वंश एव भस्मसाद् भविष्यति।

रामसिंहस्तु सान्त्वयन्नब्रवीत्—मैवम्, मम तातचरणमत्यन्तमाद्रियते सम्राट् इति तल्लेखं नान्यथा करिष्यतीति निश्चिनोमि।

---

शिवराजस्य तात्पर्यमासीत्, तच्च नावगतं रामसिंहेनेति स्मितवानिति" मूलकृच्छिष्यकृता टिप्पणी। दिल्लयैव समागतस्य तदर्थमेव स्थितस्य प्रतीक्षमाणस्य च निगूढमिममाभ्यन्तरिकमभिप्रायं कथं वेत्तु रामसिंह इति नावधारयितुं पारयामः।

प्रतीपम् = विरुद्धम्।

समर एव ज्वलनः = दहनः, तज्ज्वालाः।

---

"भगवन्! पिताजी ने मुझे लिखा है कि आपको यहाँ से कुशलपूर्वक लौटाना है। अतः आप किसी तरह का सन्देह न करें। दिल्लीसम्राट् से अवश्य मिलें"।

उसके बाद माल्यश्रीक ने कहा—"यदि यहाँ किसी प्रकार का प्रतिकूल व्यवहार हुआ तो महाराष्ट्र देश में इस तरह की युद्धाग्निज्वालाएँ फैल जायेंगी कि उन्हीं ज्वालाओं में इस भारतवर्ष के यवन सम्राट् का समूचा कुल भस्मसात् हो जाएगा।"

माल्यश्रीक की बात सुनकर रामसिंह ने माल्यश्रीक को सान्त्वना देते हुए कहा—ऐसा नहीं। सम्राट (औरङ्गजेब) मेरे पिताजी का बहुत आदर करते हैं। मुझे इस बात का निश्चय है कि मेरे पिता के पत्र के प्रतिकूल नहीं करेंगे।

ततो बहुभिर्वार्त्ताभिरेव प्रतियापिते मुहूर्त्ते, "राज-साक्षात्कार-समयः संवृत्तः" इत्युक्तवति रामसिंहे, नववस्त्राणि धारयन्, चन्द्रहासं समास्रंसयन्, सम्मुखमुकुरे दत्तदृष्टिरुष्णीष-बन्धनानि विन्यस्यन्, महाराष्ट्रपतिरगादीत्—प्रबलप्रवाहा यमुनेति कथं प्रवेक्ष्यामो दिल्लीम् ? स आह—आर्य ! नौका-परम्पराभिरायोजितो महान् सेतुरस्ति, तत एव निःशङ्कं घोटकाः, उष्ट्राः, वृषाः, शकटाः, रथाश्च, यातायात कुर्वन्ति। तत एव यास्यामः।

महा०—अथ कति अश्वारोहा अनुसरन्त्वस्मान् ?

कुमाररामसिंहः—राजद्वार-पर्यन्तं शतं शक्नुवन्ति गन्तुम्, अन्तस्तु वयमेव यास्यामः।

---

बहुभिः, "वोतो गुणवचनात्" इत्यनेन स्त्रीप्रत्ययविकल्पः। समास्रंसयन् = अवलम्बयन्। सम्मुखमुकुरे = पुरःस्थितादर्शे। दत्तदृष्टिः = प्रहितनयनः। प्रबलप्रवाहा = विशालधारा। यातायातम् = गयागमम्। अनुसरन्तु = अनुयान्तु।

---

उसके बाद अनेक प्रकार की वार्ताओं के क्रम में कुछ समय बीत जाने पर जब रामसिंह ने कहा कि अब दिल्लीराज से मिलने का समय हो गया, तब नवीन वस्त्र पहनते हुए, अपनी तलवार को हाथ में लेते हुए समक्ष प्रस्तुत दर्पण में मुख देखकर अपनी पगड़ी को सम्भालते हुए महाराष्ट्रराज ने पूछा—"बीच में तो विशाल प्रवाह वाली यमुना है। फिर हम लोग दिल्ली नगर में कैसे प्रवेश करेंगे ?" रामसिंह ने उत्तर दिया—आर्य। नावों की श्रेणी से बहुत बड़ा पुल बनाया हुआ है। उसी के माध्यम से निःशङ्क होकर घोड़े, ऊँट, बैल, गाड़ियाँ और रथ आया-जाया करते हैं। हम लोग भी उसी पुल से चलेंगे।

महा०—अच्छा, यह तो बतलाइए कि हमारे साथ कितने घुड़सवार चलें ?

रामसिंह—सिंह दरवाजे तक तो सौ घुड़सवार चल सकते हैं। परन्तु उससे आगे तो केवल हम लोग ही चलेंगे।

महा०—अस्माभिः केन यानेन गन्तव्यम ?

कुमार०—पुष्परथमानीतवानस्मि।

महाराष्ट्रराजस्तु "दिल्लीकलङ्केनैतेन स्वपुत्रो न प्रेषित आनेतुम्, अपमान एष"—इति मनसि चिन्वयन्, माल्यश्रीक-गौरसिंहादिभिः सज्जो भूत्वा, रामेण सहोत्थाय शिविरात् बहिरागत्य पुष्परथमारूढः। तस्मिन्नेव तत्सम्मुखे कुमार-रामसिंह उपविष्टः। गौरसिंह माल्यश्रीकादयोऽपि भूषण - भूषितान् सौवर्णवल्गानश्वानारूढाः।

---

पुष्परथम् = चक्रयानम्, असामरिक रथम्।

स्वपुत्रः = मायाजिह्मायान्यतमः। तनयानुरागिणे हि तनयमेपणमावश्य कम्। एतादृशीमेव काश्चिद् घटनामक्षिलक्ष्यीकृत्य पण्डितराजोऽभाणीत्—

न वारयामो भवतीं विशन्तीं वर्षानदीस्रोतसि जह्नुजायें।

न युक्तमेतत्तु पुरा यदस्यास्तरङ्गभङ्गान् प्रकटीकरोपि॥

तस्मिन्नेव = पुष्परथ एव। भूषणैः = हिरण्याभरणैः, भूषितान् = अलङ्कृतान्। अत्र शिवराजवृत्त्येऽस्मिन् भूषणोऽश्वभूषणताङ्कत इति समानशब्दैर्ध्वनयति। सौवर्णवल्गान् = हैरण्यकविकान् बहुव्रीहिः।

---

महा०—हम लोगों को कौन सी सवारी लेनी चाहिए ?

कुमार—मैं घूमने के काम में आने वाला रथ ले आया हूँ।

तत्पश्चात् "इस दुष्ट दिल्लीकलङ्क यवनाधम ने मुझे अपने पास ले जाने के लिए अपने लड़के को न भेजकर मेरा अपमान किया है" यह सोचते हुए शिवाजी माल्यश्रीक तथा गौरसिंह आदि के साथ सुसज्जित होकर रामसिंह के साथ उठ गये और शिविर से बाहर निकलकर पुष्परथ में बैठ गए। उसी में कुमार रामसिंह भी शिवाजी के सम्मुख बैठ गए। गौरसिंह तथा माल्यश्रीक आदि अनेक सहचर भी अलङ्कार मण्डित, सोने की लगाम वाले घोड़ों पर सवार हो गए। कुछ तो रामसिंह के अनुयायी और सौ शिवाजी के अनुयायी सुसज्जित घुड़सवारों ने भी इधर उधर दौड़ने के महोत्साह में कूदने वाले, जिस किसी प्रकार नियन्त्रित होने वाले, फूलों की तरह अपने फेन के गिराने से पृथ्वी की पूजा करने वाले, दौड़ने में धुरन्धर

कतिपये रामसिंह-सादिनोऽपरे च शतं महाराष्ट्र – सादिनाऽपि सज्जा इतश्चेतश्च धावन - सवेग - महोत्साह - खुरखुरायित–*खुराणां कथं कथमपि संयम्यमानानां कुसुमैरिव फेन-प्रपातैः परिपूजित-वसुन्धराणां धावन धुरन्धराणां सैन्धवानां हेषाभिरध्वनीनाम् बधिरानकार्षुः। तावत् सपदि भूषणकविरागत्य, प्रलम्ब-कवितयाऽऽशीराशीनुदीर्य राजहस्ते साक्षतानि कुसुमानि दत्त्वा, तदनुमत्या स्वयमपि मौक्तिक- माला–कलित–कण्ठ सौवर्ण–किरण–कलित–वर्णद्वय–मध्य राजत–कुसुमावलि–शोभित–लाङ्गूल श्याममेकं प्रकाण्डं वाजिनमारूढवान्। समङ्गलशब्दं च सर्वेऽपि प्रस्थिताः, क्षणेनैव च सर्वे सेतुं प्राप्ताः। ततो दृष्टवान् महाराष्ट्र-पतिर्यद्भास्वान् मृदुलमयूखः समुत्त्य भुवनमभिपतति। अभ्रंलिहानां

---

*धावनसवेगेन यो महः त्साह तेन खुरखुरायिताः, खुरा =शफाः, येषा तेषाम्। संयम्यमानानाम् = अवरुध्यमानानाम्। कुसुमैरिव = प्रसूनैरिवेत्युत्प्रेक्षा। परिपूजितवसुन्धराणाम्=समर्चितवसुमतीकानाम्। धावनधुरन्धराणाम् शीघ्रगतिपटूनाम्। अध्वनीनान्=पथिकान्। मौक्तिकमालया = मणिस्रजा, कलितः = भूषितः, कण्ठः = गलो यस्य तम्। सौवर्णकिरणै = हैरण्यमयूखैः कलित वर्णद्वय मध्ये यस्य तम्। राजतकुसुमावलिभिः, शोभितम्, लाङ्गूलम् = पुच्छ यस्य तम्। प्रकाण्डम् -- विशालम्। भास्वान् = दीधितिपतिः। मृदुलमयूख. = कोमलकिरणः। समुत्त्य=भूत्वा। भुवम् = धरणीम्। अभिपतति = समुपयाति। अभ्रं-

---

* सिन्धु-देशीय घोड़ों की हिनहिनाहट से पथिकों के कान भर दिए। इसी बीच भूषण कवि भी आये और उन्होंने अपनी लम्बी कविता से आशीर्वाद देकर, महाराज के हाथ में फूल-अक्षत दिए। पश्चात् महाराज की अनुमति पाकर स्वयम् भूषण कवि भी उस मोतियों की माला से विभूषित कण्ठ वाले सुवर्ण की किरण से चमकते वर्णद्वय से युक्त मध्यभाग वाले एवम् चान्दी की बनी कुसुमावली से सुशोभित पूँछ वाले एक साँवले रंग के विशाल घोड़े पर सवार हो गए। तत्पश्चात् मंगल ध्वनि पूर्वक सब आगे बढ़े और

कलितापर-मेघाडम्बराणां समुद्धूतध्वजानां दिल्ली-हर्म्याणां छाया कलिन्द-नन्दिन्या श्यामतां द्विगुणयति। अभितः सेतु तनव', महत्य, सपटला, अपटला', साट्टा, निरट्टा, हंस-मयूर-वर्त्तक-सारस-कारण्डवादि-विविधाकाराः, चित्र-विचित्रिता समञ्जीर-क्षेपण-क्षणत्काराकुलीकृत कमठा सहस्रशो नौका इव-अतश्च ससरन्ति। तटस्था, तरणिस्था, सेतावपि च यातायात-परा,

लिहानाम् = मेघस्पर्शिनाम्। कलितापरमेघाडम्बराणाम् = धारितद्वितीयावारिवाहानुकृतीनाम्। श्यामताम् = कार्ष्ण्यम्। द्विगुणयति = वर्द्धयति। तनव = लघव। महत्य = श्रेष्ठाः। सपटला = सच्छदिका। "पटल छदिरि" त्यमरः। "छप्पर" इति हिन्दी। अपटला = अच्छदिका। साट्टाः = साट्टालिका। सचन्द्रशालाका इति यावत्। निरट्टाः = निरट्टालिका। हंसादिविविधाकाराः = हंसाद्यनेकाकृतय, मयूरपुच्छी-प्रभृतिशब्दै ख्याता अधिरामनगर दृश्यिस्यगाः। चित्रैः=आलेख्यै, विचित्रिता = विस्मयजनिका लिखिता वा। समञ्जीराणाम् = सघुङ्घरुदिका नाम्, क्षेपणानाम् = नौकादण्डानाम्, क्षणत्कारेण, आकुलीकृता कमठा याभिस्ता। यमुनाया कच्छपप्राचुर्यं प्रसिद्धम्। शोभार्थं मञ्जीरा सञ्जन कुर्वन्तीति वेदितव्यम्। ससरन्ति = प्रचलन्ति। तरणिस्था =

शीघ्र ही पुल के पास पहुँचे। इसके बाद महाराष्ट्रराज ने देखा कि अस्तमुन्ग सूर्य की किरणें धीमी पड़ गई थीं।

दिल्ली की गगन चुम्बी और इसलिए बादल की दूसरी प्रतिकृति जैसी दीखने वाली, फहराती पताकों से सुशोभित अट्टालिकाओं की छाया यमुना की कालिमा को दूनी कर रहा थी। पुल की चारों तरफ छोटी-बड़ी, छत वाली और बिना छत की अटारियों वाली एवम् बिना अटारियों का हंसाकृति, सारसाकृति, बत्तकाकृति, चित्र विचित्र नावों की भीड़ जमी थी और उन नावों के मञ्जीरयुक्त खेवए दण्ड की झनकार से कछुये व्याकुल हो रहे थे। यमुना तट पर खड़े, नावों पर बैठे, पुल से गुजरने वाले तथा दिल्ली के सभ्य नागरिक भी गर्दन को परिवर्तित कर, आँखें खोल कर

सहस्रशो नागराश्च कन्धरं परिवर्त्य चक्षुषी विस्फार्य आत्मानं पश्यन्ति, माङ्गुलिनिर्देशं च स्वमित्राणि "सोऽयं सोऽयम्" इति दर्शयन्ति।

ततः स यमुनां प्रणम्य, मनस्येव कथितवान् यद्—

"भगवति! कृष्णप्रिये! यथा कालियसदनं प्रविश्यापि भगवान् कृष्णः काकोदरं निर्मथ्य निरगात्, यथा च नन्दो ग्राहेण गृहीतस्त्वज्जले निमग्नोऽपि बकविद्वेषिणोऽनुग्रहेण सकुशलं परावृत्तः; तथैव चेदहमपि दिल्लीतः कुशलेन स्वपुण्यपुरीं परावर्ते; तद् दुग्ध-धारा-सहस्रैः कमलानां लक्षेण, लक्षेण च घृतदीपानां त्वामभ्यर्चयिष्ये"—इति।

तावत्ते सेतुमुल्लङ्घ्य, परं तटमायाता दिल्लीं प्रविविशुः। तत्र च

---

नौकास्थितः। नागराः = ऐन्द्रप्रस्थाः प्रकृते।

कालियस्य=तन्नाम्नो नागस्य, सदनम्=ह्रदम्। काकोदरम्=सर्पम्। निर्मथ्य=निर्मदीकृत्य। नन्दः=कृष्णपितृतया ख्यातः। ग्राहेण = नक्रेण। बकविद्वेषिणः = बकासुरमारकस्य। अनुग्रहेण = दयया। स्वपुण्यपुरीम्= स्वीया पत्तिना 'पूना' नगरीम्। अभ्यर्चयिष्ये = पूजयिष्ये।

---

अपने को भी देख रहे थे और शिवाजी की ओर अङ्गुल्या निर्देश करते हुए अपने मित्रों से भी कहा करते थे—"वही हैं, शिवाजी वही हैं।"

इसके बाद शिवाजी ने यमुना को प्रणाम कर उनसे मनही मन प्रार्थना की—"भगवति यमुने! जिस प्रकार कालिय नाग के ह्रद में प्रवेश करके भी भगवान श्री कृष्ण उस नाग को अभिमान शून्य बनाकर लौट आये थे, जिस प्रकार ग्राह से गृहीत होकर तुम्हारी जलधारा में डूबते डूबते नन्द बका सुरसंहारी ( कृष्ण ) की कृपा से बच गये थे इसी प्रकार यदि मैं भी दिल्ली से कुशल पूर्वक अपनी राजधानी पूना लौट आया तो एक हजार दूध के घड़ों एक लाख कमल पुष्पों तथा एक लाख घृतदीपों से तुम्हारी आराधना करूँगा"।

इतने में वे पुल को पार कर यमुना के दूसरे तट पर पहुँच चुके और

प्रघाणस्थैः परिवर्त्तित-ग्रीवैः लोलोष्णीष-बन्धै भटैः, आपणोपविष्टैः स्लथ-शङ्कुलैः स्वर्णकारैः, कर्णार्पित-लेखनीकैश्चित्रकारैः, समुपेक्षित-तुला-दण्डैर्वणिग्भिः, विशिथिल-स्खलित-मानदण्डैः पट-विक्रयिभिः, स्थगित-सीवनैः स्यूतिकारैः, विस्मृतहार-ग्रथनैर्मालाकारैः, घण्टापथे विचरद्भिः समाकृष्टवल्गैः सादिभिः, आसादित-प्रान्तै-

प्रघाणस्थैः = बहिर्द्वारप्रकोष्ठस्थैः । "प्रघाण-प्रघणालिन्दा बहिर्द्वार प्रकोष्ठके" इत्यमरः । परिवर्त्तितग्रीवैः = वक्रीकृतकन्धरैः । लोलोष्णीषबन्धैः = चञ्चलशिरोवेष्टनैः । भटैः = गजपुरुषैः । आपणोपविष्टैः = विपणिसमुपस्थितैः । स्लथशङ्कुलैः = स्थगितकर्त्तिकैः । स्वर्णकारैः = पश्यतोहरैः । कर्णार्पिता = श्रोत्रस्थापिता, लेखनी = कलमः, यैस्तादृशैः । चित्रकारैः = आलेख्यकारैः । समुपेक्षितवुलादण्डैः = परित्यक्तमापिकादण्डैः । वणिग्भिः = व्यापारिभिः । विशिथिलाः = विशृङ्खलाः, स्खलिताः = पतिताः, मानदण्डाः = "गज" इति ख्याताः, यैस्तैः । पटविक्रयिभिः = वस्त्रविक्रेतृभिः । स्थगितसीवनैः = परित्यक्तसूचीकर्मैः । स्यूतिकारैः = सूचीकृद्भिः । विस्मृतहारग्रथनैः = अनवधृतमाल्यनिष्पादनैः । मालाकारैः = मालिभिः, घण्टापथे = राजमार्गविशेषे । विचरद्भिः = गच्छद्भिः । समाकृष्टवल्गैः = समाकुञ्चितकविकैः । सादिभिः = अश्वारोहैः । आसादितप्रान्तैः = गृहीतमार्गपार्श्वैः । पर्यटकैः = वायुसेवनार्थं भ्रमद्भिः । आरा-

फिर वहाँ से उन लोगों ने दिल्ली में प्रवेश किया । दिल्ली प्रवेश करते हुए द्वार के पास बना ड्योढ़ी में रहने वाले और फट फराती पगड़ियों वाले योद्धाओं द्वारा गर्दन घुमाकर, बाजार में बैठे स्वर्णकारों द्वारा अपनी-अपनी कतरनी ( नश्तर ) छोड़कर, चित्रकारों द्वारा लेखनी को कानों पर रखकर, बनियों द्वारा तराजू की डण्डी छोड़कर, कपड़े के व्यापारियों द्वारा अपने अपने 'गज' रखकर, दर्जियों द्वारा सिलाई रोककर, मालाकारों द्वारा माला गूँथना भूल कर, राजमार्ग पर परिभ्रमण करने वाले घुड़सवारों द्वारा अपने-अपने घोड़े की लगाम खींच कर, पर्यटकों द्वारा सड़क के किनारे खड़े होकर,

पर्य्यटकैः, आशीर्वचन-स्फुरितोष्ठैर्ब्राह्मणैः, परिवर्जित-क्रीडैर्बालकैः, गवाक्षस्थैः शिथिलितव्रीडैरङ्गुल्यग्रापसारित-तिरस्करिणी-विच्छेद-प्रहित-कटाक्षावलोकनैः कुल-युवति-जनैश्च, सकौतुकं निरीक्ष्यमाण;

"कोऽयम्?, कुतोऽयम्?, सोऽयम्, स एवायम्, वीरोऽयम्, वीरवरोऽयम्, महाराष्ट्रराजोऽयम्, दुर्धर्षोऽयम्, चिरश्रुतोऽयम्, शास्तिखान-शास्ति-शास्त्रज्ञोऽयम्, विजयपुर-विजय दीक्षितोऽयम्, गोलखण्ड-खण्डन-पण्डितोऽयम्, सुरत-वशीकरण-मन्त्र-मान्त्रि-

र्वचनेभ्यः = आशीः कथनेभ्यः, स्फुरितौ=चलितौ, ओष्ठौ येषां तैः। 'ओत्वोष्ठयोः समासे वा" इति वृद्धिविकल्पः। परिवर्जितक्रीडैः = परित्यक्तखेलैः। बालकैः = अर्भकैः। गवाक्षस्थैः = वातायनस्थैः। शिथिलितव्रीडैः = अल्पीकृतलज्जैः। अङ्गुल्यग्रापसारितायाः = करजमात्रदूरीकृतायाः, तिरस्करिण्याः = यवनिकायाः, विच्छेदेन = भङ्गेन, प्रहितानि = प्रेरितानि, कटाक्षावलोकनानि यैस्तैः। कुलयुवतिजनैः = सद्वंशतरुणीलोकैः। सकौतुकम् = सकुतुकम्। निरीक्ष्यमाणः = अवलोक्यमानः।

शास्तिखानस्य, शास्तेः = शासनस्य, दण्डनस्य, शास्त्रम् = शासनविधानम्, जानातीति तथाभूतः। विजयपुरविजये दीक्षा सञ्जाताऽस्येति दीक्षितः तारकादित्वादितच्। गोलखण्डस्य, खण्डने = ध्वसने, पण्डितः = सञ्जातपण्डः, बुद्धिमान्। 'सूरत' नगरवशीकरणमन्त्रस्य, मान्त्रिकः=मन्त्रशास्त्रज्ञः।

आशीर्वाद देने वाले ब्राह्मणों द्वारा ओंठ हिलाते हुए, बच्चों द्वारा खेल बन्द कर और लज्जा का कुछ परित्याग करके खिड़कियों के पास आकर अङ्गुलियों से पर्दे हटा कर अपने अपने कटाक्षों का निक्षेप करती हुई कुलाङ्गनाओं द्वारा देखे जाते हुए,"यह कौन है?कहाँ से आए हैं?यह वह है,यह वही है, यह वही वीर है, यह वही वीरवर हैं, यह महाराष्ट्रराज हैं; यह अजेय हैं, इनके बारे में चिर काल से सुना जा रहा था, यही शाइस्ता खाँ को दण्ड देने की पद्धति को जाननें वाले हैं, बीजापुर के ऊपर विजय पाने की दीक्षा इन्हें ही

कोऽयम्, अम्बर-पुरन्दर-प्रीति-परवशोऽयं, सम्राजमुपसर्पति, अम्बर-राजकुमारेण सह नीयते। कीदृशमेतस्योष्णीष-बन्धनम्! कीदृशा अस्य सादिनः! स भूषणकविरप्यश्वारूढः सहचरः' —इति परितः परिवर्तिनां बहूनां विविधालापान् मन्दमन्द्रोदीरितान् किञ्चित् किञ्चित् कर्णे कुर्वाणः;

कैश्चित् कुक्कुटाण्ड-गणनासक्तैः, अपरैर्वर्तिका-निचय-वशीकार-व्याकुल-मुष्टिभिः, इतरैर्मञ्चारूढैर्धूम-पान-परायणैः, अपरैरक्षक्रीडाऽऽसक्तैः यवनैश्च "सोऽयं समागतोऽयं समामा

अम्बरपुरन्दरप्रीते = जयपुराधीशप्रेम्णः, परवशः = अधीनः। उपसर्पति = गच्छति। परिवर्तिनाम् = समन्तात् विद्यमानानाम्। अद्धोदीरितान् = नैमकथितान्। कर्णे कुर्वाण = श्रृण्वन्।

कुक्कुटाण्डगणनायाम् = चरणयुधाण्डसङ्ख्याने, आसक्तैः = निरतैः। वर्तिकानिचयस्य, वशीकारे, व्याकुलाः, मुष्टयः = बद्धाङ्गुलिकाः, येषां तैः। मञ्चारूढैः = खट्वारूढैः, धूमपाने परायणैः = निरतैः। अक्षक्रीडासक्तैः = द्यूतलीलानिरतैः। समासादितः = प्राप्तः। आचक्षते = कथयन्ति।

मिली है, गोलकुण्डा के विध्वंस में ये ही निपुण हैं, ये ही सूरत देश का वशीकरण के मन्त्र को जानने वाले हैं, जयपुर नरेश के प्रेम में बँधे हैं, आज दिल्ली सम्राट के पास ये मिलने जा रहे हैं, जयपुर के राजकुमार इन्हें साथ ले जा रहे हैं, देखो इनकी पगड़ी कितनी अच्छी बन्धी है! इनके पीछे चलने वाले घुड़सवार किस तरह के हैं! वे भूषण कवि भी घोड़े पर सवार होकर इनके साथ हैं, "इस प्रकार आस पास के लोगों द्वारा की जाने वाली बातों को कुछ कुछ सुनते हुए मुर्गी के अण्डे गिनने में लगे, बटेरों को पकड़ने में व्याकुल मुट्ठियों वाले, खटिया पर बैठकर बीड़ी सिगरेट पीने वाले मुसलमानों की क्रूरता तथा आक्षेप से भरी परस्पर की बातचीत—"ये लो, यह आ गया, आ गया, इसी को सम्राट औरंगजेब पहाड़ी चूहा कहा करते हैं! अब देखें, क्या होता है, सम्राट इसके साथ किस तरह का व्यवहार करते हैं"—का विषय बनते हुए, अपनी दूकान में रखी सुवर्ण

द्वितोऽयम्, पर्वतोन्दुरुमेनमेवाऽऽचक्षते सम्राजः। दृश्यतां किं भवति, सम्राजः कथमेतेन व्यवहरन्ति ?'—इति सक्रूर-कटाक्षं कथाविपर्योक्रियमाणः;

उभयतः कांश्चित् सक्षणत्कारं स्वापणे समुज्झितानां दीनाराणां गणनाऽऽसक्तान्, अपरान् रत्ननिचय परीक्षण प्रहित सूक्ष्मेक्षणान्, इतरान् अलङ्कार-क्रय-विक्रय-व्यवहार संसक्तान्, अन्यांश्च गवाक्षस्थ-गणिका-गण-भ्रूभङ्ग-निहित-दृष्टीन् वीक्षमाणः सपरिजनो महाराष्ट्रराजो मार्गान्तरं प्राप।

---

कथाविपर्यीक्रियमाणः = कथ्यमानः।

समुज्झितानाम् = त्यक्तानाम्। दीनाराणाम् = सुवर्णमुद्राणाम्। गणनायाम् = सङ्ख्याने, आसक्तान्। रत्ननिचयस्य = हीरकादिव्रातस्य. परीक्षणे = युक्तायुक्तत्वविवेचने, प्रहितानि, सूक्ष्माणि = सूक्ष्मदर्शीनि, ईक्षणानि = नयनानि यैस्तान्। अलङ्काराणाम् = आभरणानाम्, क्रय विक्रयव्यवहारे, संसक्तान् = निरतान्। गवाक्षस्थस्य, गणिकागणस्य= वारस्त्रीव्रजस्य, भ्रूभङ्गे, निहिता., दृष्टयः = नेत्राणि, यैस्तान्। सपरिजनः = सपरिकरः। मार्गान्तरम् = द्वितीय पन्थानम्।

---

मुद्राओं की झनझनाहट भरी गणना में आसक्त सूक्ष्म दृष्टि से रत्न समूह के परीक्षण में संलग्न, आभूषणों की खरीद बिक्री में निमग्न तथा खिड़कियों के पास बैठी गणिकाओं के भ्रूभंग में बद्धदृष्टि यवनों को देखते हुए वीर शिवाजी दूसरे रास्ते पर पहुँचे (आगे बढ़े)।

वहाँ एक गगन चुम्बी भवन को देखकर उन्होंने पूछा—यह क्या है ? राजकुमार राजसिंह ने उत्तर दिया—महाराज ! यही है 'जुमा मस्जिद' जहाँ प्रति शुक्रवार को आकर यवन लोग अपने इष्ट (देव) की आराधना किया करते हैं।

उसके बाद थोड़ा रास्ता तय करके आगे बढ़ने पर शिवाजी की दृष्टि दूर में खड़ी एक कैलास शिखर जैसी उत्तुङ्ग अट्टालिका पर पड़ी।

तत्र प्रोच्चं पस्त्यमेकमासाद्य पृष्टवान्–किमिदमिति। कुमाररामसिंह उवाच—आर्य! महामज्जिदमिदम्, यत्र प्रतिशुक्रवारं यवना आगत्य इष्टमाराधयन्ति।

परतश्च कियन्तमध्वानमतिक्रम्य सुदूरस्थं कैलासशिखरखण्डाऽऽभं महाहर्म्यमेकं दृष्ट्वा यावत् पृच्छति महाराष्ट्रराज, तावत् स्वयमेव कुमार उवाच यद्—महाराज! ज्यौतिषालयोऽयं मत्पित्रा प्रतिष्ठापितः। अस्मिन् बहूनि शास्त्रोक्तरीत्या निर्मितानि यन्त्राणि सन्ति, यैर्ग्रहाणां गतयोऽनायासेन निर्धार्यन्ते। अथ स उवाच—"कथं न स्यादीदृश एव ज्यौतिष-शास्त्र-पारङ्गतो भारतभूषणं तत्रभवान् जयपुराधीशः?"

ततः पुरतो गच्छन्तः क्षणेन राजद्वारं प्राप्ताः। तत्र कोऽयमिति रोद्धुमुत्सुकाः प्रतीहाराः कुमाररामसिंहेन किमप्युक्त्वा एकेन हस्तेन

प्रोच्चम् = प्रोन्नतम्। पस्त्यम् = सद्मम्। महामज्जिनम् = "जुमा मस्जिद" इति ख्यातम्। आराधयन्ति = सेवन्ते।

कैलासशिखरखण्डस्य, आभेव, आभा यस्य तम्। महाहर्म्यम् = महाप्रासादम्। प्रतिष्ठापितः = निर्मापितः। ग्रहाणाम् = खेचराणाम्। निर्धार्यन्ते = निर्णीयन्ते।

उत्सुकाः = उत्काः। अतिप्रशस्तम् = नितान्तशोभनम्। उन्मुच्य =

उसके विषय में वे रामसिंह से पूछना ही चाहते थे कि रामसिंह ने स्वयम् उनसे कहा—महाराज! इस ज्योतिषालय की स्थापना मेरे पिताजी ने की है। इसमें ज्योतिःशास्त्रोक्त रीति से निर्मित बहुत से ऐसे यन्त्र हैं, जिनके माध्यम से ग्रहों की गति का अनायास परिज्ञान हो जाता है। यह सुनकर शिवाजी ने कहा—भारत भूषण जयपुर महाराज ज्योतिषशास्त्र में इस प्रकार पारङ्गत क्यों न हों!

इस प्रकार से आगे बढ़ते बढ़ते वे राजदरवाजे के पास पहुँच गए। वहाँ "यह कौन है" ऐसा कहकर द्वारपाल लोग उन्हें रोकने ही वाले थे कि तबतक रामसिंह ने उनसे कुछ कहा और उनकी बात सुनकर वे द्वारपाल

प्रणम्य बद्धपङ्क्तय एकतः स्थिताः। एते चान्तः प्रविश्यातिप्रशस्तं स्थानमेकं प्राप्ताः। कुमार-सम्मत्या तत्रैव यानमुन्मुच्य प्रचलिताः। गौरसिंहः, माल्यश्रीकः, भूषणश्च स्वस्वसैन्धवास्त्यक्त्वाऽनुसृताः, तदवलोक्य कुमाररामसिंहेनोक्तम्—

किं भवन्तोऽपि? अथवा, अस्तु, सुवर्णदण्ड-धारिणां निकटे स्थास्यते भवद्भिः।

एवं तस्यां कक्षायां बहून् पुष्परथान् वाजिनो गजान् क्रमेलकांश्चावलोकयन्तो विविध-मण्डलेश्वर-यातायात सङ्कुलं मार्गमाश्रित्य द्वितीयं द्वारमायाताः। तत्प्रतीहारा अपि कुमारेण किमपि दत्तेङ्गिता मार्गं ददुः। तदन्तः प्रविश्य, पुनरेकं प्रशस्तं प्राङ्गणं प्राप्य,

परित्यज्य। अनुसृताः = पश्चाच्चलिताः।

सुवर्णदण्डधारिणाम् = हैरण्यदण्डग्राहिणाम्। न केवल दण्डधारिणामपितु सुवर्णदण्डधारिणामिति कथयता स्मारितं लौकिकं कथानकम्—"ताडितुम्, पर लोहितोपनहा"।

कक्षायाम् = प्रकोष्ठे। पुष्परथान् = चक्रयानानि। क्रमेलकान् = उष्ट्रान्। विविधानाम् = अनेकेषाम्, मण्डलेश्वराणां यातायातैः, सङ्कुलम् = व्याप्तम्। दत्तेङ्गिताः = प्रहितचेष्टिताः। प्राङ्गणम् = अजिरम्।

शिवाजी को सलाम करके एक कतार में खड़े हो गये। भीतर घुसने के बाद वे लोग एक बड़े ही अच्छे स्थान पर पहुँचे। कुमार रामसिंह की सम्मति से वहीं अपनी सवारी छोड़कर आगे बढ़े। इधर गौरसिंह, माल्यश्रीक तथा भूषण कवि भी अपने अपने घोड़े छोड़कर उनके पीछे चले। यह देखकर राजकुमार रामसिंह ने कहा—क्या आप लोग भी चलेंगे? अथवा चलिये, कोई बात नहीं। सोने के दण्ड को धारण करने वालों के पास आप लोग रुक जायेंगे।

इस प्रकार पहले कक्ष में अनेक पुष्परथों, घोड़ों, हाथियों और ऊँटों को देखते हुये वे लोग अनेक मण्डलेश्वरों के यातायात से व्याप्त मार्ग से द्वितीय द्वार पर पहुँचे। दूसरे द्वार के प्रतीहार भी रामसिंह का इशारा पाकर उन

महाराष्ट्रराजोऽवालोकयद्—

मध्ये विशालमजिरम्, परितश्च सार्द्ध-हस्त-द्वयोच्छ्राया वेदिका, ततश्च परं सकाच-पट्टिक-हरित-कपिश-श्यामलादि-रञ्जित कपाटानि कोष्ठानि सन्ति। वेदिकाया उपरि क्वचित् सौवर्ण्यो दन्तावल-ग्रैवेयक-घण्टा निर्मीयन्ते, परतः पाटीर स्कन्ध-निर्मितेषु कवाटेषु रत्नकुसुमानि विरच्यन्ते, अन्यतः सैन्धव-शृङ्गाराय स्थूलमौक्तिकाना हारा गुम्फ्यन्ते, इतरत कौशेयास्तरणानां प्रान्तेषु सौवर्ण-

विशालम् =सुविस्तृतम्। सार्धहस्तद्वयस्य, उच्छ्रायः = औन्नत्यं यस्याः सा। वेदिका = वितर्दिका। सकाचपट्टिकाः = काचपट्टिकासहिताः, हरितकपिशश्यामलादिभिः = वर्णैः रञ्जिताः कपाटा येषु तानि। सौवर्ण्य = चामीकरनिर्मिता। दन्तावलानाम् = करिणाम्, ग्रैवेयकघण्टाः = ग्रीवाभूषणभूताः घण्टाः। निर्मीयन्ते = विरच्यन्ते। पाटीरस्य = चान्दनस्य, स्कन्धैः=शाखाधिभागैः। "अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरो" इत्यमरः। निर्मितेषु। कवाटेषु=अररेषु। रत्नानाम्= हीरकादीनाम्, कुसुमानि = पुष्पप्रतिमाः। सैन्धवानाम् = घोटकानाम्, शृङ्गाराय - भूषणाय। स्थूलानाम् = महताम्, मौक्तिकानाम् = मणीनाम्। हाराः = कण्ठाभरणानि। गुम्फ्यन्ते = ग्रथ्यन्ते। कौशेयास्तरणानाम् = पट्टसूत्रनिर्मितविष्टराणाम्। प्रान्तेषु = कोणेषु, चरमांशेषु च।

सर का मार्ग खाली कर दिया। उस दूसरे द्वार में घुसकर पुनः महाराष्ट्रराज जब एक अन्य सुन्दर प्राङ्गण में पहुँचे तो उन्होंने देखा बीच में एक बहुत बड़ा प्राङ्गण था, उसकी चारों तरफ ढाई हाथ ऊँची वेदी बनी हुई थी, उसके बाद (भीतर) कई कमरे बने हुये थे जिनकी रङ्ग बिरङ्गी किवाड़ियों में शीसे लगे हुये थे। वेदी के ऊपर कहीं तो हाथियों के गले में लटकाये जाने वाले सोने के घण्टे बनाये जा रहे थे, कहीं चन्दन की लकड़ी की बनी किवाड़ियों पर रत्नों से फूल बनाये जा रहे थे, कहीं घोड़ों को सजाने के लिए बड़े-बड़े मोतियों के हार गूँथे जा रहे थे, कहीं रेशमी कपड़ों की किना

सूत्र-ततयः सीव्यन्ते, ततो राजतच्छत्राणां परिधिषु हीरकजालानि योज्यन्ते, इतश्च हाटकमञ्चानां दण्डेषु मरकत कुसुमानि निर्मीयन्ते।

एवं विचित्रं वैभवं विलोकयन्तः सर्वे तृतीयं राजद्वारमागताः। तत्प्रवेश-समये कुमारेण कथितम्—"कक्षायामस्यां सर्वैर्मौनेन गन्तव्यम्। पाद-क्षेपोऽपि निःशब्द एव विधेयः"। ततस्तथैव तदपि द्वारं प्रविश्यावलोकितं यत् पन्थानमुभयतः पदे पदे सौवर्णपात्राधाराः सकुसुमाः क्षुपानन्तरं क्षुपाः, मध्ये मध्ये च सौवर्ण राजतादि-पञ्जरस्थाः पुंस्कोकिलाः, कीराः, सारिकाः, कल-विङ्काः, लावाः, चकोराः, चातकाः, अन्ये च बहवो विविधवर्णाश्चपलित-

---

सौवर्णसूत्रततयः = हैरण्यतन्तुलताः। सीव्यन्ते = सूच्या स्यूयन्ते। राजतच्छत्राणाम् = रजतनिर्मितातपत्राणाम्। परिधिषु = प्रान्तभागेषु। हीरकाणां जालानि = समूहाः। योज्यन्ते = सम्मेल्यन्ते। हाटकमञ्चा-नाम् = चामीकरमञ्चानाम्। मरकतकुसुमानि = मरकतमणिकुसुमानि।

वैभवम् = सम्पत्तिम्, पादक्षेपः = चरणपातः, सौवर्णपात्राधाराः = हैरण्यभाजनाश्रयाः, सकुसुमाः = सप्रसूनाः, क्षुपाः = अदीर्घशाखावृक्ष-मूलाः, "ह्रस्वशाखाशिफः क्षुपः" इत्यमरः। पुंस्कोकिलाः = पिकाः। कल-विङ्काः = चटकविशेषः। लावाः = वर्तिकाभेदाः। चकोराः = चन्द्रिकाप्रियाः,

---

रियों पर सोने की जड़ी लगाई जा रही थी, कहीं चाँदी के बने छातों की परिधियों में हीरे लटकाये जा रहे थे और कहीं सुवर्ण निर्मित लट्वादण्ड में मरकत मणि के फूल बनाये जा रहे थे।

इस प्रकार राजधानी के विचित्र वैभव को देखते हुए वे तीसरे द्वार पर पहुँचे। उस कक्षा में प्रवेश करते समय राजकुमार रामसिंह ने कहा—इस कक्षा में चलते समय कुछ आवाज नहीं होनी चाहिये। पैर भी बहुत धीरे-धीरे रखना है। उसके बाद राजकुमार कथित रीति से ही शनैः-शनैः जब सब आगे बढ़े तो उन लोगों ने देखा कि उस कक्षा में मार्ग की दोनों तरफ सोने के गमलों में फूलों से लदी झाड़ियाँ लगी थीं और बीच बीच में स्वर्ण चोंचोंवाली, स्वर के सुनाने से प्रेक्षकों के मन के आकर्षक, पूँछ के सकोच-

चञ्चवः पक्षति-कण्डूयन-मनोहराः, पुच्छ-प्रसारण-सङ्कोचन-चञ्चलाः, वीणा-रणन-स्पर्द्धि-कूजिताः, दाडिम-द्राक्षाखण्ड-त्रोटन-तत्पर-त्रोटयः, आरोहमारोहं शलाकोपवेशनिका आन्दोलमान्दोलं च पुनरधः प्रपतन्तः पक्षिणः समुल्लसन्तीति । पार्श्वद्वयेऽपि सौरभ पटल-व्याप्त-दिगन्तरमुद्यानम् ; तदन्तस्थ-कुञ्जेषु च क्वचित् क्वचिद् वीणावादः । सम्मुखमेव सुदूरं महान् प्रासादः, तत्संलग्नैव महती हस्त-त्रयोच्छ्राया वेदिका, तदुपरि तादृशमेव वेदिकान्तरम् , तस्यापि

---

व्याताः । चपलितचञ्चवः = चञ्चलितत्रोटयः । पक्षतिकण्डूयनेन = पक्षमूलतर्जनेन, मनोहराः = चेतोहराः । पुच्छाना प्रसारणे = विस्तारणे, सङ्कोचने = आकुञ्चने, चञ्चलाः = चपलाः । वीणारणनस्य = वीणाध्वनेः, स्पर्धि कूजित येषा ते । दाडिमद्राक्षाखण्डाना त्रोटने = खण्डने, तत्पराः = निरताः, त्रोटयः = चञ्चवो येषा ते । आरोहमारोहम् = आरुह्याऽऽरुह्य । शलाकोपवेशनिकाः = शलाकादण्डनिर्मितानि उपवेशस्थानानि । आन्दोलमान्दोलम् = हिल्लोलयित्वा हिल्लोलयित्वा । समुल्लसन्ति = शोभन्ते । पार्श्वद्वये = दक्षे वामे च भागे । सौरभपटलेन = सौगन्ध्यसमूहेन, व्याप्तम् , दिगन्तरम् = हरिदन्तराल येन तत् । उद्यानम् = गृहवाटिका । तदन्तस्थेषु = तदन्तरालवर्त्तमानेषु, कुञ्जेषु = लतादिविहितोद-

---

विकास में चञ्चल, वीणा की मधुर ध्वनि के प्रतिस्पर्धी कलरव करनेवाली, दाड़िम तथा दाख के फल को काटने में आसक्त और अपने-अपने ( पिंजड़े में ) बैठने के लिये लगाये हुए तार पर कभी बैठने और कभी उपर से नीचे कूद आनेवाली विभिन्न प्रकार की पक्षियाँ—कोयल, सुग्गा, मैना, कलविङ्क, ( वर्त्तक ) बटेर, चकोर, चातक आदि—सोने, चाँदी के बने पिंजड़ो में सुशोभित हो रही थीं । दोनों तरफ दिग्दिगन्त को सुरभित करने वाले उद्यान लगे हुये थे और उनमें बने कुञ्जों में कहीं-कहीं वीणा बज रही थी । सामने ही बहुत दूर में एक विशाल प्रासाद था, उससे सटी हुई एक तीन हाथ ऊँची बहुत बड़ी वेदी बनी हुई थी, उसके ऊपर भी उसी तरह

चोपरि सौवर्णं महासिंहासनम्, तदेवाध्युषितो भारतसम्राड् दृष्टः।

कुमारेङ्गितेन निपुणं निरीक्ष्य चावगतम्—यत् प्रथम-महावेदिकायां बहवः कलित-कनक दण्डा करवालाऽऽकलित-कटिप्रदेशा अनुचरा बद्धाञ्जलयो बद्धपङ्क्तय उत्थिवास्तिष्ठन्ति।

द्वितीय-वेदिकायां च सौवर्ण-दण्ड-भित्तिका-दत्त-हस्ताः मण्डलेश्वराः सेनापतयश्च उत्थिता एव तिष्ठन्ति। महाराष्ट्रपतिना शनैः पृष्टम्—"किं सभायां केनापि नोपविश्यते ?"

कुमार उक्तवान्—राजकार्यसम्बन्धिनीषु सभासु न केनाप्युप-

---

वेषु। तदेव महासिंहासनमेव। अध्युषितः = अध्यारूढः।

निपुणम् = सावधानम्। कलितकनकदण्डाः = गृहीतसुवर्णदण्डाः। करवालैः = चन्द्रहासैः, आकलितः = सबद्धः, कटिप्रदेशो येषां ते। उत्थिताः = उत्तिष्ठन्तः।

सौवर्णदण्डभित्तिकासु = तिर्यग्भूतैः सौवर्णदण्डैरेव रचितेषु कुड्येषु दत्तहस्ताः = स्थापितकराः। मण्डलेश्वराः = मण्डभूपतयः। उत्थिता एव, न तूपविष्टा।

राजकार्यसम्बन्धिनीषु=राजनीतिकविचारार्थमाकारितासु। कृपापा-

---

की दूसरी वेदी थी और उसके ऊपर सुवर्णनिर्मित महान् सिंहासन था, उसी पर दिल्लीसम्राट् औरङ्गजेब बैठे थे।

राजकुमार के इङ्गित से अवधानपूर्वक उधर देखने पर सबों ने देखा कि पहली विशाल वेदी पर सुवर्ण दण्डों से सम्पन्न कमर में तलवार बान्धे हुये बहुत से अनुचर हाथ जोड़कर पङ्क्तिबद्ध होकर खड़े हैं, दूसरी वेदी पर भी सुवर्णदण्डों के समूह पर हाथ रखकर मण्डलेश्वर तथा सेनापति लोग भी खड़े ही हैं। महाराष्ट्रराज ने धीरे से रामसिंह से पूछा—क्या सभा में कोई बैठते नहीं ?

राजकुमार ने उत्तर दिया—राजकार्य सम्बद्ध सभा में सम्राट् के

प्रविश्यते ऋते सम्राजः। गान-वाद्यादि समितिषु च कृपापात्राण्युपविशन्त्यपि।

एवं मन्दमालपन्त एव ते वेदिसमीपमायाताः, राङ्कवास्तरणाच्छन्नानि सोपानान्याक्रम्य प्रथमवेदिकामारूढा, तत्रैव कुमारेङ्गितो माल्यश्रीको गौरसिंहो भूषणश्च बद्धाञ्जलीनामन्येषां पङ्क्तिं भेजिरे। महाराष्ट्रेश्वरस्तु कुमारेण सह द्वितीयां वेदिमारूढ एव दक्षहस्तेन सम्राजं प्रणनाम, कुमारदर्शितेन पथा च समीपमागत्य महामूल्यां मुद्रिकामेकां निजाञ्जलौ संस्थाप्य, हस्तौ प्रसारितवान्। ततोऽन्यतः क्षिप्तेक्षणे सम्राजि, समीपवर्तिषु कश्चन समचकथत्—

---

श्राणि = दयामाजनानि, विटाः, गणिकाः, तादृशाश्चान्ये।

मन्दम् = शनैः। राङ्कवास्तरणैः=रङ्कुमृगचर्मनिर्मितविष्टरैः, आच्छन्नानि = गोपितानि। बद्धाञ्जलीनाम् = कृतकरसम्पुटानाम्। पङ्क्तिम् = श्रेणीम्। भेजिरे = शिश्रियिरे। महामूल्याम् = महार्घाम्। मुद्रिकाम् = अङ्गुलीयकम्। निजाञ्जलौ = स्वीयकरसम्पुटे। क्षिप्तेक्षणे = प्रेरितनयने। समीपवर्तिषु=आसन्नेषु। शिवराजः 'रिक्तहस्तेन नोपेयात्' इति सोपायन।

---

अतिरिक्त कोई भी व्यक्ति बैठता नहीं। हाँ, गीत-वाद्य आदि की सभाओं में जो सम्राट् के कृपापात्र हैं वे बैठ भी जाते हैं।

इस प्रकार धीरे-धीरे बातचीत करते करते वे वेदी के पास पहुँच गये। रङ्कु मृगों के चर्म से आवृत सोपान के माध्यम से वे प्रथम वेदिका पर चढ़े और वहीं राजकुमार के इङ्गित से माल्यश्रीक, गौरसिंह तथा भूषण कवि भी हाथ जोड़कर पङ्क्तिबद्ध होकर खड़े अनुचरों के साथ खड़े हो गये। महाराष्ट्रराज शिवाजी ने राजकुमार रामसिंह के साथ दूसरी वेदी पर चढ़ते ही दायें हाथ से सम्राट् का अभिवादन किया और कुमार द्वारा निर्दिष्ट मार्ग से सम्राट् के पास जाकर अपनी अञ्जलि में एक बहुमूल्य अङ्गूठी रख कर हाथ फैला कर खड़े हो गए। उसके बाद दूसरी ओर देखते हुए सम्राट्

"जगत्पालकानां करुणाऽवलोकनं सभाजयति महाराष्ट्र-देशीयः कश्चित् शिववीरः"—इति ।

* अथ दृष्टिं परिवर्त्य वाचंयम एव, स्वहस्तेन मुद्रिकां जग्राह दिल्लीश्वरः, पाञ्चसाहस्रिकैश्च सेनापतिभिः सह उपस्थातुं मन्दमुक्तवान्।

तदाकर्ण्य किरात-रसमिव पिबन् महाराष्ट्रराजः, सकष्टं ततो बभ्राम, कुमाराननदृशाटष्टिश्च मन्दमुक्तवान्—किं शिवः पाञ्चसाहस्रिकः ? यदि सम्राट् कदाचन महाराष्ट्र-देशं यास्यति; तदा द्रक्ष्यति कति पाञ्चसाहस्रिकाः शिवं चामरैर्वीजयन्ति ?—इति । तेन चक्षुषैव वारितोऽरुणमुखस्तूष्णीमस्थात्। कियत्क्षणानन्तरमेव सभाभङ्गो

जगत्पालकानाम्=ससाररक्षकाणाम् । "जहाँ-पनाह" इति तत्रत्यः शब्दः । करुणया=दयया, अवलोकनम् = दर्शनम् । सभाजयति=प्रार्थयते ।
* परिवर्त्य = मोटयित्वा । वाचयम एव = मौनी एव । पाञ्चसाहस्रिकैः = पञ्चसहस्रसेनारक्षकैः ।
किरातरसमिव = तिक्तरसमिव । तेन = रामसिंहेन । चक्षुषैव = नेत्रेणैव । वारितः = निषिद्धः । अरुणमुखः = रक्काननः । सभाभङ्गः =

से किसी समीपवर्ती व्यक्ति ने निवेदन किया—महाराष्ट्र देश के एक शिवाजी नाम के वीर जगत्पालक श्रीमान् की करुणादृष्टि के लिये प्रार्थी हैं ।

उसके बाद अपनी दृष्टि फेरकर बिना कुछ कहे ही दिल्लीश्वर ने अपने हाथ से शिवाजी की अञ्जलि में पड़ी अङ्गूठी उठा ली और पाँच हजार सेनाओं के अधिपतियों के साथ स्थित रहने के लिये रामसिंह से धीरे से कह दिया ।

इस बात को सुनते ही शिवाजी वहाँ से इस प्रकार दुःखी हो कर लौट गये जैसे वहाँ उन्हें तीता ( किरात ) रस पीने को मिला हो, और कुमार रामसिंह के मुख की ओर देखते हुए धीरे से कहा—क्या शिव पाँच ही हजार सेनाओं का स्वामी है ? यदि सम्राट् कभी महाराष्ट्र देश जाएंगे तो देखेंगे कि कितने पाञ्चसाहस्रिक शिव के लिए चामर झल रहे हैं । लेकिन राजकुमार

जात । दिल्लीश्वरः सिंहासनादुत्तीर्य, पृष्ठत एवावरोधं प्रविष्टः, जनसमूहश्च क्रमशो बहिर्निरगात् ।

दिल्लीनगरस्य मध्य एव महाहर्म्यमेकं महाराष्ट्र-पतेर्निवासाय स्थिरीकृतमासीदिति तत्रैव स कुमारेण प्रापितः । प्रात्यहिकावश्यक वस्तुजातेन कैश्चिन्मात्यश्रीकादिभिर्वीरैश्च सह स तत्र स्थितः । पत्त योऽश्वारोहाश्च तत्रैव शिविरे स्थापिताः ।

महाराष्ट्रराजावहेलनावलोकनेनेव ग्लानः, यवनाऽऽखण्डलस्य दुरभिसंधिं जानान इव पाण्डु-मुख-मण्डलः, राघवाचार्य-कथि-

समितिविसर्जनम् । अवरोधम् = अन्तःपुरम् । निरगात् = निष्क्रान्तः ।

प्रात्यहिकावश्यकानाम् = प्रतिदिनापेक्षितानाम्, वस्तूनाम्, जातेन समूहेन ।

महाराष्ट्रराजस्य, अवहेलनस्य = तिरस्करणस्य, अवलोकनेन = दर्शनेन । ग्लान इव = क्षीणहर्ष इव । यवनाखण्डलस्य = म्लेच्छेन्द्रस्य । दुरभिसन्धिम् = दुर्विचारम् । जानान इव = विदन्निव । पाण्डुमुख

द्वारा आँख के इशारे से रोके जाने पर क्रोधारुण मुख शिवाजी चुप हो गये । कुछ ही देर में सभा समाप्त हुई । दिल्लीश्वर अपने सिंहासन से उठकर पीछे से ही अपने अन्तःपुर चले गए और अन्य लोग भी क्रमशः वहाँ से बाहर चले आए ।

दिल्ली के बीच ही महाराष्ट्रपति शिवाजी के लिये पहले से ही एक विशाल प्रासाद निश्चित था और राजकुमार रामसिंह उन्हें वहाँ ले गये । दैनिक सामग्रियों तथा माल्यश्रीक आदि अपने वीर बन्धुओं के साथ शिवाजी वहीं ठहरे । उनकी सेना तथा घुड़सवार भी वहीं एक शिविर में रख दिये गये ।

उतने में ही प्रायः महाराष्ट्रराज के अपमान से ही हर्षहीन, यवनाधिपति औरङ्गजेब के कपट प्रबन्ध के परिज्ञान से ही शायद पीले पड़ गये मुख वाले और राघवाचार्य की बातों को शिवाजी द्वारा की गई उपेक्षा

तं नाङ्गीचकार महाराष्ट्रराजः-इति च कोपेनेव शोणो भास्वानस्तं जगाम।

कुमाररामसिंहोऽपि पुनर्द्रक्ष्याम्यार्यमित्युक्त्वा निवृत्तः। महाराष्ट्रराजोऽपि च तदागारस्यान्तः प्रविवेश।

इति दशमो निश्वासः।

---

मण्डलः = पीतासवखण्ड । कोपेनेव = क्रोधेनेव। शोण = रक्त । अस्त जगाम = अस्ताचल भेजे।

इति श्रीशिवराजविजयवैजयन्त्यां दशमनिश्वासविवरणम्।

---

के कारण महाराष्ट्रराज के ऊपर हुए कोप से ही प्राय लालवर्ण वाले भगवान् सूर्य भी अस्तमित हो गये।

कुमार रामसिंह भी 'फिर श्रीमान् से मिलेंगे' ऐसा कह कर अपने निवास गृह को लौट गये और महाराष्ट्रराज भी उस प्रासाद के भीतर चले गये।

शिवराजविजय का दसवाँ निश्वास समाप्त।

॥ श्रीः ॥

# एकादशो निश्वासः

"शेते करी मशक पाद-विपादिकायाम्"

—स्फुटम्

"उपकारिणि विस्रब्धे शुद्धमतौ यः समाचरति पापम् ।
तं जनमसत्यसन्धं भगवति वसुधे ! कथं वहसि ?"

—हितोपदेशः ।

---

एकादशे शिववीरस्यावरङ्गजीव-कारागृहे बन्धनं विवर्णयिषुरिति तदुपक्षेपकं प्रतीकपद्यमुद्धरति । तत्राऽऽद्यम्—शेते करी मशकपादविपादिकायामिति । मशकस्य=अतिक्षुद्रतरस्य तथाऽन्नैव ख्यातस्य जीवस्य, पादे=चरणे, या विपादिका=स्फोट, तस्याम् । यद्यपि "पादस्फोटो विपादिका" कथ्यते कोषकारैस्तथापि समस्यायितेऽत्र पद्ये पादपदस्य पृथगुच्चारणेन स्फोटमात्रार्थकत्वमेव विशिष्टवाचकपदन्यायादित्यवधारणीयम् । मशकचरणे ताहशलघुतमे, यत्र विपादिकोद्भूतेश्चर्चाया अप्यसम्भव, किन्तु दैवाद्वाऽन्यस्माद्वा कस्माच्चिदैवप्रभूतात्कारणव्रातात् सम्भूता विपादिका, तस्यां करिवरो महान् जीव सुखेन निद्रातीत्यसम्भवपरम्परा यथा, तथा शिववीरस्य कारावासोऽपि दैवदुर्विपाकघटित एवेति हार्दम् ।

---

"कहीं विशाल गजराज को भी एक मच्छर के पैर की बिवाई में सोता है ?"

—स्फुटक

"भगवति वसुधे ! उस नीच तथा असत्यप्रतिज्ञ मनुष्य का भार तूँ कैसे सह पाती है जो विश्वस्त, निष्कपट और उपकारी व्यक्ति के साथ भी दुर्व्यवहार करता है !"

—हितोपदेश

"पुरा सरसि मानसे विकच-सारसालि स्खलत्-
परागसुरभीकृते पयसि यस्य यातं वयः।
स पल्वल-जलेऽधुना मिलदनेक भेकाऽऽकुले
मराल-कुल नायकः कथय रे! कथं वर्त्तताम्?"॥

—भामिनीविलासे पण्डितराजः।

स चाथ शिववीरः स एव; य कियदेव पूर्वं दिल्लीकलङ्कस्य तनया तनयञ्च समार्पयत् प्रादर्शयच्च महतीं वीरता गोलखण्डीयदुर्गविजये। अयञ्चोपकार शिववीरकृतस्तादृशमुपकार शिववीरादन्यस्तात्कालिक: कोऽपि कर्तुं न समर्थ आसीत्, किंतु सर्वमिदमेकपदे व्यस्मार्षीदवरङ्ग इति हितोपदेशीयेन पद्येनोपक्षिपति उपकारिणीति। उपकारिणि = कृतमहोपकृतौ। विसब्धे = विश्वस्ते। शुद्धमतौ = अकपटबुद्धौ। यः = दुर्विनीतामेसर', निर्विवेक.। साधुसमाजगर्हितः। पापम् = घृणितमाचारम्। समाचरति=विदधाति। वसुधे! = वसुन्धरे!। असत्यसन्धम् = असत्यप्रतिज्ञम्, तम् = पूर्वोक्त पापिनम्। जनम् = मनुष्यमेव, नतु राक्षसम्।। कथम् = केन प्रकारेण। वहसि = धारयसि। न हि गिरिनदनदीशादिभि पृथिव्यास्तथा भारो यथा मानवाकारैः परवञ्चनमाननिपुणैर्विश्वासघातिभिरिति स्मरन्ति धर्मशास्त्रकारा नीतिकाराश्च।

अथ दैवतन्त्रमित्यवधार्य जयसिंहादिभिः साकं सोढव्यः शिववीरेणापि दुर्वारविपद्व्रात इति वेदन पण्डितराजीयया हंसान्योक्त्या कर्त्तव्यमुपक्षिपति-पुरेति। पुरा = कियदेव पूर्वम्। मानसे सरसि = प्रालेयाद्रेरुत्तरस्या कैलासाद्रेरन्तिके कौवेरैर्यक्षैमिरधिष्ठिते पौराणिकैरनेकधा समुद्गीतगुणगणे मानसाख्ये सरोवरे। विकचानाम् = विकसितानाम्, सारसानाम् =

"अरे देव! यह तो बतला कि जिस राजहंस ने आज तक अपना जीवन विकसित कमल-पुष्पों से गिरते हुए पराग से सुरभित जल वाले मानसरोवर में बिताया वह अब मेढकों की जमघट से व्याकुल इस छोटे तालाब में कैसे रह सकता है!"

—भामिनीविलास में पण्डितराज

निशीथप्राया रजनी, उष्णः कालः, समीरो न सरति, गृहे गृहे बालानां रोदनस्याऽऽर्त्तनादा व्यजन-चालनस्य च सणत्कारो निद्रा

---

सरसीरुहाणाम् , आले = राजेः, स्खलद्भिः = पतद्भिः, परागैः = धूलिभिः, सुरभीकृते = सुगन्धीकृते । पयसि = वारिणि । यस्य = भाग्यशालिनः । वयः = अवस्था । न दिनानि, मासा , वर्षाणि वा-अपि तु वयः । यातम् = व्यतीतम् । स = एष । मरालकुलस्य = हंसान्वयस्य, नायके = श्रेष्ठ । अधुना = साम्प्रतम् । मिलद्भिः = घटमानैः । अनेकैः = असङ्ख्यातैः , भेकैः = मण्डूकैः । आकुले = व्याप्ते । पल्वलस्य = अल्पोदकसरस , जले = नीरे । कथम् = केन प्रकारेण । वर्त्तताम् = विद्यताम् । रे ! = नीचसम्बोधनम् । कथय = प्रतिपादय । अप्रस्तुतस्य मरालस्य प्रशंसया प्रस्तुतस्य कस्यचन महाशयस्य पूर्वं समुन्नतावस्थितस्य पश्चात् कैश्चित्कारणैः स्वस्थानमपहाय गच्छतोऽन्यत्र स्थातुं कैश्चिन्नीचैरभिहितस्योदात्तभावप्रदर्शनप्रतिपादनादप्रस्तुतप्रशंसालङ्कारः । अयं ग्रन्थकर्त्ता कविः शाहजहाननृपतेश्छाया- याम् "दिल्लीश्वरो वा जगदीश्वरो वा" इति स्वशर्थनिर्वाहार्थं भणत पश्चात्ततो विराग सञ्जातः पण्डितराजस्येति स्वीयमेवात्र घटनाचक्रं निबध्नातीति मर्मविदः । भवति चैतत्प्रमाणीकृत तेन स्वयं वर्णिते स्वजीवनवृत्तान्ते—

"सम्प्रत्युज्झितवासना मधुपुरीमध्ये हरिः सेव्यते" इति पद्यखण्डे ।

अन्यच्च—

यस्मिन् खेलति सर्वतः परिचलत्कल्लोलकोलाहलै-<br>
र्मन्थाद्रिभ्रमणभ्रमं हृदि हरिद्दन्तावला पेदिरे ।<br>
सोऽयं तुङ्गतिमिङ्गिलाङ्गकवलीकारक्रियाकोविद<br>
क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघव. ॥

इत्यास्ता तावत् । प्राचीनेतिवृत्तान्वेषणपराणा ध्यानाकृष्ट्यै तु यत्किञ्चि- दिदमालपितमिति शम् ।

निशीथप्राया = प्रायोऽर्धरात्रिरूपा । उष्णः कालः = ग्रीष्मसमय । समीर = वायु । न सरति = न चलति । व्यजनचालनस्य = वृन्त-

---

मध्यरात्रि का समय था, गर्मी की ऋतु थी, हवा भी नहीं बह रही

मन्थरानपि व्याकुलयति। जल जलम्, हिम हिमम्, वातो वातः, दाडिम्बरसो दाडिम्बरस, उशीरमुशीरम्, पाटलोदकं पाटलोदकम्, चन्दन चूर्णं चन्दन चूर्णम्—इति, मशका मशकाः, मत्कुणा मत्कुणाः, कण्डूः कण्डूः, स्वेद॰ स्वेदः, इति च श्रूयते अट्टेभ्यो ध्वनिः। तावद् भेरी-नाद-सहचरितेन वशी-नादेन समारब्धो मध्य निशीथ-सूचको विहागरागाऽऽलाप। कचिचाश्रूयत नवोढाना मञ्जीर किङ्किणी-नूपुर वलय शिञ्जितम्। एतद्रस भञ्जकश्चाऽऽकर्णि प्रहरिणा "जागृहि भो! जागृहि, गाढोऽयमन्धकारः"—

---

वीजनस्य। निद्रया मन्थरान् = आलस्यान्। उशीरम् = नलदम्। "खस" इति हिन्दी। पाटलोदकम् = 'गुलाबजल" इति हिन्दी। मत्कुणा = रक्तबीजा। कण्डू = खर्जू। अट्टेभ्य = अट्टालिकाभ्य। भेरीनादेन, सहचरितेन = मिलितेन। मध्यनिशीथसूचक = अर्धरात्रबोधक। विहागराग = एतन्नामको रागविशेष। नवोढानाम् = नूतनपरिणीतानाम्। एतस्य रसस्य = शृङ्गारात्मन, भञ्जक = मर्दक।

---

थी, घर घर में बच्चों के क्रन्दन का आर्तनाद और पखे झलने की सनसनाहट नीन्द से अलसाते लोगों को भी व्याकुल कर रही थी। "अरे! पानी लाओ, पानी, अरे! थोड़ा बर्फ भी ले आओ जरा पखा डुलाओ, अनार का रस चाहिए, अनार का रस, अरे भाई! खस की टट्टी"; अरे! थोड़ा गुलाबजल तो ले आओ, गुलाबजल, थोड़ा चन्दन का चूर्ण चाहिए, चन्दन का चूर्ण"", ओह! बहुत मच्छर हैं!, अरे रे! खटमल काट रहा है, खटमल, शरीर में खुजलाहट बहुत है, ओह! बहुत पसीना निकल रहा है"—इसी तरह की आवाज महल्लों से आ रही थी। इतने में ही मध्यरात्रि की सूचना देने वाले विहागराग में भेरीनाद के साथ साथ वशी की तान सुनाई पड़ी। कहीं से नवविवाहिता युवतियों के मञ्जीर, करधनी तथा नूपुरों की झङ्कार भी सुनाई दी और बीच में ही

इति कर्णकषायो नादः।

महाराष्ट्रराजस्तु चिन्ता-सन्तापेनापि तप्यमानो नालभत निद्राम्। अथ उशीर-व्यजनिकामादायाऽऽन्दोलयन्, पर्य्यङ्कं विहाय दाडिम्ब-रस-सितोपल मिश्रितं शीतं सलिलमास्वाद्य, स्वमातुः स्वदेशस्य स्वपुत्रस्य स्वपत्न्याश्च सस्मरन्, बहिरलिन्दमागत्य निर्वाणप्रायं दीपं पुनः सञ्ज्वल्य, तत्रैवाऽऽसन्दीमेकामध्युवास। मनस्येव च चिन्तयितुमारब्धवान्, यद्—

अहह! किं करोमि? क्व गच्छामि? कथं पुनः पुण्यनगरं

---

कर्णकषायः = श्रोत्रकटुः। प्रहरिणाम् = यामिकानाम्।

चिन्तासन्तापेनापि = चिन्तनज्वालेनापि। उशीरव्यजनिकाम् = नल्दवातकरीम्। आन्दोलयन् = सञ्चालयन्। दाडिम्बरसेन = दाडिमद्रवेण, सितोपलेन = शर्करया, मिश्रितम् = मेलितम्। शीतम् = शिशिरम्। स्वमातुः संस्मरन्, "अधीगर्थदयेशां कर्मणि" इति कर्मणि षष्ठी। एवमग्रेऽपि। बहिरलिन्दम् = प्रघाणम्। निर्वाणप्रायम् = समाप्तिं गच्छन्तम्। आसन्दीम् = वेत्रासनिकाम्, "उपान्वध्याङ्वसः" इति कर्मता।

---

उस शृङ्गाररस का विरोधी पहरेदारों का अप्रिय शब्द—जागो, जागो, बहुत अन्धेरी रात है—भी सुनाई पड़ा।

चूँकि महाराष्ट्रराज चिन्तारूपी सन्ताप से भी व्याकुल थे, इसलिये उन्हें नींद नहीं आई थी। उसके बाद महाराष्ट्रराज ने अपना पलङ्ग छोड़ दिया और खस के बने पंखे को झलते हुये; अनार के रस और बर्फ से मिले शीतल जल पीकर, अपनी माता, अपने देश, अपने पुत्र तथा अपनी पत्नी की याद करते हुए बरामदे पर निकल आये और वहाँ बुझती हुई दीपक की बत्ती को थोड़ा उसका कर वहीं एक कुर्सी पर बैठ गए। बैठकर मन ही मन सोचने लग गए—

"अहो! क्या करूँ! कहाँ जाऊँ! फिर पूना को कैसे लौटूँगा! स्वाग

स्यैव फलमेतत् यत्—स्वयमागत्य प्रत्यर्थिनां क्रोडे पतितोऽस्मि। प्रथम-साक्षात्कार एव अनादरं समनुभूतवानस्मि, परं ह्य एव च सन्देशं प्राप्तवानस्मि यद्—भूपति समायां यदुक्तं तत् सम्राजः कर्णशष्कुलिमस्पृशत; तस्यायमेव दण्डो यत्र पुना राजसभायामागन्तव्यमिति। अल्पीयस्यपि मे सेना नगराद्बहिरेव शिविरेऽस्ति। पञ्चषैरात्मीयैः कतिपयैरेव च भृत्यैः सहात्र निवसामि। अत्रत्यं वायुजलमननुकूलमिति छलेन महाराष्ट्रदेश-निवर्तनादेशाय प्रेषितेऽप्यावेदनपत्रे दिल्ली-कलङ्केन विषयान्तरे बहु लिखितमप्याज्ञासम्बन्धे किमपि नालेखि। विनैवाऽऽज्ञां यदि पलायेय; अथ गृह्येय चेद्यवन-हस्तेन

पापम्, तस्य। प्रत्यर्थिनाम् = शत्रूणाम्। प्रथमसाक्षात्कारे = आदिमदर्शने। अल्पीयसी = अतिन्यूना। विषयान्तरे = अन्यसम्बन्धे। पलायेय=गुप्त गच्छेयम्। गृह्येय=गृहीतो भवेयम्, यवनैरिति शेषः॥

पाप का ही यह परिणाम है कि आज मैं स्वयम् अपने शत्रु के पञ्जे में फँस गया हूँ। पहली भेंट में ही अपमान तो सहना ही पड़ा है, साथ ही यह सूचना भी कल मिल चुकी है कि मैंने राज-सभा में जो कुछ बातें रामसिंह से कहीं वे बातें सम्राट् औरंगजेब के कानों तक पहुँच चुकी था और इसलिए दिल्ली सम्राट् ने मुझे यही दण्ड दिया है कि मैं पुनः राज-सभा में नहीं आ सकता। जो कुछ थोड़ी सी सेना भी साथ थी वह भी नगर के बाहर ही शिविर में है। दो चार बन्धुओं तथा कुछ ही सेवकों के साथ यहाँ निवास कर रहा हूँ। यहाँ का हवा-पानी अनुकूल नहीं है—इस छल से यद्यपि मैंने दिल्ली सम्राट् के पास अपने महाराष्ट्र देश लौटने की अनुमति के लिए आवेदनपत्र भी भेजा, परन्तु इस दिल्ली कलङ्क ने अपने उत्तर पत्र में अन्य विषयों में बहुत कुछ लिख कर भी मेरे लौटने के बारे में तो कुछ भी नहीं लिखा है। यदि उसकी आज्ञा पाये बिना ही यहाँ से भाग चलूँगा तो पकड़े जाने पर दुष्ट यवन के हाथों से मृत्यु ही हो जाएगी। अहो!

ध्रुवो मृत्युः ! अहो ! दुरदृष्टम् !" यद् राघवाचार्य्य-संन्यासिनोऽपि न स्वीकृतं वचनम्—इति विचारयन्नेव निष्कुटककुटान्तरालेऽथे अस्पष्टाकृतिं कञ्चन पुरुषमद्राक्षीत्।

"चौरोऽयं लुण्ठकोऽयं सपत्नोऽयम्" इति विचारयन्, सपदि विकोशां छुरिकां हस्ते गृहीत्वोदस्थात्। तस्मिन् किञ्चित् समीपमायाते च ददर्श—यदेको भस्मोद्धूलित-शरीरो विश्लथत्-कच-कुल-समाच्छन्न-पृष्ठ-वक्षःस्थलो लम्बकूर्चो नीलरस-रञ्जित-वसनो वामकर-गृहीत-मृत्तिका-मालो यवन-भिक्षुरायात इति। अथोच्चैः सप्रौढि समपृच्छत्—कस्त्वं रे ! निशीथे ?—इति। स

निष्कुटकेषु=गृहारामेषु, ये कुटाः=वृक्षाः, तेषामन्तरालेषु। अस्पष्टाकृतिम्=अपूर्णावलोक्याकारम्।

सपत्नः=शत्रुः। विकोशाम्=नग्नाम्। भस्मोद्धूलितशरीरः=भूतिच्छुरितगात्रः। विश्लथत्कचकुलेन=विगलत्केशसमूहेन, समाच्छन्नम्=व्याप्तम्, पृष्ठवक्षःस्थलं यस्य सः। लम्बकूर्चः=दीर्घदाढिकः। नीलरसेन=नीलीद्रवेण, रञ्जितं वसनं यस्य स। वामकरगृहीतमृत्तिकामाल=दक्षेतरहस्तधारितमृत्स्नाक्षक। सप्रौढि = सगर्वम्। शुभ-

कितना बड़ा दौर्भाग्य है कि मैंने सन्यासी राघवाचार्य की बात भी नहीं मानी।" इस प्रकार वे विचार कर ही रहे थे कि वाटिका के वृक्षों की आड़ में एक पुरुष की झलक आई। उसे देख कर—

"यह चोर है, लुटेरा है, मेरा शत्रु है—" इस प्रकार सोचते हुए हाथ में खुला छूरा लेकर शिवाजी उठ खड़े हो गए। जब वह पुरुष थोड़ा सा नजदीक आया तो शिवाजी ने देखा कि वह एक फकीर आ पहुँचा था, उसके सम्पूर्ण शरीर में भस्म लिपा हुआ था, लटकती जटाओं से कन्धे, पीठ तथा वक्षःस्थल ढके हुए थे, उसकी दाढ़ी बहुत लम्बी थी, उसका वस्त्र नीले रङ्ग में रंगा था और बायें हाथ में मिट्टी की माला थी। इसके बाद जोरों से उसे डाँटते हुए शिवा जी ने उससे पूछा—

तु मन्दमाह—जनोऽयं कश्चित् शुभ चिन्तको भवतः, शनैरालपनी यमेतेन। तत स कश्चित् श्रुत पूर्व स्वरं कर्णे कुर्वन्नपि परिचेतुम क्षमः पुनरपृच्छत् नावगतं को भवान् ?—इति। स आह— "शुभ चिन्तकोऽय राघवाचार्य्यः संन्यासी"। तदाकर्ण्य महारा ष्ट्रपतिः प्रकाश प्रबलीकृत्य निपुणं निरीक्ष्य, कृत्रिमां जटां कूर्च श्मश्रुपुञ्जञ्च विलोकयन्, मन्द स्मित्वा, उवाच—अवधूत! धन्योऽसि, य एवमपि दयसे। किन्तु पिहितेषु द्वारेषु कुत आया तोऽसि ? स उवाच—प्राचीरमुल्लङ्घ्य, कष्टेनाऽऽयातोऽस्मि। एष उवाच—कथमद्य रूपान्तरम् ? स उवाच—नगरेऽस्मिन्

---

चिन्तकः = कल्याणाभिलाषी। परिचेतुम् = सस्तोतुम्। कृत्रिमाम् = प्रयत्नसम्पादिताम्। अवधूत ! = सन्यासिन् ! पिहितेषु = आवृतेषु। रूपान्तरम् = वेषान्तरम्। वैष्णवेषु=विष्णुभक्तेषु, ऊर्ध्वपुण्ड्रारामनामिभि

---

"अरे ! तुम कौन हो इस मध्यरात्रि में···?" उस फकीर ने मन्द स्वर म उत्तर दिया—'यह व्यक्ति आपके शुभचिन्तकों में ही अन्यतम है। आप धीरे से बात करें।" उसकी आवाज सुनने के बाद यद्यपि शिवाजी को यह आभासित हो चुका कि उसकी आवाज श्रुत पूर्व थी परन्तु वे उसे पूरी तरह नहीं पहचान सके और इसलिए उन्होंने उससे पूछा— "आप कौन हैं ? मैं आपको नहीं पहचान पाया।" उसने उत्तर दिया— "यह आपका शुभचिन्तक राघवाचार्य सन्यासी है।" यह बात सुनते ही शिवाजी ने दीपक की बत्ती उकसा कर अधिक प्रकाश में उन्हें पहचान लिया और उनकी बनावटी जटाओं, दाढ़ी तथा मूँछ देख कर मुस्कराते हुए उनसे कहा—"अवधूत ! आप धन्य हैं, क्योंकि इस रूप में भी आप मेरे ऊपर दया दिखला रहे हैं। किन्तु यह तो बतलाइए कि जब दरवाजे का फाटक बन्द है तो आप यहाँ आए कैसे ?" सन्यासी ने उत्तर दिया— "दीवार का उल्लङ्घन करके बहुत कष्ट से मैं यहाँ आ सका हूँ।" शिवा जी ने पुनः पूछा—"आज आपने वेश क्यों बदल लिया है ?"

वैष्णवेषु प्रपतति सर्वेषां दृष्टिः, न च म्लेच्छावधूतेषु—इति तद्वेषमेवावलम्बितवानस्मि।

तत उपविष्टयोरुभयोर्मुहूर्त्तानन्तरमेवमभूवन्नालापाः—

महाराष्ट्रराजः—कुतः समागच्छत्यार्य्यः ?

राघवाचार्य्यः—व्रत-साधनाय परितो भ्रमामि।

महा०—अपि जानाति कमपि कुशलवृत्तान्तं महाराष्ट्रदेशस्य भवान् ? अपि कुशलिनी मे जननी ? कुशलिनो वा जानपदाः ? अपि वा कुशली शम्भु-कुमारः ?

---

दण्डादिभिः परिचीयमानेषु। म्लेच्छावधूतेषु = यवनसाधुषु। तद्वेषम् = यवनसाधुनेपथ्यम्।

व्रतसाधनाय = अङ्गीकृतनियमनिर्वाहाय।

जानपदाः = देशवासिनः। शम्भुकुमारः = "सुम्भाजी"ति ख्यातो राजकुमारः। इतिवृत्तेषु लिखितम्—"सोऽपि सहैव पित्रा कारागारे बद्धः" इति। अत्र तु वैपरीत्येनोल्लिखित कथावैशिष्ट्यरक्षणायेति वेदितव्यम्।

---

संन्यासी ने उत्तर दिया—"इस नगर में वैष्णवों की ओर सबकी नजर दौड़ जाती है, किन्तु यवन-सन्यासी की ओर नहीं। इसलिए यवन-सन्यासी के वेष में ही मैं यहाँ आया हूँ।"

उसके पश्चात् दोनों बैठ गए और थोड़ी देर के बाद दोनों के बीच निम्न-लिखित रूप में वार्त्तालाप हुआ—

महाराष्ट्रराज—आप अभी कहाँ से आ रहे हैं ?

राघवाचार्य—अपने व्रत की सिद्धि के लिए इधर-उधर घूम रहा हूँ।

महाराष्ट्रराज—क्या आप महाराष्ट्र देश का कुशल-समाचार जानते हैं ? क्या मेरी माता जी सकुशल हैं ? क्या मेरे देश के निवासी सानन्द हैं ? क्या राजकुमार सुम्भा जी सकुशल हैं ?

राघ०— दीनबन्धो ! यादृशस्य महाशयस्य हस्ते महाराष्ट्रभूमि भरण-भार निक्षिप्तवानसि, तादृशस्य शासने न सम्भवत्यकुशल-वार्ताऽपि । जननी च कुशलिनी, श्रीमत एव कुशलाय व्रतमाचरन्ती, क्षामदेहा स्थण्डिलशायिनी हविष्याऽऽहारा च वर्वर्ति ।

महा०—हा मातः ! [ इति मुखं परावर्त्य कांश्चिदश्रु निर्दून्मुमुचत् ]

राघ०—महाराज ! न चिन्तनीयं किमपि ! कुशली कुमार शम्भुवीरः, तुरगं चालयन् स्वदर्शनेन प्रजा रञ्जयति । ग्रामे ग्रामे गृहे गृहे मन्दिरे मन्दिरे च परमात्मा समाराध्यते ।

महा०—अपि मम कुशलाय परमेश्वर आराध्यते ?

---

महाराष्ट्रभूमेः, भरणभारम् = रक्षणधुराम् । अकुशलवार्त्ताऽपि = अमङ्गलकथाऽपि । क्षामदेहा = कृशकाया । स्थण्डिलशायिनी = भूमिस्वापिनी । हविष्याहारा = पायसभोजना ।

---

राघ०—दीनबन्धो ! जिस सज्जन के हाथों में आपने महाराष्ट्रदेश के संरक्षण का भार दिया है उस व्यक्ति के शासनकाल में अकुशलता की तो कोई बात ही नहीं हो सकती । आपकी माताजी भी सकुशल हैं और आपके कुशल की कामना से जमीन पर सोती हुई तथा हविष्याद्य भोजन करती हुई जो व्रत कर रही हैं उससे उनका शरीर दुर्बल हो गया है ।

महा०— हा मात !

[ यह कहकर मुँह फेरकर शिवाजी ने कुछ आँसू बहाए ]

राघ०—महाराज ! चिन्ता की कोई बात नहीं है । सकुशल राजकुमार शम्भाजी घोड़ा फेरते समय अपने दर्शन से प्रजा को आनन्दित कर रहे हैं । गाँव-गाँव में, घर घर में और मन्दिर-मन्दिर में ( आपके कुशल की कामना से ) परमात्मा की आराधना की जा रही है ।

महा०—क्या मेरे कुशल के लिये लोग परमेश्वर की आराधना भी कर रहे हैं ?

राघ०—वीरवर! भवत्प्रजासु के न भवन्तं प्राणाधिकं मन्यन्ते? सम्प्रति क्वचन महारुद्र-मुद्रया रुद्रोऽभिषिच्यते, क्वचन सहस्रैर्गृहीत-ब्रह्मचर्य्याणां ब्राह्मणानां समन्त्र–सम्पुट–चण्डीपाठैर्भगवती दुर्गाऽऽद्रियते, क्वचिच्च ग्रह-मातृकादि-मण्डल-मण्डितस्य मण्डपस्याधस्ताद् वेदमन्त्रैर्भगवान् बृहद्भानुर्हविषा हूयते। किं ब्रवीमि? यदि अल्पमपि भवदमङ्गलं श्रूयेत महाराष्ट्रैः तन्मन्ये कोपकृशानु हेतिभिरखिल भूमण्डलं भस्मसात् क्रियेत।

महारुद्रमुद्रया = महारुद्रयागेन। गृहीतब्रह्मचर्याणाम् = धारिताष्टविधमैथुनत्यागनियमानाम्। समन्त्रसम्पुटं यथा स्यात्तथा चण्डीपाठैः = सप्तशतीमन्त्रजपैः। प्रतिसप्तशतीमन्त्रमाद्यन्तयोर्मन्त्रविशेषोच्चारणपूर्वकं सप्तशतीपाठः सम्पुटपाठः। दुर्गा = दुर्गतितारिणी महामाया। ग्रहाणाम् = सूर्यादीनाम्, मातृकाणाम् = गौर्यादिषोडशसङ्ख्याकानाम्, घृतमातृका चतुष्षष्टियोगिनी-वशोर्धाराणाम्, आदिना, पञ्चलोकपालदशदिक्पाल क्षेत्रपालादीनाञ्च, मण्डले = स्थाने, मण्डितस्य = भूषितस्य। मण्डपस्य = तृणादिनिर्मित परिमित, सद्वारादिसङ्ख्यासवलितस्यान्तर्गृहस्य। बृहद्भानुः = दहनः। हविषा = हवनीयेन वस्तुना। हूयते = तर्प्यते। कोप एव कृशानुः = वह्निः, तस्य, हेतिभिः = ज्वालाभिः। भस्मसात् = दग्धम्।

राघ०—वीरवर! आपकी प्रजा में कौन ऐसा व्यक्ति है जो आपको अपने प्राणों से भी बढ़कर नहीं मानता? कहीं महारुद्र-मुद्रा से रुद्राभिषेक किया जा रहा है, कहीं असंख्य ब्राह्मण ब्रह्मचारियों द्वारा मन्त्रसम्पुटित सप्तशती पाठ से भगवती दुर्गाजी की आराधना की जा रही है और कहीं ग्रह तथा षोडश मातृकाओं के मण्डलों से मण्डित मण्डप के भीतर वेदमन्त्रों के उच्चारण से भगवान् अग्निदेव को हव्य पदार्थ की आहुति दी जा रही है। मैं तो कहता हूँ कि यदि महाराष्ट्र देशवासी आपके कुछ भी अमङ्गल की सूचना पायेंगे तो उनकी क्रोधाग्नि की धधकती ज्वाला से यह समस्त भूमण्डल भस्मसात् कर दिया जाएगा।

महा०—[ किञ्चिदानन्दित इवाङ्गान्यान्दोल्य ] भगवन् ! का क्षमता वराकस्यैतस्य ममामङ्गलमाचरितुम् ? परं भवतो वचनमनङ्गीकृत्य समायातोऽस्मीति तत्फलमेव भुञ्जे।

राघ०—तत्किं दिल्लीश्वरेण तु कृतसन्धिः श्रीमान् ?

महा०—किमिव लज्जयते मां स्वामी ? सर्वं विदितमार्य्याणाम्।

राघ०—अत्रावस्थानं न रोचेत चेदद्यैव प्रतिष्ठताम्। को नाम वागुरया समीरणमिव भवन्तं रोत्स्यति ?

महा०—मन्ये कोऽप्युपाय उद्भावित. पलायनस्य !

---

आन्दोल्य = सञ्चाल्य। क्षमता = शक्तिः। भुञ्जे = अनुभवामि। लज्जयते = लज्जित कुरुते।

प्रतिष्ठताम् = प्रस्थानं क्रियताम्, भवानिति शेषः। वागुरया = मृगबन्धन्या। समीरणमिव = वायुमिव। उपमाविशेषः।

---

महा०—[ कुछ प्रसन्न जैसी मुद्रा में अपने अङ्गों को हिलाकर ] भगवन् ! इस दुष्ट यवन में कहाँ से इतनी शक्ति आयेगी कि यह मेरा अमङ्गल कर सकेगा। फिर भी आपकी बात न मानकर जो मैं यहाँ आ गया उसी का यह फल भोगना पड़ रहा है।

राघ०—अब क्या ! आप ने तो दिल्लीसम्राट् से सन्धि कर ही ली है।

महा०—आप मुझे इतना लज्जित क्यों कर रहे हैं ? आप तो सब कुछ जानते ही हैं।

राघ०—यदि यहाँ रहने का मन न करे तो आज ही आप चल दें। जिस प्रकार वागुरा ( जालविशेष ) से वायु को कोई नहीं रोक सकता उसी प्रकार आपको कौन रोक सकता है ?

महा०—मैं समझता हूँ कि आपने भगने का कोई उपाय सोच लिया है ?

राघ०—किमज्ञातमार्य्याणाम् ?

महा०—किमिति ?

राघ०—भगवन् ! अनायासेनायान्धतमसे गृहीत-यवन-भिक्षु-वेषो मया सह निःसरतु श्रीमान् !

महा०—ततः ।

राघ०—यद्यपि नगरस्यास्य परित उच्चा भित्तिरस्ति, तथाऽपि पूर्वत एकत्र महान् सशङ्कुग्रन्थि-वंश एकः स्थापितोऽस्ति, तदवलम्ब्य कुड्योल्लङ्घनमनायाससिद्धं महाराष्ट्रवीराणाम् । परतश्च शृङ्खलैका संलम्बते, तदालम्ब्य त्रुटिमात्रेण भूमिं स्प्रक्ष्यति। तत्र वृक्षच्छायायां निलीन एकोऽश्वः । तेन क्षणेन किञ्चिद् गत्वैव

उच्चा = उन्नता । भित्तिः = कुड्यम् । शङ्कुग्रन्थिभिः सहितो वंशः सशङ्कुग्रन्थिवंशः = अवमीकृतो वेणु । स्थापितः = रक्षितः । कुड्यस्य, उल्लङ्घनम् = उत्प्लवनम् । शृङ्खला = दाम लौहम् । त्रुटिमात्रेण = निमेष-

राघ०—क्या आप इस चीज को जानते नहीं ?

महा०—जी नहीं, जरा बतलाएँ तो

राघ०—भगवन् ! आज ही इस घने अन्धकार में यवन भिक्षु का वेष धारण कर अनायास ही आप मेरे साथ यहाँ से निकल पड़ें ।

महा०—उसके बाद ?

राघ०—यद्यपि इस नगर की चारों तरफ बड़ी ऊँची दीवार खड़ी है तथापि पूरब दिशा मे एक खूँटीदार बाँस सुरक्षित है और उसी के सहारे आप अनायास ही दीवार को लाँघ सकते हैं । दीवार की दूसरी तरफ एक लोहे की जञ्जीर लटक रही है, उसके सहारे आप क्षणभर में ही नीचे उतर जाएँगे । वहीं पेड़ की छाँह में एक घोड़ा छिपाया हुआ है । उस घोड़े पर सवार होकर थोड़ी दूर चलने के बाद ही आप देखेंगे कि यमुना में एक

द्रक्ष्यते यत्--कलिन्द-तनयायामेकाऽल्पीयसी नौकाऽस्ति, तस्यां क्षेपणीहस्ता दश वाहका· प्रभुमपेक्षन्ते। ते च त्वरया मथुरां प्रापयिष्यन्ति। ततस्तु येन केनापि पथा सुखेन भवान् महाराष्ट्र-देशं प्रयास्यति-इति।

महा० अत्यन्त प्रशंसामि भवदुद्योगम्, किन्तु मन्यतां यदि कश्चन मार्गे प्रहरिषु परिचिनुयात्?

राघ०—एतस्मिन् पथि पञ्चषा आस्माकीना महाराष्ट्रा एव कलित-यवन-वेषा प्रहरितां प्राप्ताः सन्ति। ते च श्रीमत शुभं चिन्तयन्ति।

महा० अथ कोऽपि प्राचीरोल्लङ्घन-समये परिचिनुयात्, अन्तरायञ्च विदध्यात्?

राघ०--महाराज! तस्मिन्नेव स्थाने अन्धकारे द्वादश महाराष्ट्-

---

पतनद्वयमानेण समयेन। कलिन्दतनयायाम् = यमुनायाम्। क्षेपणीहस्ता·= नौकादण्डकराः। वाहका = कर्णधाराः। प्रहरिषु = यामिकेषु। पञ्च वा षड् वा पञ्चषा। परिचिनुयात्=विजानीयात्। अन्तरायं=विघ्नम्।

---

डोंगी लगी है और उसपर पतवार लेकर दस मल्लाह आपकी प्रतीक्षा कर रहे हैं। वे लोग आपको शीघ्र ही मथुरा पहुंचा देंगे। उसके बाद आप किसी भी रास्ते से सुखपूर्वक महाराष्ट्रदेश जा सकेंगे।

महा०—आपके द्वारा उपर्युक्त उपाय की तो मैं बहुत ही प्रशंसा करता हूँ। परन्तु मान लें कि रास्ते में किसी रक्षक ने मुझे पहचान लिया, तब क्या होगा?

राघ०—रास्ते में तो यवनों के वेष में हम लोगों के पाँच-छः मराठे ही प्रहरी का काम कर रहे हैं और वे आपके शुभचिन्तक ही हैं।

महा०—अच्छा, यदि दीवार लाँघते (लाँघते) समय कोई मुझे पहचान ले और फिर विघ्न करने लग जाय?

राघ०—महाराज! वहाँ भी कपटवेष में बारह खड्गधारी मराठे वीर

भटा खड्गहस्तारछद्मवेषिणोऽन्धतमसाऽऽच्छन्नाश्च सन्ति। यदि कश्चिद् विघ्नमाचरेत्, तस्य ध्रुवं मरणम्।

महा०—अथ परतो यमुना मार्गे चेदाक्रम्ये कैश्चित् ?

राघ०—न भयम्, न भयम्! अस्माभिः शास्तिखान युद्धे बहूनां यवन-भटानां पट्टिकाः खड्गा वीरता वस्त्राणि शिरोवेष्टनानि अधोवसनानि उपानह कटिबन्धनानि च बलाद् गृहीतानि, तैरेव कलित यवन वेषाणां स्वाध्यक्ष-तदध्यक्षादि सहितानां गुप्तसेनैकाऽस्ति। तस्या एव शतशो भटा पथि परितो गूढं भ्रमन्ति। सर्वे ते श्रीमद्रक्षकाः।

महा०—नौकाऽऽरोहसमये चेदापत्तिः ?

---

छद्मवेषिण = परिवर्तितनेपथ्या । ध्रुवम् = अवश्यम् । मरणम् = मृत्यु । आक्रम्ये = आक्रान्तो भवेयम्। कर्मवाच्यम्।

कलितयवनवेषाणाम् = धारितम्लेच्छनेपथ्यानाम्। गुप्ता = प्रच्छन्ना।

---

घने अन्धकार मे छिपे हैं। यदि कोई उपद्रव करने लगेगा तो उसकी मृत्यु अवश्यम्भावी है।

महा०—अच्छा यदि उसके बाद यमुना जाते समय किसी ने आक्रमण कर दिया तो ?

राघ०—भय का कोई प्रश्न नहीं। शाइस्ता खाँ के साथ हुए युद्ध में हम लोगों ने जो बहुत से यवन योद्धाओं के युद्धोपकरण पट्टियाँ, खड्ग, कवच, पगड़ियाँ, कछनियाँ, जूते और कमरबन्द—छीन लिये थे उन्हीं से सुसज्जित यवन वेश भूषा में अपने सेनापति तथा शाइस्ता खाँ के वशीकृत सेनापति आदि से सम्पन्न एक गुप्त सेना है। उस सेना के बहुत से वीर गुप्तरूप में रास्ते में इधर-उधर घूम रहे हैं। वे सब तो आपके ही रक्षक हैं।

महा०—किन्तु यदि नाव पर चढ़ते समय किसी तरह की परेशानी आई तो ?

राघ०—वाहका अपि योद्धारः, शस्त्रपूर्णा च नौका। यमुनातटेऽपि कपटभिक्षुका भावका सजृम्भारम्भं स्वापमिवानुकुर्वन्ति।

महा०—केचनाभिज्ञाय चेत् पथि तरणिगतिं रुन्ध्युः ?

राघ०—तरणि-तनूजामभितस्तटेऽपि भावकाः पत्तयः सादिनश्च सतर्काः सन्ति। तरणिरोधं कोऽपि विधातुं पारयेच्चेत्, तरणि-रोधमपि विधातुं पारयेत्।

महा०—मथुरायाञ्चेदापत्तिः ?

---

शस्त्रपूर्णा = आयुधभरिता। कपटभिक्षुका = छद्मगृहीतयाचकवेषाः। सजृम्भारम्भम् = सगात्रविनामप्रारम्भम्। स्वापमिव = शयनमिव। अनुकुर्वन्ति = विडम्बयन्ति। यवनैः साकं यादृशं सम्बन्धा इति भाव।

अभिज्ञाय = परिचीय, तरणिगतिम् = नौकामार्गम्। रुन्ध्युः = प्रतिबध्नीयुः।

तरणितनूजाम् = सूर्यतनयाम्, यमुनाम्। भावका = भवदीयाः। पत्तयः = पदातयः। तरणिरोधम् = नौकाया प्रतिबन्धम्। तरणिरोधम् = सूर्यप्रतिरोधम्। मिथ्याध्यवसितिरलङ्कार।

---

राघ०—मल्लाहों के रूप में उस नाव पर रहनेवाले भी तो वीर ही हैं। साथ ही नाव भी शस्त्रास्त्रों से परिपूर्ण है। यमुना के किनारे भी भिक्षुकों के कपट भेष में आपके ही वीर जम्भाई लेते हुए निद्रा का आवाहन सा कर रहे हैं।

महा०—परन्तु यदि हम लोगों को पहचान कर कुछ यवन वीर मझधार में नाव को रोकें तो ?

राघ०—यमुना के दूसरे तट पर भी आपकी सेना तथा आपके घुड़सवार सतर्क हैं। यदि आपके नाव को कोई रोक सकेगा तो वह सूर्य की गति को भी रोक ले सकता है (अर्थात् जिस प्रकार सूर्य की गति को कोई नहीं रोक सकता उसी प्रकार आपके नाव की गति को भी कोई नहीं रोक सकता)।

महा०—अच्छा यदि मथुरा जाने पर वहाँ कोई आपत्ति आ पड़ी तो क्या होगा ?

राघ०—नैवम्, मथुरायां सहस्रशो भावत्का वैष्णव-वेषेण सञ्चरन्ति।

महा०—[ क्षणं विचार्य ] अथ मामकानां शिबिरस्थानां दिल्ली-नगरे चेतस्ततोऽधिवासितानां का दशा भवेत्?

राघ०—महाराज! भवन्तमलभमानो दिल्लीश्वरस्तान् गृहीत्वाऽपि त्यजेत्!

महा०—नैवं सम्भाव्यते क्रूरतमेऽस्मिन्, यो भ्रातॄनप्यवधीत्, पितरञ्च न्यग्रहीत्।

राघ०—महाराज! किमप्यस्तु, परन्तु यदि नाद्य पलायते भवान्, तदा श्वो गृहाद् बहिर्गमनमपि भवतो निषिद्धं भवेत्।

---

मामकानाम् = मत्सम्बन्धिनाम्। इतस्ततः = यत्र तत्र। अधिवासितानाम् = कारितनिवासानाम्।

भ्रातॄन् = सहोदरान्। अवधीत् = अमारयत्। पितरम् = उत्पादयितारम्। न्यग्रहीत् = कारासदने स्थापितवान्।

---

राघ०—नहीं नहीं, मथुरा में भी आपके हजारों वीर वैष्णवों की वेश-भूषा में घूम रहे हैं।

महा०—[ क्षण भर सोचने के बाद ] किन्तु ऐसा करने पर शिविर में तथा यत्र तत्र दिल्ली में रहने वाले मेरे साथियों की क्या दशा होगी?

राघ०—महाराज! आप जब नहीं मिलेंगे तब तो दिल्ली सम्राट् औरङ्गजेब पकड़ने के बाद भी उन सबको छोड़ ही देगा।

महा०—अपने भाई को भी मार डालने वाले और अपने पिता को भी कैद में रखनेवाले इस क्रूर यवनाधम से ऐसी आशा नहीं की जा सकती है।

राघ०—महाराज! जो कुछ भी हो, किन्तु यदि आप आज यहाँ से नहीं भाग निकलेंगे तो कल तो इस घर से भी बाहर निकलने में प्रतिबन्ध लग जाएगा।

महा०—अपि सत्यमिदम् ?

राघ०—अतिसत्यम् !

महा०—आः ! केनेव योगबलेन ज्ञातवानसि ? [ क्षण विचिन्त्य ] आचार्य्य ! भवादृशे शुभचिन्तके साहाय्यं विदधति; कारागारस्थोऽपि स्वातन्त्र्यमासादयिष्यामि । किन्तु आश्रितान् मृत्युकपोले कवलवन्निपात्य नहि जिजीविषामि । किञ्च, अधुनैवापसृतेष्वस्मासु कदाचन अस्मद्दोषमेव दिल्लीश्वर-जयसिंहादयः प्रकटयेरन्—यत् "सम्मानयितुमुत्सुकमपि त्यक्त्वा, धार्ष्ट्येनैव पलायितः" इति तद्भवतु नाम कश्चन प्रकटोऽपराधो दिल्लीश्वरस्य, ततो यास्यामः । न हि महाराष्ट्रवीरा वराकैरेतैः सिंहा इव शशकैर्निग्रहीतुं शक्यन्ते । तावद्यदि क्लेशो न स्यात्; तत् सूच्यन्तामस्म-

शुभचिन्तके = कल्याणानुध्यायके । विदधति=कुर्वति । मृत्युकपोले = यममुखे । कवलवत् = ग्रासवत् । जिजीविषामि = प्राणितुमिच्छामि ।

अपसृतेषु = पलायितेषु । सम्मानयितुम् = सत्कर्तुम् । उत्सुकम् = उत्कम् । धार्ष्ट्येन = धृष्टतया । सिंहा इव शशकैरित्युपमा । निग्रहीतुम् = रोद्धुम् । सूच्यन्ताम् = बोध्यन्ताम् ।

महा०—क्या यह सत्य है ?

राघ०—सत्य क्या, अत्यन्त सत्य है ।

महा०—आः ! यह बात आप ने किस योगशक्ति से जान ली है ? [ थोड़ी देर सोचकर ] आचार्य ! आप जैसे शुभचिन्तक की सहायता यदि मिलती रहेगी तो कैद किये जाने पर भी मैं छुटकारा पा लूँगा । किन्तु अपने आश्रित व्यक्तियों को मौत के मुँह में कौर की तरह सहसा फेंककर मैं जीने की इच्छा नहीं रखता । और भी, यदि अभी मैं भग जाता हूँ तो मौका आने पर औरङ्गजेब तथा जयसिंह आदि भी मुझे ही दोषी ठहरायेंगे और कहेंगे—"दिल्लीसम्राट् तो सम्मान करना चाहते थे पर स्वयम् वहाँ से भग आए । अतः पहले दिल्लीसम्राट् का कोई प्रकट अपराध हो जाय, पीछे हम लोग यहाँ से चल पड़ेंगे । जिस प्रकार खरहे सिंहों को नहीं पकड़ सकते

त्पूजक-पाचक-लेखक-पाठकादयः सपदि महाराष्ट्रदेशाभिमुखं प्रस्थातुम्।

राघवा०—[ उच्छ्वस्य ] धन्यो महाराजः ! य एवं प्राणानप्यगणयन् करुणया आत्मीयानां कुशलं चिन्तयति। एवमेव धर्मो राज्ञां यत् स्वीयानां प्रतिपालनं सम्माननं सदा कुशलचिन्तनञ्च। भृत्या हि, रोदं रोदं वक्षो घ्नतीं मातरम्, विलुलितैः केशैर्भूमि-विलुण्ठनैश्च रोदसी रोदयन्ती पत्नीम्, तावा-तातेति कलरवैर्मूर्च्छयतः पटान्तमाकर्षतः पृथुकांश्च तृणवद्विहाय स्वामिकार्य्यं साधयितुं स्वदेहमर्प-

अगणयन् = अचिन्तयन्। आत्मीयानाम्=स्वेषाम्। सम्माननम् = सत्करणम्। कुशलचिन्तनम् = शिवानुध्यानम्। रोदं रोदम् = रुदित्वा रुदित्वा। वक्षः = उरः। घ्नतीम् = ताडयन्तीम्। विलुलितैः = विशृङ्खलितैः। भूमिविलुण्ठनैः = धरणीपरिवर्त्तनैः। रोदसी = द्यावापृथिव्यौ। कलरवैः = मधुरभाषणैः। मूर्च्छयतः = मोहयतः। पटान्तम् = वसन-

उसी प्रकार महाराष्ट्र के वीरों को ये नीच यवन नहीं पकड़ रख सकते। हाँ, यदि कोई कठिनाई न हो तो पहले मेरे पूजक, पाचक, लेखक तथा पाठक आदि को यहाँ से शीघ्र महाराष्ट्र देश की यात्रा करने की सूचना दे दें।

राघ०—[ लम्बी साँसें भरकर ] आप अपने प्राण की उपेक्षा करके अपने आश्रितों के कुशल की इस प्रकार जो चिन्ता रखते हैं इसके लिए आपको धन्यवाद है महाराज! राजाओं का यही धर्म है कि वे अपने आश्रितों के पालन-पोषण, सम्मान तथा उनके कुशल की चिन्ता इसी प्रकार रखें। यह सेवक रो रोकर छाती पीटती हुई अपनी माता को, बिखरे बालों वाली तथा जमीन पर लोटने से जमीन से आसमान तक को रुलानेवाली अपनी प्रियतमा को और अपनी तुतली बोली से मोहित करनेवाले तथा धोती पकड़कर अपनी ओर खींचनेवाले अपने बच्चों की तृणवत् उपेक्षा करके राजाओं के कार्य-साधन के लिये अपने शरीर को भी अर्पित कर देता है। अतः ऐसे नि:स्वार्थ सेवक की कृतज्ञता का स्वीकार करना राजाओं का

यन्ति। तत्कृतज्ञता-स्वीकारो हि राज्ञां प्रथमो धर्मः—इति धन्यो भवान् राजधर्म-परतन्त्रो दयानिधिः !!

महा०—[ निःश्वस्य पटान्तेनाश्रूणीवापसार्य्य ] आचार्य्य ! वहू-कम् ! मा स्म स्वयं खिन्नमधिकं खेदय, मादृशः कृतघ्नो दुरवापः।

राघवा०—किमिति ? किं कदाऽपि कोऽपि निष्कपट-दास-स्तिरस्कृतो वा ?

महा०—धिङ् माम् ! तथा तिरस्कृतवानस्मि प्राणरक्षकमेकम्; यत् श्रूयते स मम तिरस्कारग्लानः प्राणांस्त्यक्तवान्—इति। आधिरयं ममापि प्राणैः सहैव शान्तिमेष्यति।

---

प्रान्तम्। पृथुकान् = बालान्, राजधर्मस्य, परतन्त्रः = अस्वाधीनः।
कृतघ्नः = कृतविस्मर्ता। दुरवापः = दुर्लभः।
निष्कपटदासः = निश्छलभृत्यः।
तिरस्कारेण, ग्लानः = क्षीणहर्षः। आधिः = मानसिकव्यथा।
शान्तिम् = शमम्। प्राणैः सह = जीवनेन साकम्।

---

प्रथम धर्म है। हे दयानिधे ! इस राजधर्म पारतन्त्र्य के लिये आप धन्यवाद के पात्र हैं।

महा०—[ लम्बी साँसें भरकर अपनी धोती से आँसू पोंछते हुए ] आचार्य ! अब बस कीजिये। मेरे खिन्न हृदय को अब अधिक खिन्न न कीजिये। मुझ सा कृतघ्न और कोई नहीं मिलेगा।

राघ०—ऐसा क्यों कह रहे हैं ? क्या आप ने किसी निश्छल सेवक का भी कभी तिरस्कार किया है ?

महा०—मुझे धिक्कार है ! अपने प्राणरक्षक व्यक्ति का भी मैंने इस तरह तिरस्कार किया है कि सुना जाता है कि उसने तिरस्कार की ग्लानि से ही आत्महत्या कर ली। यह व्यथा मेरे मन से भी प्राणों के साथ ही जा सकती है।

राघ०—[ग्रीवां परिवर्त्य कानिचिदश्रूण्युन्मुच्य] अपि महाराजस्तस्य नाम कथयिष्यति ? यथा योगबलेन चिन्तयेयं स जीवति न वेति।

महा०—रघुवीरसिंहः।

राघ०—[आत्मना रोमाञ्चं गद्गदस्वरञ्च गोपयन्, ध्यानच्छलेन क्षणं तूर्ष्णीं स्थित्वा धैर्यमाधाय] दीनबन्धो ! जीवति रघुवीरसिंहः।

महा०—जीवतु जीवतु चिरं जीवतु अथ किं करोति ? क्वास्ति ? स्मारं स्मारं मम तिरस्कारं मामपवदति वा ?

राघ०—[कर्णौ पिधाय] शान्तं पापम् ! नहि तादृशानि कुलीनानामपत्यानि प्रभुमपवदन्ति। तानि हि देहं पातयन्ति; न तु

रोमाञ्चम् = पुलकम्। ध्यानच्छलेन=चिन्तनव्याजेन। सधृत्य = भूत्वा।

अपवदति=गर्हयति। निन्दा करोति वा इति प्रश्नः।

राघ०—[मुँह मोड़कर थोड़ा आँसू बहाकर] क्या श्रीमान् उस सेवक का नाम मुझे बतलायेंगे ताकि मैं योग-बल से यह जान सकूँ कि वह जीवित है या नहीं।

महा०—उसका नाम रघुवीर सिंह था।

राघ०—[अपने रोमाञ्च तथा गद्गद स्वर को छिपाते हुए ध्यान के छल से कुछ देर तक मौन रह कर पुनः धैर्य धारण करके] दीनबन्धो ! रघुवीर सिंह अभी जीवित ही हैं।

महा०—हाय ! वह चिरकाल तक जीवित रहे ! अच्छा, यह तो आप बतलाएँ कि वह इस समय क्या कर रहा है, कहाँ है, और मेरे द्वारा किए गए अपने अपमान का बार बार स्मरण करके मेरी निन्दा भी कर रहा है क्या ?

राघ०—[कान मूँद कर] राम, राम ! इस तरह के उच्चकुल में सन्तान कभी अपने स्वामी की निन्दा नहीं करते। इस तरह के कुलीन

प्रभुभक्तिम्। प्राणांस्त्यजन्ति, न च स्वामि चरणे अनुरागम्। स एव तिरस्कृतोऽपि निर्वासितोऽपि प्रभूणां कुशलायैव व्रतमाचरति। [इति कथयत एव राघवाचार्यस्य स्वरभङ्गो भाव विकारश्च प्रकटो बभूव]।

[महाराष्ट्रराज सतर्कं तन्मुखमैक्षिष्ट]

राघ०—[सधैर्यम्] महाराज! अस्मिन्ननुरक्तायाः कस्याश्चन वीर-बालाया अवस्थां संस्मृत्य खिन्नं मे चेतः।

महा०—का सा?

राघ०—प्रभो सहचरस्य गौरसिंहस्य भगिनी।

महा०—अहह! स्मरामि। किमवस्था सा बाला सौवर्णी?

---

पातयन्ति = नाशयन्ति। अनुरागम्=प्रेम। स्वरभङ्ग -कण्ठे बाष्पावरोधेन वैस्वर्यम्।

अनुरक्तायाः = कृतप्रणयायाः। का अवस्था यस्याः सा किमवस्था।

---

सेवक अपने शरीर को छोड़ दे सकते हैं किन्तु अपनी राजभक्ति को नहीं। अपने प्राण छोड़ सकते हैं पर आपके चरणों में अपने अनुराग को नहीं। आपके द्वारा तिरस्कृत तथा निष्कासित होने के बावजूद भी आपके कुशल के लिए ही वह व्रत कर रहा है।

[इतना कहते कहते ही राघवाचार्य का स्वरभङ्ग तथा भाव विकार प्रकट हो गया।]

[उसके बाद महाराष्ट्रराज ने सावधान होकर उसके मुँह पर अपनी दृष्टि डाली]

राघ०—[धैर्य के साथ] महाराज! उस रघुवीर सिंह में अनुरक्त किसी वीर युवती की स्थिति का स्मरण कर मेरा मन बहुत खिन्न हो रहा है।

महा०—कौन सी वह युवती है?

राघ०—आपके सहचर गौरसिंह की बहन।

महा०—अहा हा! मुझे भी उसकी याद आ रही है। अभी उस बच्ची सौवर्णी की कैसी स्थिति है?

राघ०—आर्य ! आकर्ण्य रघुवीरं नष्टम् ; सा रहस्तडागतटमासाद्य, मुक्तकण्ठं चिरं रुदित्वा, शुष्ककाष्ठान्यादाय, चितां ज्वलयित्वा, आत्मानं भस्मसात् कर्तुं प्रवृत्ता ।

महा०—आः किमुच्यते ? ततः ।

राघ०—ततो मन्दिर-पूजकस्य पुत्री पुत्रवधूश्चाकस्मात्तत आगते ता तथाभूतामालोक्य दृढं गृहीत्वा सारस्वरेण "धावत भोः धावत ! सौवर्णी स्वात्मानं दहति"—इति करुण-कोलाहलमकुरुताम् ।

महा०—ततः ?

राघ०—ततो झटिति मन्दिर-पूजको देवशर्मा, अपरे च स्खलन्तो निपतन्त श्लथद्वसनास्त्वरित-निश्वासास्तत्र समागताः ।

---

रहः = एकान्ते । आसाद्य = प्राप्य । मुक्तकण्ठम् = उच्चैः ।
स्खलन्तः = पतितुं प्रवृत्ताः । श्लथद्वसनाः = गलद्वस्त्राः । त्वरितनिश्वासाः = द्रुतश्वासाः ।

---

राघ०—आर्य ! जब उसने यह सुना कि रघुवीर सिंह ने आत्महत्या कर ली तब वह एकान्त रूप में तालाब के किनारे आकर, मुक्तकण्ठ से चिर काल तक करुण क्रन्दन करने के बाद सूखी लकड़ियों की चिता बनाकर, उसमें आग लगा कर जलने को तैयार हो गई थी ।

महा०—हाय ! ऐसी स्थिति आ गई थी क्या ? अच्छा तो बाद में क्या हुआ ?

राघ०—उसी बीच मन्दिर के पुजारी की बेटी तथा उसकी बहू अकस्मात् वहाँ आ गई और धधकती चिता में जलने के लिये उद्यत सौवर्णी को जोरों से पकड़ कर चिल्लाने लगीं—"दौड़िए दौड़िए ! सौवर्णी तो आत्मदाह कर रही है ।"

महा०—उसके बाद ?

राघ०—उसके बाद मन्दिर के पुजारी देवशर्मा जी तथा अन्यान्य लोग भी शीघ्र ही दौड़कर वहाँ पहुँच गए ।

महा०—ततः ?

राघ०—ततः समालिङ्ग्य, क्षणं रुदित्वा, देवशर्मणा कथितम्—धत्से ! वेद्मि—यत् त्वं शून्यं जगत् पश्यसि। आत्मानञ्च भुवो भारभूतमाकलय्य विमानमिव भासमानं बृहद्भानुमारुह्य पत्या समं वैकुण्ठं जिगमिषसि। कथं न स्याः ? कन्यारत्नं हि भवती क्षत्रियाणाम्। परमत्र ते भ्रमः। सम्यग् ग्रहदशामवलोक्य रात्रावेव गणितवानस्मि। यं सुरलोकेष्वन्वेष्टव्यं मन्यसे, स वसुधामेवालङ्करोति। अचिरेण स आत्मानं प्रकटयिष्यति। तदा स त्वां कथा-

---

शून्यम् = रिक्तम्। भारभूतम् = भारायमाणम्। विमानमिव= आकाशयानमिव। भासमानम्=प्रज्वलन्तम्। बृहद्भानुम्=वह्निम्। आरुह्य = उपरि स्थित्वा। वैकुण्ठम् = वैष्णवं धाम। जिगमिषसि = गन्तुमिच्छसि। भ्रमः = भ्रान्तिः। ग्रहदशाम् = खेचरस्थितिम्। सुरलोकेषु = स्वर्गादिषु। अन्वेष्टव्यम् = अन्वेषणीयम्। अलङ्करोति= भूषयति।

---

महा०—उसके पश्चात् ?

राघ०—उसके पश्चात् गले लगा कर क्षण भर रोने के बाद देवशर्मा जी ने सौवर्णी से कहा—बेटी ! मैं समझ रहा हूँ कि तुझे यह सारा संसार सूना सा दिखाई पड़ रहा है और इसलिये तुम अपने को इस पृथ्वी पर भार सा समझ कर प्रज्वलित अग्नि रूपी विमान में प्रवेश कर अपने (मनोनीत) पति देव के साथ स्वर्ग जाना चाह रही हो। क्षत्रिय कुल में उत्पन्न कन्यारत्न होने के कारण तुम्हारे लिये ऐसा करना स्वाभाविक ही है। परन्तु तुम्हें भ्रम है। रात ही मैंने ग्रहदशा की गणना की है। तुम जिसे स्वर्गलोक में ढूँढना चाह रही हो वह तो अभी इस भूमण्डल को ही अलङ्कृत कर रहा है। निकट भविष्य में ही वह प्रकट हो जायेगा। इसलिये यदि तुम अभी जल जाती हो तो प्रकट होने के बाद तुम्हारी इस घटना से, वायु से आहत कदली स्तम्भ की तरह, आहत हो कर क्षणभर में ही वह

स्वेवावलोक्य वाताऽऽहतो रम्भास्तम्भ इव निपत्य क्षणेन अचिन्तनीयमाचरिष्यति। तद् विश्वसिहि, धारय देहम्, प्राप्स्यसि प्रेयांसम्—इति।

महा०—[ आकाशमवलोक्य, निश्वस्य ] भद्रे! तवापि कष्टस्यायमेव कारणं निर्विचारः [ सम्मुखम् ] आचार्य्य! ततः?

राघ०—देव! एवं बहुधा बहुभिः सान्त्व्यमाना, उन्मत्तेव गृहीत-सुदृढ-मौनव्रता मुक्त-केशी धूलि-धूसरित-देहा रुद्राक्ष माला-कलित-वक्षाः स्थण्डिल-शायिनी तडाग-कोणे एव शियालयमे-

जीवतीति यावत्। कथासु = कथानकेषु। वाताहतः = वायुताडितः। रम्भास्तम्भ इव = कदलीस्तम्भ इव। अचिन्तनीयम् = अविचारणीयम्। मरणमिति यावत्। प्रेयांसम् = प्रियतरम्।

अयमेव - शिव एव। निर्विचारः = निर्विवेकः।

सान्त्व्यमाना = शान्तिं नीयमाना। गृहीतसुदृढमौनव्रता = धारितातिकठोरवाचयमनियमा। धूलिधूसरितदेहा = रजोरूषितगात्री। शिवालयम् = शिवमन्दिरम्। अध्युष्य = अधिष्ठाय। "उपान्वध्याङ्वसः" इति शिवालयस्य कर्मत्वम्। बिल्वपत्रैः = श्रीफलदलैः। धूर्त्तकुसुमैः =

व्यक्ति ऐसा कर बैठेगा जिसके विषय में सोचना भी कठिन है, अतः तुम मेरी बातों पर विश्वास करो बेटी! अपने शरीर को सुरक्षित रखो निकट भविष्य में तुम्हें अपने प्रियतम मिलने वाले हैं।

महा०—[ ऊपर की ओर देखते हुये लम्बी सासें भर कर ] भद्रे-औवर्यि! तुम्हारे कष्ट का भी यही विचारशून्य व्यक्ति कारण है।

[ राघवाचार्य की ओर देखते हुये ] अच्छा, उसके बाद?

राघ०—देव! उसके बाद जब अनेक व्यक्तियों ने अनेक प्रकार से सान्त्वनाएँ दीं तब उसने मान लिया और उसी समय से एक पगली की तरह कठोर मौनव्रत का पालन करती हुई, बाल खोलकर, सम्पूर्ण शरीर में भस्म लेप कर, गले में रुद्राक्ष की माला पहन कर, जमीन

कमभ्युप्य बिल्वपत्रैर्जलधाराभिर्धूर्तकुसुमैरक्षतैश्चानवरतं दिवं पूजयन्ती समयं यापयति।

महा०—हा! रघुवीर! कदा त्वां समालिङ्ग्य क्षमायिष्यामि?

तावदकस्माद् दीपो मन्दप्रकाशः संवृत्तः। महाराष्ट्र-राजस्तमुद्दीप्य, परिवृत्त्याद्राक्षीत्-तत्र तत्र राघवाचार्य्यः। अथ द्विस्त्रिश्चाऽऽकार्य्य, अवतीर्य्य, उद्याने भ्रान्त्वाऽपि, क्वापि तत्पदवीं न लेभे। तत इदमखिलं स्वप्नमिव, इन्द्रजालमिव, मायादर्शनमिव च चिरं चिन्तयन्, प्रघणे एव पर्य्यङ्कमाकृष्य, तादृशानेव स्वप्नान् पश्यन् सुष्वाप।

---

धत्तूरैः। "उन्मत्त कितवो धूर्तो धत्तूर" इत्यमरः। अक्षतैः = तण्डुलकणैः। उद्दीप्य = विपुलप्रकाशीकृत्य। आकार्य=आहूय। तत्पदवीम्=तन्मार्गम्। द्विस्त्रिः = द्विवार त्रिवार वा। प्रघणे, 'प्रघाणप्रघणालिन्दा' इत्यमरः।

---

पर ही सोती है और उसी तालाब के कोने पर निर्मित एक शिव-मन्दिर में प्रतिष्ठित भगवान् शङ्कर की बिल्वपत्र, जल धतूरे के फूल तथा अक्षत आदि सामग्रियों से आराधना करती हुई अपना समय बिता रही है।

महा०—हाय! रघुवीर! मैं किस क्षण तुम्हें गले लगा कर अपने अपराध के लिए तुम से क्षमा-याचना करूँगा!

इसी बीच अकस्मात् दीपक का प्रकाश कुछ मन्द हो गया। महाराष्ट्र-ने उसकी बत्ती उसका कर जब पुनः मुँह फेर कर देखा तो उन्हें वहाँ राघवाचार्य नहीं दिखाई पड़े। उसके बाद दो-तीन बार राघवाचार्य को उन्होंने पुकारा, किन्तु जब राघवाचार्य का उत्तर नहीं मिला तो बाहर आकर उद्यान में उन्हें खोजने लगे, परन्तु कहीं भी राघवाचार्य के पैरों का चिह्न भी नहीं मिला। उसके बाद—"यह तो स्वप्न सदृश स्थिति हुई, यह तो इन्द्रजाल-सी घटना घटी, यह केवल मायाजाल था"—इस प्रकार चिरकाल तक सोचकर दरवाजे के सामने बनी जगह में ही शिवाजी ने अपना पलङ्ग खींच लिया और उसी तरह के स्वप्न देखते-देखते सो गए।

प्रातः किञ्चिदुदञ्चिते चण्डमरीचौ, द्वारदेशात् कोलाहलमिश्र शृण्वन् गौरसिंहो गवाक्षादवलोक्य व्यजिज्ञपत्—"पश्यतु पश्यतु देवो दुष्टतां दिल्लो-दर्प-दर्पितस्य"।

अथ सर्वे 'किमिति किमिति'—ससम्भ्रमास्तत्र आगत्य ददृशुर्यत् परितः सशस्त्रा द्वारपाला भ्रमन्ति, अन्तराजिगमिषतश्च जनान् निरुन्धन्ति–इति।

अथ महाराष्ट्रराजो दृष्ट्वैवैतत् लोहितवदनः कोपस्फुरदधरो जाज्वल्यमान-नयन-द्वयो जिघत्सन्निव ब्रह्माण्डमण्डलम्, भ्रुवो-राकुञ्चनेन स्फोटयन्निव गगन-तलम्, रक्तजीव माल्यश्रीकच्छाया-

उदञ्चिते = ऊर्ध्वमायाते, उदिते। चण्डमरीचौ = भास्करे। दिल्ली-दर्पेण, दर्पितस्य = साभिमानस्य।

ससम्भ्रमाः = व्याकुला। अन्तः= मध्ये। आजिगमिषतः = आगन्तुमिच्छतः। शसो रूपम्।

लोहितवदनः = अरुणमुखः। कोपस्फुरदधरः = कोपचलदोष्ठः। जाज्वल्यमाननयनद्वयः = दन्दह्यमानचक्षुर्द्वितयः। जिघत्सन् = अत्तुमि-

प्रातःकाल में सूर्योदय के कुछ ही क्षण पश्चात् दरवाजे की ओर से कोलाहल सुनकर गौरसिंह ने खिड़की से झाँकते हुए शिवाजी से निवेदन किया—"देखें-देखें महाराज! दिल्ली के साम्राज्य के दर्प से उन्मत्त इस यवनाधम की अधमता को देखें"।

इतना सुनते ही "क्या है, क्या है!" ऐसा कहते हुए जब सम्भ्रान्त होकर सब आए तो सबने देखा कि उस भवन की चारों तरफ सशस्त्र द्वारपाल गस्ती लगा रहे थे और भीतर आने वालों को आने नहीं देते थे।

इतना देखते ही शिवाजी का मुँह क्रोध से लाल हो गया, उनका अधरोष्ठ क्रोध से फरकने लग गया, उनकी आँखें लाल-लाल हो गई जिससे लग रहा था कि वे समस्त ब्रह्माण्ड का ही संहार करने को उद्यत हों, उनकी भौंहें उस प्रकार चढ़ गई जिससे आकाश मण्डल भी विदीर्ण-सा

दीत्-पश्य पश्य, यवनराजस्य हृदयम्! नासौ जानीते यद्--महाराष्ट्रा अन्यानपि चातुरीं शिक्षयन्ति। अहो! राघवाचार्यस्य कथां नाऽऽदृतवानस्मि। रात्रावपि स स्पष्टमवादीदेतद्घटना-विषये। पलायितुश्च सम्यगवसरं प्राप्यापि, आत्मीयांस्त्यक्त्वा निवर्त्तनमनुचितमिति मन्यमानो नास्मि पलायितः। इच्छामि चेदधुनैव एषां कदर्य्याणां चक्षुष्षु रेणुकाराशिं प्रक्षिप्य, अनवरुद्धगतिर्महाराष्ट्रदेशं गच्छेयम्। किन्तु, नोत्सहते मे मनस्त्यक्त्वा स्वाश्रितान् आत्मानं त्रातुम्।

ततः आह माल्यश्रीकः—महाराज! अस्माकं महाराष्ट्रदेशगमनं सम्राजा नानुमतम्; तर्हि स्वाश्रितानां महाराष्ट्रदेशगमनानुमत्यै

च्छन्। स्फोटयन् = विदारयन्। अन्यान् = इतरान्। चातुरीम् = पाटिदयम्। निवर्त्तनम् = परावृत्तिः। कदर्य्याणाम् = नीचानाम्। रेणुकाराशिम् = धूलिनिकरम्। अनवरुद्धगतिः = अवारितगमनः। स्वाश्रितान् = स्वप्रयागान् भृत्यान्।

हो रहा था। उन्होंने रत्नजीव और माल्यश्रीक से कहा—"देखो, इस यवनराज का हृदय कैसा है! यह नीच इस बात को नहीं जानता कि मराठे दूसरों को भी चतुरता सिखलाने वाले हैं। अहा! मैंने राघवाचार्य का कहना नहीं माना, रात में भी उन्होंने इस घटना के विषय में स्पष्ट रूप से कहा था। यहाँ से भाग निकलने के सुअवसर पाने बावजूद भी मैं यह सोच कर भगा नहीं कि अपने सहचरों की उपेक्षा कर यहाँ से भग जाना उचित नहीं है। यदि मैं चाहूँ तो अभी-अभी इन क्षुद्रों की दृष्टि में धूल भरकर अप्रतिहत रूप में महाराष्ट्रदेश के लिए प्रस्थान कर सकता हूँ। किन्तु अपने आश्रितों की उपेक्षा कर अपनी रक्षा करने के लिए मेरा मन प्रवृत्त नहीं हो रहा है।"

उसके बाद माल्यश्रीक ने कहा—"महाराज! हम लोगों को महाराष्ट्र देश लौट जाने की अनुमति तो सम्राट् से नहीं मिली। अतः अपने

अपरमावेदनपत्रं प्रेषणीयम् । निश्चिनोमि यदसहायस्य देवस्य स्थितिरत्र रोचिष्यतेतरां यवनकुलनन्दनाय । समासादिताऽऽदेश-पत्राश्च सुखेन निर्भयाः प्रयास्यन्त्यास्माकीना महाराष्ट्र-देशमिति ।

ततः 'साधु साधु'-इति सर्वैरुक्तम् । सपदि आवेदनपत्रस्य लेखोऽपि प्रस्तुतः । निर्गन्तॄणां संख्याऽपि समुल्लिखिता । पत्रमिदं कुमार-रामसिंह-द्वारा प्रेषितं सम्राजा सप्रसादमङ्गीकृतम् । कतिपयैरेव दिवसैर्यथावाञ्छितं दिल्ली-निर्गमनपत्रिकाश्च लब्धाः ।

अथ पत्रिका इमाः प्राप्य, महाराष्ट्रराजेन गगने दृष्टिं बद्ध्वा प्रोक्तम्—'अरे रे दिल्ली-कलङ्क ! कियांस्ते चातुरी-गर्वः ? यद्यैव

असहायस्य = एकाकिनः । देवस्य = भवतः । यवनकुलस्य नन्दनाय = हर्षवर्द्धनाय । निर्भयाः = भीतिशून्याः ।

निर्गन्तॄणाम् = निर्गच्छताम् । सप्रसादम् = प्रसन्नतया । यथावाञ्छितम् = यथाभिलषितम् ।

चातुरीगर्वः = कौशलाभिमानः । आत्मीयानाम् = स्वीयानाम् ।

आश्रितों के महाराष्ट्र लौट जाने की अनुमति प्राप्त करने के लिए एक दूसरा आवेदन-पत्र भेजना चाहिए । मेरा तो ऐसा निश्चय है कि यवनकुल-नन्दन सम्राट् के लिए यहाँ आपका अकेला रहना ही अधिक रुचिकर होगा । अनुमति-पत्र प्राप्त करने के बाद हमारे अनुचर निर्भय होकर सुखपूर्वक यहाँ से महाराष्ट्र देश की यात्रा कर सकेंगे ।

उसके बाद सबों ने "ठीक है, ठीक है" ऐसा कहा । तत्क्षण आवेदन पत्र भी लिखा गया । महाराष्ट्र लौटने वालों की संख्या का भी उसमे उल्लेख किया गया । यह आवेदन कुमार रामसिंह द्वारा महाराज औरंगजेब के पास भेजा गया और सम्राट् ने उसे प्रसन्नतापूर्वक स्वीकृत कर लिया । कुछ ही दिनों में दिल्ली से महाराष्ट्र लौट जाने के लिए अनुमति-पत्र भी मिल गये ।

अनुमति-पत्रों को पाकर आकाश की ओर देखकर महाराष्ट्रराज ने कहा—"अरे दिल्ली कुलकलङ्क यवनाधम ! तूँ भी अपनी चातुरी का

स्वानुचर-वेषमाकलय्य, पत्रमेकं हस्ते गृहीत्वा निर्गच्छेयम्, तत् प्रपितामहोऽपि ते न शक्तः प्रतिरोद्धुम्। परं न शिवो मार्गेऽप्यात्मीयानामशिव-सम्भावना-पथमङ्गीचिकीर्षति"।

ततो महाराष्ट्रेश्वर-समत्या सर्वेऽपि तदीया अनिच्छन्तोऽपि दिल्ली-नगरान्महाराष्ट्र-देशं प्रति निवृत्ताः।

× × ×

अथ स्नानपूर्वाः क्रियाः समाप्य यावन्महाराष्ट्रराजः सिष्णासति; तावत्प्राङ्गणे समुपातिष्ठत्सैका अनवरोद्धव्येति प्रतीहारैरनवरुद्धा, "पूजार्थं कुसुमानि माल्याः हारान् कलिकाव्यजनानि

अशिवसम्भावनापथम् = अमङ्गलाशङ्कामार्गम्। अङ्गीचिकीर्षति = अङ्गीकर्तुमिच्छति।

अनिच्छन्तोऽपि = अनभिलषन्तोऽपि। प्रतिनिवृत्ता = परावृत्ताः।

× × ×

स्नानात्पूर्वाः = दन्तधावनाचमनाद्याः। सिष्णासति = स्नातुमिच्छति। प्राङ्गणे = अजिरे। अनवरोद्धव्या = वारयितुमनर्हा। माल्याः = स्रजः। साधारणतया गुम्फिताः। हारान् = विशिष्टाः स्रजः। कलिकानाम् =

रखता है? यदि अभी मैं अपने एक सेवक का वेष बनाकर एक अनुमति पत्र के साथ यहाँ से निकल जाऊँ तो तेरा प्रपितामह भी मुझे नहीं रोक सकेगा। किन्तु शिव ऐसे मार्ग का अनुसरण कथमपि नहीं करना चाहता जिसमें अपने अनुचरों के अमङ्गल की सम्भावना भी हो।"

उसके बाद महाराष्ट्रराज की सम्मति से उनके अनुचर, दिल्ली में उनको छोड़ कर महाराष्ट्र लौटने के लिए अनिच्छुक होने पर भी, वहाँ से महाराष्ट्र देश को लौट गए।

× × ×

तत्पश्चात् स्नान के पूर्वकाल की सारी क्रियाओं को समाप्त कर शिवाजी स्नान करना ही चाहते थे कि इसी बीच अनावश्यक होने के कारण

स्तवक-कुन्दुकानि च क्रीणीध्वं भोः! क्रीणीध्वम्"—इति वदन्ती, वामस्कन्ध-स्थापित-कुसुम-पूर्णपिटकिका, दक्ष-कराऽऽकलितानि-मुक्त-कलिका रचितानेक-विक्रेय-व्यजना, नील-सूत्र-वल्ली-स्यूति-स्यूत-प्रान्त-धवल-वसना, कर्णान्त-लम्बमान-राजत-ताटङ्क चोचुम्ब्यमान-गण्ड-युगला, आरक्त-कञ्चुकिकाऽऽच्छन्न-तालफलस्तनी, काच - खण्ड - मण्डिताम-राजत-लवङ्गिकाऽऽभरण-भूषित - नासा, ताम्बूल-राग-रञ्जिताधरा, यौवन-भर-मन्थरा, मन्दस्मितेन मालती-

कोरकाणाम्, व्यजनानि। स्तवककुन्दुकानि=गुच्छकगेन्दुकानि। वामस्कन्धे स्थापितः, कुसुमपूर्णः, पिटकः = पेटा यया सा। बहुव्रीहि कपि 'प्रत्ययस्था-' इति। दक्षकरेण आकलितानि = धारितानि,अतिमुक्तकलिकारचितानि = माधवीकोरकनिर्मितानि, अनेकानि विक्रेयाणि व्यजनानि यया सा। नील सूत्रैः, या वल्लीस्यूतिः = व्रततिसीवनम्, तया स्यूतः प्रान्तो यस्य तादृश धवलम् = स्वच्छम्, वसनम् = वस्त्र यस्याः सा। कर्णान्तयोः, लम्बमानेन राजतेन = रजतनिर्मितेन, ताटंकेन = आभरणविशेषेण, चोचुम्ब्यमानम्= भृश स्पृश्यमानम्, गण्डयुगल यस्याः सा। आरक्तया=ईषल्लोहितया, कञ्चुकिकया, आच्छन्नौ = गुप्तौ, तालफलवत् स्तनौ यस्या सा। काचखण्डमण्डिता ग्रेण, लवङ्गिकाभरणेन = देवकुसुमसमाननासाभूषणेन, भूषिता नासा यस्याः सा। ताम्बूलरागरञ्जिताधरा = नागवल्लीदललौहित्यभूषितोष्ठा। मन्थरा =

प्रतिहारों द्वारा नहीं रोकी गई एक साँवली सी फूल बेचने वाली युवती "पूजा के लिए फूल, मालाएँ, हार, कलियों के पङ्खे, गुलदस्ता आदि खरीदें" ऐसा कहती हुई वहाँ आ पहुँची। उसके बायें कन्धे पर फूल भरी टोकरी थी, दायें हाथ में माधवी की कलियों के बने कई पङ्खे थे, उसकी साड़ी उजली थी और उसके छोर पर नीले धागे से कढ़ाई की हुई थी, उसके कानों में लटकती हुई चान्दी की बालियाँ उसके दोनों गालों का मानो चुम्बन कर रही थीं, उसके तालफल जैसे मनोहर स्तन लाल चोली से ढके हुए थे, उसके नाक में रजत निर्मित लवङ्ग का फूल—जिसके ऊपर काच का टुकड़ा जड़ा हुआ था—सुशोभित हो रहा था,

मुकुलानीव वमन्ती, अपाङ्ग-वीक्षणैर्नीलोत्पलैरिव ताडयन्ती, विलुलितैर्लोलालकैः रोलम्ब-कदम्बानिव वशयन्ती, क्षुद्रघण्टिका शिञ्जिताऽऽकृष्ट निर्दिष्ट जनदृष्टिः, एका कस्तूरिकोद्वर्तनोद्वर्त्तितेव शृङ्गार-रसस्नातेव च श्यामा कुसुम-विक्रेत्री।

महाराष्ट्रराजस्तु पराङ्गना-प्रतारणेषु न पटीयानिति भृत्यमेक शिव-पूजायै कुसुमानि क्रतुमिङ्गितवान्। सा तु तेन सह कुसुम-

---

हास्यया। मन्दस्मितेन = ईषद्धास्येन। मालतीमुकुलानि = माधवी कोरकान्। वमन्तीव = उद्गिरन्तीव। अपाङ्गवीक्षणैः = सकटाक्षनिरीक्षणैः। नीलोत्पलैः = कृष्णवर्णोत्पलैः। ताडयन्तीव = घ्नतीव। रोलम्बकदम्बान् = भ्रमरौघान्। वशयन्ती = स्वायत्तीकुर्वन्ती। क्षुद्रघण्टिकाशिञ्जितेन-आकृष्ट निर्दिष्टजनानां दृष्टिर्यया सा। कस्तूरिकोद्वर्त्तनेन = मृगमदमिश्रानुलेपनेन, उद्वर्त्तितेव = कृताङ्गरागेव। श्यामा = कृष्णा षोडशी च। कुसुमविक्रेत्री = पुष्पविक्रयिणी।

पराङ्गनाप्रतारणेषु = परस्त्रीवञ्चनेषु, पटीयान् = अतिशयेन पटुः। इङ्गितवान् = चेष्टया बोधितवान्। कुसुममूल्यविषये = पुष्पार्थसम्बन्धे।

---

उसका अधरोष्ठ पान से रङ्गा हुआ था, यौवन के भार से उसकी गति मन्द पड़ गई थी, अपनी मधुर मुस्कान के द्वारा मानो वह मालती की कलियाँ उगल रही थी, अपने कटाक्ष से लोगों को इस प्रकार आहत कर रही थी जिससे ऐसा प्रतीत हो रहा था कि नील कमल से वह आहत कर रही हो, अपने लटकते घुँघराले बाल से मानों भौंरों को भी वश में कर रही थी, अपनी घुँघरू वाली करधनी की झङ्कार से लोगों की दृष्टि को अपनी ओर आकर्षित कर रही थी, ऐसा लग रहा था कि उसके शरीर पर कस्तूरी का उबटन लगा हो तथा शृङ्गार रस से उसने स्नान ही कर लिया हो।

परन्तु यतः महाराष्ट्रराज परस्त्री के प्रतारण में पटु नहीं थे अत उन्होंने अपने सेवक को ही शिवपूजार्थ फूल खरीद लेने का सकेत किया। वह

मूल्य-विषये आलपन्त्येवाकस्मात्—"आः ! कथं मां क्ष्वेलयसि ? इदमेव किं सौशील्यं महाराष्ट्रराजस्य समीपवर्तिनाम् ? कीदृशीयं चञ्चलता चित्तस्य; यद् युवतिदर्शन-समकालमेव द्रवति मनः ? नाहं वारवधूरिव विश्वेषां नर्मपात्रम् , किमिति मामेवं ब्रूपे ?" इत्युच्चैः सरोपमिवावदत्। ततः 'किमिति किमिति ?'–इत्त आगतेषु गौरसिंहादिषु महाराष्ट्रराजे च, कर्णौ स्पृष्ट्वा भृत्योऽवोचत्–"न मया तादृशं किमप्युक्तम्'। त्वमेव कथय—किमेतेनोक्तमिति महाराष्ट्रराजेनोक्ता–"महाराज ! रहसि कथयिष्यामि–यदुक्तमेतेन, त्रायस्व त्रायस्व"—इत्यश्रूणीव पातयन्ती स्वरभङ्गमवोचत्। महाराष्ट्रराजस्तु स्वदासेरस्य दुर्वृत्तमसहमानः सपदि तया सहोद्या-

आलपन्त्येव = वार्त्ताः कुर्वन्त्येव। क्ष्वेलयसि = नर्मभाषणं करोषि। 'छेड़ते हो' इति हिन्दी। सौशील्यम् = सुजनता। द्रवति = द्रुतं भवति। वारवधूरिव = वेश्येव। विश्वेषाम् = समेषाम्। नर्मपात्रम् = हासभाजनम्। सरोषमिव = सक्रोधमिव। रहसि = एकान्ते। स्वदासेरस्य = स्वभृत्यस्य। दुर्वृत्तम् = दुराचारम्। उद्यानम्=उद्यारामम्। स्मितवती=ईषद्धसितवती।

फूल बेचने वाली उस सेवक के साथ फूल की कीमत के विषय में बात चीत करती हुई अकस्मात् जोरों से चिल्ला उठी—"अरे ! तुम मुझे छेड़ते क्यों हो ? क्या महाराष्ट्र राज के सेवकों का ऐसा ही शील स्वभाव है ? अहो ! इतनी बड़ी चञ्चलता कि युवती पर दृष्टि पड़ते ही मन पिघल गया ! मैं किसी वेश्या की तरह सबके हँसी-दिल्लगी के लिए नहीं हूँ,फिर तूँ इस प्रकार की बात मुझ से क्यों कर रहा है !" उसके बाद "क्या हुआ, क्या हुआ !" ऐसा कहते हुए जब गौरसिंह आदि एवं स्वयम् शिवाजी भी वहाँ दौड़े आए तो उस सेवक ने कान छूकर कहा—"मैंने तो इसके साथ इस तरह कोई बात ही नहीं की है।" उसके पश्चात् महाराष्ट्र नायक ने उस फूल बेचने वाली से कहा—"तूँ ही बता कि इसने तुमसे क्या कहा है ?" फूलवाली ने उत्तर दिया—"महाराज ! इसने जो कहा है वह मैं एकान्त में आपसे बताऊँगी !" इतना कहते ही उसकी आँखों में आँसू भर

नमविशत्। सा तु किञ्चिदन्तः प्रविश्याभिमुखी स्थिता स्मितवती। यावच्चैष क्षणं रुरुदिषन्तीं क्षणञ्च स्मयमानामवलोक्य विस्मयते; तावत्सा प्रावोचत्-'महाराज! यदि क्षम्येत तत्कथयामि' स उवाच-'मा भैषीः, कथय'—

ततः सा वृक्षस्यैकस्य तले कुसुम-पिटकिकां संस्थाप्य, तदुपरि कलिकाव्यजनानि च धृत्वा, करौ सम्पुटीकृत्य प्रोवाच—

महाराज! किमिदम्? धर्म-ध्वजोद्धूनन-धुरीणेष्वपि न शोभन्ते इमे आचाराः। श्रूयते राज-कन्यामपहृत्य भवाँश्चिरं स्वावरोधेऽवस्थापयत्, तत्सहचरीभिरपि च मिष्टमालपम् उपवनेषु

---

रुरुदिषन्तीम् = रोदितुमिच्छन्तीम्। स्मयमानाम् = हसन्तीम्। विस्मयते= आश्चर्यं कुरुते।

पिटकिकाम् = क्षुद्रा "दौरी" पदवाच्याम्।

धर्मध्वजस्य, उद्धूनने = उच्चालने, धुरीणेषु=अग्रेसरेषु। स्वावरोधेषु = स्वान्त पुरेषु। मिष्टम् = मधुरम्। उपवनेषु = उद्यानेषु। पर्य्या

---

श्र ए और "रक्षा करें महाराज! रक्षा करें" कहते कहते उसकी आवाज शिथिल हो गई। अपने भृत्य के उस प्रकार के अनाचार का सहन नहीं करने वाले महाराष्ट्रराज उसी समय उस फूलवाली के साथ उद्यान में घुस गए। उद्यान में प्रवेश करते ही उसने महाराष्ट्र राज के सम्मुख खड़ी होकर मुस्करा दिया। तुरत रोते और तुरत हँसते देख कर शिवाजी कुछ विस्मित जैसे हो ही रहे थे कि वह उनसे कहने लग गई—"महाराज! यदि आप क्षमा करें तो मैं कहूँ।" महाराष्ट्रराज ने कहा—"डरो मत, कहो, कहो!"

उसके बाद एक वृक्ष के नीचे अपनी फूल की टोकरी रख कर उसके ऊपर उसने कलियों के बने पखे भी रख दिए और फिर महाराष्ट्र राज से हाथ जोड़ कर कहने लगी—

"महाराज! यह क्या? धर्म की ध्वजा फहराने वालों में अग्रसर आप लोगों के लिए इस तरह का आचरण शोभा नहीं देता। सुना जाता है

पर्य्यटयत्। दिल्लीं समागतस्य च प्रथमे एवाह्नि निशीथे भवतः शिविरान्निःसरन्ती काचन यवन-सुन्दरी कतिभिश्चिद्दर्शकैर्दृष्टा। साम्प्रतमपि च मां भवतो भृत्याः क्ष्वेलयन्ति, भवानपि चैकान्ते मामनीतवानस्ति, केन किं सम्भावयिष्यते—इति को जानीते।

तदाकर्ण्य क्षणं जडीभूत इव महाराज उवाच—

सुन्दरि! स्फुटं कथय, का त्वम्? किमीहसे? कुत आगता? कथमेवं सुगूढं वृत्तं वेत्सि? किमिव मां मोहयसि? स्वयमेव स्वकीयमुद्देश्यं विशकलय्य कथय।

---

टयत्=अभ्रामयत्। क्ष्वेलयन्ति=हासयन्ति। एकान्ते=रहसि। सम्भावयिष्यते=कथयिष्यते, उत्प्रेक्षयिष्यते।

जडीभूत इव=स्तब्धीभूत इव। क्रियाश्चरित्र मिश्रभाव विभाव्येत्यर्थः।

सुगूढम्=अतिगुप्तम्। विशकलय्य=स्पष्टीकृत्य।

---

कि राजकुमारी का अपहरण करके आपने उन्हें चिर काल तक अपने अन्तःपुर में रखा और उनकी सहेलियों के साथ भी मीठ मीठी बातें करते हुए अपने उपवन में भी आपने राजकुमारी (रोशनआरा) को खूब घुमाया। इधर जिस दिन आप दिल्ली आए उसी दिन मध्य-रात्रि में आपके शिविर से बाहर जाती हुई एक यवन-सुन्दरी को भी कई लोगों ने देखा है। आज आपके सेवक भी मेरे साथ छेड़खानी कर रहे हैं और आप भी मुझे एकान्त स्थान में ले आए हैं। पता नहीं लोग क्या क्या सोचेंगे।

उसकी आक्षेप-पूर्ण बातें सुन कर महाराष्ट्रराज थोड़ी देर के लिए तो स्तब्ध ही गए, परन्तु बाद में उन्होंने पुनः उससे पूछा—

"सुन्दरी! ठीक-ठीक बताओ—तुम कौन हो, क्या चाहती हो और कहाँ से आ रही हो? इस तरह की रहस्यपूर्ण घटनाओं की तुम्हें कैसे जानकारी मिली? क्या तुम मुझे ठगना क्यों चाह रही हो? अपने उद्देश्य को साफ साफ बतलाओ।"

अथ सा महाराजं विक्षुब्धमेवाऽऽकलय्य, सप्रणाममुवाच—क्षम्यतां महाराजेन। न श्रीमतो भृत्येन किमप्युक्तम्, न किमपि वचनीयोऽसौ निर्दोषः। अहं श्रीमत्या दिल्लीश्वरकुमार्य्याः सहचरी। केवलं रहसि समानेतुमाय्यं प्रपञ्चनमकार्षम्।

ततः स उवाच—आः! कठिनमाचरितमिदं त्वया, विनाऽपराधं वयमत्र निगृहीताः स्म। त्वादृशीनां यातायातं केनचन ज्ञायेत तत्सङ्घटेत महाननर्थः!

सा उवाच—महाराज! राजकुमारी अभिनव-चन्द्रकलेव तनुगात्री, मृद्वीकेव शुष्का, प्रभातप्राया रजनीव मन्दतारका,

---

वचनीयः=निन्दनीय। प्रपञ्चनम्=धौर्त्यपूर्णचातुर्यम्।

विनाऽपराधम्=निर्दोषम्। त्वादृशीनाम्=राजकुमारीभृत्यसदृशीनाम्। सङ्घटेत=सम्भवेत्।

अभिनवचन्द्रलेखेव=नूतनशशिकलेव। तनुगात्री=मृदङ्गी। शुष्का=नीरसा। मृद्वीकेव=द्राक्षेव। मन्दाः, तारका=उडव, यस्या सेति रजनीपक्षे, रसनारीपक्षे च मन्दे=अल्पावलोकनके, तारके=कनीनिके,

---

उसके पश्चात् शिवाजी को विक्षुब्ध जैसा ही देख कर उस युवती ने प्रणाम करती हुई कहा—

"महाराज! क्षमा करें। आपके सेवक ने मुझे कुछ भी नहीं कहा है। यह सर्वथा निर्दोष है और इस लिए वह कथमपि निन्दा पात्र नहीं हो सकता। मैं तो दिल्लीश्वर औरङ्गजेब की कन्या की सहेली हूँ। आपसे मैं एकान्त में बातें करना चाहती थी, इसी लिए मैंने इतना प्रपञ्च खड़ा किया था।"

तदनन्तर महाराष्ट्र राज ने कहा—"आः! तूने बहुत बड़ा अन्याय किया है। एक तो हमलोग निरपराध ही यहाँ कैद कर लिए गए हैं और और यदि किसी को तेरे यहाँ आने जाने की खबर लगी तब तो और भी भयङ्कर अनर्थ आ पड़ेगा।

फूलवाली ने कहा—"महाराज! राजकुमारी तो अब नवीन चन्द्रकला

योगिनीव विगताशनाया-पिपासा, अवधूतेव चोन्मत्ता संवृत्ताऽस्ति—इति यदि भवतः प्रतिवचन-जीवातुं न गृह्णाति; तत एव महाननर्थः सङ्घटेत। दीनबन्धो! प्रणम्य ब्रूते राजकुमारी यद्—नूनं वधू-वध-बुधो भवान्। नाहं किञ्चन बहु वचनीयं मन्ये, यतो निर्दयानां भवादृशानां हृदये मुक्तकण्ठ-रोदन-पुरस्सरं सहस्रशो विनयै रोदनेनापि च दया न प्रचरति, किमरण्यरोदनेन? अथ वा काननेष्वपि अनन्य-श्राव्यमपि रुद्यतेऽरं दुःखितैः, यतो रोदनं

यस्याः सेत्यर्थः। योगिनीव = योगसाधनरतेव। विगते = दूरीभूते, अशनायापिपासे = बुभुक्षापानेच्छे, यस्या सा। अवधूतेव = ब्रह्मज्ञानिनीव। उन्मत्ता = उन्मादाख्यस्मरदशां प्राप्ता। अवधूताऽपि कृत्याकृत्यविवेकविधुरतामुपगता लोकैरुन्मत्तेव बुध्यते। संवृत्ता = सञ्जाता। प्रतिवचनजीवातुम् = प्रत्युत्तररूप जीवनौषधम्। अनर्थः = दशमावस्थाप्राप्तिरूपः। वधूवधबुधः = नारीहननपण्डितः। निर्दयानाम् = कृपाकृपणानाम्। विनयैः = नम्रतादर्शनैः। अरण्यरोदनेन = काननक्रन्दनेन। अरण्ये श्रोत्रभावेन रोदनं निष्फलमिति, यत्र तु श्रुत्वाऽपि श्रोतारोऽनुरूपं कार्यं न कुर्वन्ति तत्रैव प्रयोग इति ध्येयम्। अनन्यश्राव्यम् = अनितरश्रोतव्यम्।

की तरह खिन्न हो गई हैं, दाख (किसमिस) की तरह सूख गई हैं, जिस प्रकार प्रभात काल के समीप आने पर रजनी के तारे मन्द-ज्योति हो जाते हैं उसी प्रकार राजकुमारी की आँखों के तारे भी मन्द ज्योति हो गए हैं, योग करने वालों के समान उनकी भूख-प्यास समाप्त हो गई है और अवधूता की तरह उन्मत्त हो गई हैं। अतः यदि आप से उत्तररूपी औषधि नहीं मिलेगी तो राजकुमारी के लिए ही महान् अनर्थ सम्भावित है। दीनबन्धो! प्रणाम के साथ राजकुमारी ने आपसे यही कहा है—'आप निश्चित रूप से वधू वध में निपुण हैं। मुझे बहुत कुछ नहीं कहना है, क्योंकि जब आप जैसे निर्दय व्यक्तियों के हृदय में मुक्त कण्ठ रोदन पूर्वक नाना प्रकार के विनयों से भी दया नहीं आती तो फिर अरण्य रोदन करने से क्या होगा? अथवा दुःख आने पर जङ्गल में भी लोग

स्वभावत एवातिकठिनमपि दुःखं किञ्चिन्मृदूकरोति। तथैवमधापि रोरुद्यते। जीवयतु वा, नाशयतु वा, तदत्र महाराजः प्रमाणमिति।

स उवाच—भद्रे! सर्वदा इदमेव प्रावोचं—यद् जनकेन चेदङ्गीक्रियेत कुमारी ममार्पयितुम्, तन्नास्ति मे नेति प्रतिद्वन्द्विनी वाक्। अन्यथा तु निवेदय कुमारीं कुमारञ्च ममावस्थाम्, वेदय च यद् एवं सम्राजा निरर्थकोप-विपयीकृतश्चेत् कुमारी-प्रणय मलीमसोऽपि ज्ञायेय, तदवश्यं मम कुमार्य्याश्च प्राण-संशयः। भद्रे! स्मारं स्मारं कुमार्य्या मुख-मण्डलं निष्कपटमसाधारणञ्च प्रेमाणं खिद्येतमाम्। किं करोमि? दैवं नानुकूलम्! एवमाल-

स्वभावतः = प्रकृत्या। मृदूकरोति = लघुतां नयति। रोरुद्यते = भृशं क्रन्द्यते। जीवयतु = प्राणयतु।

अर्पयितुम् = दातुम्। प्रतिद्वन्द्विनी = विरुद्धा। अवस्थाम् = स्थितिम्। वेदय = बोधय। निरर्थकोपविषयीकृतः = निष्कारणकोधा-स्पदीकृतः। कुमारीप्रणयमलीमसः = स्वनारीप्रेममलिनः। ज्ञायेय = चेयेय, कर्मणि लिङुत्तमपुरुषैकवचनम्। प्राणसंशयः = जीवनसन्देहः। निष्कपटम् = निर्व्याजम्। असाधारणम् = अनितरलभ्यम्। प्रेमाणम् = प्रणयम्।"प्रेमा ना प्रियता हार्दं प्रेम" इत्यमरः। खिद्येतमाम्=भृशं विषीदामि।

अपने आप रोते ही हैं, क्योंकि क्रन्दन का यह स्वभाव है कि वह कठिन से कठिन विपत्ति को भी कुछ शिथिल कर देता है। अतः मैं आज भी रो रही हूँ। आपकी इच्छा है चाहे आप मुझे जिलायें या मारें।"

महाराष्ट्रराज ने उत्तर दिया—"भद्रे! मैं तो सब दिन यही कहता आ रहा हूँ कि यदि उसके पिता मुझे उसे समर्पित करना चाहें तो मेरी ओर से प्रतिषेध कदापि नहीं होगा। उसके पिता की अनुमति के बिना मेरी विवशता के विषय में तुम राजकुमारी तथा राजकुमार (मुअज्जम) से कह देना। साथ ही उन्हें यह भी समझा देना कि यदि दिल्ली सम्राट् मुझे राजकुमारी से प्रेम करने वाला समझ कर कदाचित् मेरे ऊपर अनर्थक क्रोध कर बैठेंगे तब तो हम दोनों के ही प्राण संशयास्पद हो

पत्येव महाराजे गौरेणोच्चैराकार्य्य कथितम्—"कुमारमायाजिह्मः समुपस्थितोऽस्ति, अपेक्षते च महाराजम्"—इति। ततस्तां सपदि निवर्त्य, इत आयातो महाराजः। कुमारेण चाऽऽदरोचिताचारं विधाय कथितम्–महाराष्ट्र-चक्रवर्तिन्! यो मां मम स्वसारञ्च तथा रक्षितवान्; तं तातो मे न सत्करोतीति किमत्र कारणं नावैमि! आः! प्रहरिणोऽप्यद्य पश्यामि। नूनं मिथ्याभिशंसिभिश्चाटुकारैरेवोपपादितं किमपि भवद्विषये। शास्तिखानादीनां वराकाणां सम्बन्धिनो द्रुह्यन्त्येव भवन्तम्। अधुनैव गत्वा तातं भवतो महाराष्ट्र-देशं प्रति कुशलेन निवृत्त्यै निवेदयिष्यामि। मा स्म गृह्णीथा दोषमत्राऽऽस्मा-

आदरोचिताचारम् = सत्कारानुकूलव्यवहारम्। सत्करोति = आद्रियते। नावैमि = न जानामि। मिथ्याभिशंसिभिः = असत्यकथयितृभिः। उपपादितम् = विशिष्य कथितम्। द्रुह्यन्ति = द्विषन्ति। निवृत्त्यै =

जाएंगे। भद्रे! राजकुमारी के मुखमण्डल तथा निश्छल एवम् अनन्य प्रेम की याद कर मैं अतिशय दुःखी हो रहा हूँ। परन्तु मैं क्या करूँ! हम लोगों का भाग्य ही अनुकूल नहीं है।" उस युवती के साथ इस प्रकार शिवाजी बातचीत कर ही रहे थे कि गौर सिंह ने उच्चस्वर में उनसे निवेदन किया—"महाराज! कुमार मुअज्जम आपसे मिलने आए हैं।" सुनते ही उस युवती को शीघ्र विदा कर महाराष्ट्रराज इधर चले आए। उनके आते ही राजकुमार मुअज्जम ने यथोचित सम्मान आदि के साथ उनसे कहा—"महाराष्ट्र देश के सम्राट्! मेरी तथा मेरी बहन की उस तरह रक्षा करने वाले आपका भी मेरे पिता जी सत्कार क्यों नहीं कर रहे हैं—यह बात मेरे समझ में नहीं आ रही है। आः! आज आपके साथ उनके प्रहरियों को भी देख रहा हूँ। बहुत सम्भव है कि झूठ बोलने वाले चाटुकारों ने ही आपके विषय में मेरे पिता जी से कुछ उलटा सीधा कह दिया है। शाइस्ता खाँ आदि नीचों के कुटुम्ब तो आप से द्रोह कर ही रहे हैं। मैं अभी चल कर पिता जी से निवेदन करता हूँ कि वे आपको सकुशल महाराष्ट्र देश लौट जाने की अनुमति दे दें। इसमें

कीनम्। क्षमस्व एतैरेव पदैः पितरं गत्वा भवतो माहात्म्यं बोधयिष्यामि—इति कथयन् परावृत्तः। महाराष्ट्रराजस्तु "अस्य विपरीत फलं न स्यात्" इति कथयन् तं विससर्ज।

समयेऽस्मिन् यवनराजः कुसुम-वाटिका-मध्यस्थे मालतीकुञ्जे मारकत-दण्डायामासन्द्यामुपविष्टः। परितः सजलमणिमय-पात्रेषु विविध-कुसुम गुच्छा आयोजिताः। पार्श्वपरिवर्तिन्येकस्मिन् जाल-भवने बहवः शुकाः, पिकाः, सारसाः, कलविङ्काः, लावाः, जीवञ्जीवाः, चातकाः, कुरराः, केकिनः, क्रौञ्चाः, कोयष्टिकाश्च कूजनैः, उत्फालनैः, उड्डीयनैः, लूमदोलनैः, पत्त्रस्फुरणैः, चञ्चुकोटिभिः पत्त्रति-कण्डूयनैः, प्रणयकलहैः, समञ्जीर-शिञ्जित नर्तनैः, कपट-

परावृत्ते। मारम गृहीथा = मा विद्धि। माहात्म्यम् = गौरवम्।

मालतीकुञ्जे = माधवीमण्डपे। मारकतदण्डायाम् = मरकतमणि-निर्मितहस्तचरणायाम्। आसन्द्याम्='कुर्सी' पदाभिधेयायाम्। सजल-मणिमयपात्रेषु = सवारिरत्नखचितभाजनेषु। विविधकुसुमगुच्छाः = अनेकविधसुमस्तबकाः। जीवञ्जीवाः = चकोराः। कोयष्टिकाः = टिट्टिभाः। लूमदोलनैः=लाङ्गूलचालनैः। 'पुच्छोऽस्त्री लूमलाङ्गूले" इत्यमरः। समञ्जीर-

आप हम लोगों का दोष न समझें। क्षमा करें, मैं इन्हीं शब्दों में अपने पिता जी से आपकी महत्ता बतलाऊँगा—' यह कह कर राजकुमार मुअज्जम वहाँ से लौट गया। इधर महाराष्ट्रराज ने भी "इसका परिणाम विपरीत न हो जाय" यह कहते हुए राजकुमार को विदा कर दिया।

उस समय यवन सम्राट् औरङ्गजेब फूलवारी के बीच में मालती कुञ्ज के पास मरकत मणि की बनी कुर्सी पर बैठा हुआ था। दोनों तरफ जल पूर्ण मणिमय पात्रों में अनेक प्रकार के फूलों के गुच्छे सुशोभित हो रहे थे। पास में ही बने हुए जालीदार घर में बहुत से शुग्गे, कोयल, सारस, कलविङ्क, बटेर, चकोर, समुद्री उकाब, मोर, क्रौञ्च एवम् टिट्टिभ आदि पक्षियाँ खेलने के क्रम में कभी कूजती थीं, कभी कूदती थीं, कभी उड़ती थीं, कभी पूँछ डुलाती थीं, कभी पाँखें फरफराती थीं, कभी चोंच से पाँखें खुजलाती थीं,

कलहः, मृद्वीकादि रसने, प्रेयसी प्राप्त्यहम्पूर्विका युद्धेश्च विजह्रिरे। साम्मुखीनायां ताम्बूल दलाकारायामेकस्यां पुष्करिण्यां कारण्डवाकारा पञ्चषा परिष्कृतास्तरयः सर्पन्ति स्म। तत्प्रान्ते च बहवो हंसा कारण्डवा बका सारसाश्च मोदन्ते स्म। तावदेकत एकस्मात् कपोत-भवनान्नि सत्य महान्तः कपोता प्रडीनोड्डीन-सण्डीनैरुड्डायमाना गगन-तलं स्पृशन्त तारका इव समवृतिर।

अस्मिन समये साम्मुखीन आस्तरणे, एक आरव्य-भाषाया-कविर्वृद्धो मौलिवि सम्राज परम-कृपा-पात्रमुपविष्ट आसीत्।

शिञ्जितनर्तने = नूपुरघण्टिकाशब्दारम्भे। मृद्वीकादीनाम् = द्राक्षादीनाम्, रसने = आस्वादने। प्रेयसीप्राप्ती = प्रियप्राप्त्यै, या अहम्पूर्विका = अहम्पूर्वमितीच्छा, तया युद्धे = कलहे। साम्मुखीनायाम् = पुरो विद्यमानायाम्। ताम्बूलदलाकारायाम् = नागवल्लीपत्राकृतिकायाम्। पुष्करिण्याम् = दीर्घिकायाम्। कारण्डवाकारा = कारण्डवाकृतय। तरय = नौका। सर्पन्ति स्म = प्लवन्ते स्म। एकत = एकस्यां दिशि, उड्डीयमाना = उत्पतन्त। तारका इव = उडव इव। समवृतिरे = जाता।

आस्तरणे = विष्टरे। आरव्यभाषाया = अरबदेशीयभाषाया, 'अरबी' इति ख्याताया। परमकृपापात्रम् = अतिशयस्नेहभाजनम्।

कभी आपस में प्रणय कलह करती थीं, कभी नूपुर की जैसी झङ्कारों के साथ नाचती थीं, कभी दाख आदि फलों का रस चूसती थीं और कभी अपनी प्रेयसी का प्रथम प्राप्ति की अभिलाषा के कारण परस्पर कलह करती थीं। आगे वर्तमान पान के पत्ते के आकार के एक पोखरे में बतक की आकृति के पाँच-छः नाव तैर रहे थे। उस पोखरे की चारों तरफ बहुत से हंस, बतक, बक तथा सारस मजा ले रहे थे। तब तक एक ओर से किसी कबूतरों की छतरी से बहुत से कबूतर निकले और उन सब ने विभिन्न विधियों—प्रडीन, सडीन तथा उड्डीन—से उड़ कर तारों की तरह आकाश का आलिङ्गन कर लिया।

उस समय आगे बिछावन (अथवा दरी) पर एक अरबी भाषा

स बहुशः कथा आलपन् कविताः पठन् यवनराजं तोषयन् प्रसङ्गतः समगादीत्—

महाराज! रात्रौ दिने च समप्रकाशः शुक्ले कृष्णेऽपि च पक्षे पूर्णः कन्दरिणां कन्दर-मन्दिरेष्वपि किरण-किरणो निर्गत-कलङ्क-पङ्कातङ्को भवतो यशश्चन्द्रश्चमत्करोति! तस्मिन् कलङ्कलेशस्यापि पङ्कमाशङ्क्य क्षुभ्यति नो हृदयम्।

दिल्लीश्वरः—तात्पर्यं न बुद्धम्!

आरब्यकविः—वीरवर! न मम क्षमता विशिष्य वक्तुम्,

---

प्रसङ्गतः=अवसरतः। समगादीत् = समभाणीत्।

समप्रकाशः = तुल्यालोकः। पूर्णः = अखण्डः। कन्दरिणाम् = गिरीणाम्। कन्दरमन्दिरेषु = दरीसदनेषु। किरणकिरणः = दीधितिक्षेपकः। निर्गतकलङ्कपङ्कातङ्कः = दूरीभूतदुर्यशःकर्दमाशङ्कः। यशश्चन्द्रः = कीर्तिराकेशः। चमत्करोति = प्रकाशते। कलङ्कलेशस्यापि = दुर्यशोमात्राया अपि। पङ्कम् = मालिन्यम्। आशङ्क्य = सम्भाव्य। क्षुभ्यति = खिद्यते।

क्षमता = शक्तिः। विशिष्य = विविच्य। परतः = पश्चात्।

---

का कवि बूढ़ा मौलवी सम्राट के अत्यन्त कृपापात्र बैठा हुआ था। विभिन्न प्रकार की कहानियों तथा कविताओं से यवन-सम्राट् को प्रसन्न करते हुए मौल्वी साहब ने सम्राट् से कहा—

महाराज! रात एवं दिन में समान रूप से प्रकाशमान शुक्ल पक्ष तथा कृष्ण पक्ष में भी सर्वाङ्गपूर्ण, पर्वत की गुफाओं में किरण फैलाने वाला सर्वथा निष्कलङ्क आपका यशश्चन्द्र प्रकाशित हो रहा है। किन्तु इस यशश्चन्द्र के कलङ्क-लेश की भी कीचड़ लगने की आशङ्का से मेरे हृदय में कुछ क्षोभ हो रहा है।

दिल्लीश्वर—तुम्हारे कहने का तात्पर्य मैं नहीं समझ रहा हूँ।

अरबी कवि—वीरवर! स्पष्ट रूप में कहने का साहस तो मुझे नहीं

किन्तु यदि कश्चन चिरं भवता सह विहितसमरोऽपि पश्चात् करप्रदताम्, स्वमपि भवत्प्रजास्वेवान्यतमं मन्यमानः शिरो नमयन् समागच्छेत्; तत् तस्मिन् महाराजस्यातिदयादर्शनमतिमहत्ता सूचकम्।

दिल्लीश्वरः—मन्ये शिवमधिकरोति गीरियम्।

आरब्यकविः [ हस्तौ बद्ध्वा ] किमज्ञातं जगतीपतेः!

दिल्लीश्वरः—महामूर्खः शिव। मया आदर्तुमाकारितोऽपि प्रथम एव दिने राजसभायां किमपि प्राजल्पत्। ततोऽपि सुहर्म्ये स्थापितोऽपि सत्क्रियमाणोऽपि दिल्लीनगरवीथिकासु परितः पर्यटितुमारेभे। परस्सहस्रांश्च दिल्ली-वास्तव्यान् स्ववासगृहे आगन्तुमन्य-

---

करप्रदताम् = राजदेयदातृताम्। अतिदयादर्शनम् = अतिशयकृपाप्रकटनम्। अतिमहत्तासूचकम् = अत्युदारताबोधकम्।

गीः = वाणी। "गीर्वाग् वाणी सरस्वती" इत्यमरः।

आदर्तुम् = सत्कर्तुम्। आकारितः = आहूतः। सुहर्म्ये = शोभने प्रासादे। आगन्तुम् = आयातुम्। अन्वमन्यत = अनुमोदितवान्। महतः,

---

हो रहा है। किन्तु मेरा इतना ही निवेदन है कि यदि कोई व्यक्ति चिरकाल तक आपके साथ युद्ध करने के बाद भी पीछे चलकर आपको कर देने के लिए राजी होकर अपने को भी आपकी प्रजाओं में ही अन्यतम मानता हुआ आपके समक्ष शिर झुकाकर प्रस्तुत हो जाय तो उस शरणागत व्यक्ति के प्रति श्रीमान् का दया प्रदर्शन ही श्रीमान् के महत्त्व का सूचक होगा।

दिल्लीश्वर—मुझे लग रहा कि तुम शिव के बारे में कह रहे हो।

अरबी कवि—[ हाथ जोड़कर ] महाराज से क्या छिपा रह सकता है!

दिल्लीश्वर—देखो, शिव बहुत बड़ा मूर्ख है। मैंने तो उसे सम्मान करने की दृष्टि से ही बुलाया था प्रथम दिन ही वह राजसभा में बकने लग गया। उसके बावजूद भी मैंने उसे सुन्दर अट्टालिका में ठहरने को दिया और उसके सत्कार की भी व्यवस्था कर दी, फिर भी वह मूर्ख दिल्ली को

मन्यत । ततो महाकलकल–रोधनाय कोटपाल–सूचनानुरूपं प्रहरिणः स्थापिताः । वन्या एते न विदन्ति राज–सभा–व्यवहारम् ।

आरव्यकविः—महाराज ! उचितमेव शासनं वन्यानाम् । परं साम्प्रतं दिल्लीनगरे गृहे गृहे विपणौ विपणौ च सर्वैः शिवस्यैव कथा प्रस्तूयते—इति भविष्यति किं व्यवसितं महाराजैः ?

दिल्लीश्वरः—यदि स मर्य्यादां प्रतिपालयेत्, तर्हितोऽपि सत्कृत्य निवर्त्तयितुमेव सन्नोऽस्मि ।

आर०—विजयतां महाराजः !

---

कलकलस्य = कोलाहलस्य, रोधनाय = वारणाय । कोटपालस्य = नगरशान्तिरक्षकस्य, "कोतवाल" इति ख्यातस्य, सूचनानुरूपम् = रोधनानुकूलम् । वन्याः = आरण्यकाः ।

शासनम् = दण्डनम् । भविष्यति = आगामिनि काले । व्यवसितम् = निश्चितम् ।

मर्य्यादाम् = राजसभाप्रतिष्ठाम् ।

---

गलियों में घूमने लग गया और हजारों दिल्लीवासियों को अपने वास-गृह में आने जाने की अनुमति देदी । ऐसी स्थिति में जब कोतवाल की सूचना मिली तब मैंने कोलाहल को रोकने के लिये प्रहरियों को वहाँ नियुक्त कर दिया है । ये जङ्गली हैं न ! इन्हें इस बात का ज्ञान ही नहीं है कि राजसभा में किस तरह व्यवहार करना चाहिये ।

अरबी कवि—महाराज ! जङ्गलियों का शासन करना तो उचित ही है । परन्तु आज-कल दिल्ली नगर के घर-घर में दूकान-दूकान में सब के मुँह से शिव की ही चर्चा सुनाई दे रही है । इसलिए भविष्य में महाराज ने क्या करने का निश्चय किया है ?

दिल्लीश्वर—यदि वह मर्यादा का पालन करे तो अब भी मैं उसे सत्कारपूर्वक महाराष्ट्र लौट जाने देने के लिये तैयार हूँ ।

अरबी कवि—महाराज की विजय हो !

अथ कुमाररामसिंहं त्वरया समागच्छन्तमालोक्य, ऐकान्तिकं कार्य्यमाशङ्कमान आरव्य-कविरुदस्थात्, प्रणम्य च निवृत्तः। रामसिंहस्त्वागत्य हस्तमेकमुत्थाप्य प्रवणीभूय सादरमुवाच—महाराज! सम्प्रत्येव तातस्य पत्रं प्राप्तवानस्मि, त्रायतां त्रायतां महाराजः!

दिल्लीश्वरः—उपविश, उपविश, किमिव क्षुब्धोऽसि?

रामसिंहः—भारतराज! महान् क्षोभस्य विषयः।

दिल्लीश्वरः—विशकलय्य कथय।

रामसिंहः—[ उपविश्य, अञ्जलिं बद्ध्वा ] दिल्लीश्वर! तातो महाराष्ट्रराजं वशमानीय दिल्लीं प्रेष्य, स्वयं विजयपुराधीशेन युद्धमारभत।

दिल्लीश्वरः—[ आसन्दी-दण्डासक्त कूर्परे वाम-हस्त-तले कपोलं

---

ऐकान्तिकम् = एकान्ते भवम्, रहस्यम्। उदस्थात् = उत्थितः।
प्रवणीभूय = नम्रीभूय। तातस्य = पितुः।
आसन्दीदण्डे, आसक्तः कूर्परः = कफोणिः, बाहुमध्यभागः यस्य तस्मिन्।

---

उसके बाद कुमार रामसिंह को तेजी से महाराज के पास आते देखकर कवि ने सोचा कि कोई एकान्त वार्ता होगी और इसलिये वहाँ से उठ गया और महाराज को प्रणाम कर वहाँ से चल दिया। उधर रामसिंह ने आते ही महाराज को सलाम किया और नम्रता एवं आदर के साथ महाराज से निवेदन किया—"महाराज! अभी-अभी पिता जी का पत्र मिला है। अब रक्षा करें महाराज! रक्षा करें।"

दिल्लीश्वर—बैठो, बैठो, इतना घबराए क्यों हो?

रामसिंह—भारतराज! घबराने की तो बात ही आ पड़ी है।

दिल्लीश्वर—साफ साफ बतलाओ, क्या बात है?

रामसिंह—[ बैठने के बाद हाथ जोड़कर ] दिल्लीश्वर! महाराष्ट्रराज को किसी तरह वश में लाकर दिल्ली भेज देने के बाद पिता जी ने स्वयम् बीजापुर के साथ युद्ध छेड़ दिया है।

दिल्लीश्वर—[ कुर्सी की बाँह पर केहुनी रख कर बाँयीं हथेली पर

सस्याप्य भ्रुवौ किञ्चिदाकुञ्च्य विस्फारिताभ्यां नयनाभ्यां निपुणमीक्षमाणः ]

आम् ! ज्ञातम् ।

रामसिंहः—तत्र च द्विगुणैस्त्रिगुणैश्च शत्रुभिराक्रान्तः–इति तस्य महासङ्कटमुपस्थितम् ।

दिल्लीश्वरः–[ स्वगतम् ] अस्तु, जयसिंहः शिवश्च द्वावेव भारते दुर्दमनीयौ वीरौ, तदेकः कारागारे बद्धः, अपरश्च तत्र विनश्येच्चेत् साधु भवेत् । [ प्रकटम् ] ततः ?

रामसिंहः—राजाधिराज ! तातः सविनयं सेनासाहाय्यं वाञ्छति ।

दिल्लीश्वरः—किमिति ? तव पिता तस्मिंस्तु समये साभिमानं तावत्यैव सेनया प्रस्थितः, अधुना च सेनान्तरमपि वाञ्छति ।

---

वामहस्ततले = दक्षेतरकरनिम्नभागे । आकुञ्च्य = सङ्कोच्य ।

दुर्दमनीयौ = दुःखेन दमयितुं शक्यौ । अवशीकरणीयाविति यावत् । विनश्येत् = म्रियेत । साधु = शोभनम् ।

---

गाल रख कर भौंहें टेढ़ी कर रामसिंह की ओर कड़ी नजर से देखता हुआ ] अच्छा समझ गया ।

रामसिंह—उस युद्ध में मेरे पिता जी के ऊपर शत्रु की दूनी-तिगुनी सेना ने आक्रमण कर दिया है जिससे उनके लिये बहुत बड़ा संकट उपस्थित हो गया है ।

दिल्लीश्वर—[ मन ही मन ] ठीक तो है, भारतवर्ष में दुर्दमनीय वीर तो दो ही हैं—जयसिंह और 'शिव' । इन दोनों में एक 'शिव' तो कैद में ही है और दूसरा जयसिंह भी यदि मर जाय तो अच्छा ही होगा । [ प्रकट रूप में ] तो क्या ?

रामसिंह—राजाधिराज ! पिताजी विनयपूर्वक आपसे सैनिक सहायता चाहते हैं ।

दिल्लीश्वर—क्यों ? उस समय तो तुम्हारे पिता अभिमान से चूर होकर थोड़ी ही सेना लेकर यहाँ से चले थे, फिर आज अधिक सेना क्यों चाह रहे हैं ?

रामसिंहः—राजाधिराज ! अवितर्कितमिदं सम्पन्नम्, त्रायतां महाराज ! [ इति चक्षुषोर्नीरं बभार ]

अव०—कुमार ! पत्रं लिख—यत् सम्प्रति सेना प्रेषयितुं न शक्यते।

राम०—विश्वम्भराधीश्वर ! तात सदा प्राणानगणयन् श्रीमन्तमन्ववर्तत। दैवादद्य प्राप्तसङ्कटश्चेद्रक्षणीयो महामान्यैः !

अव०—मम किं करणीयं तदहं वेद्मि !

राम० [ अधोमुखस्तूष्णीमवर्तत ]

अव०—अप्यन्यदपि किञ्चित् तव पित्रा लिखितम् ?

राम०—[ अञ्जलिं बद्ध्वा ] अस्ति किञ्चित् ?

अव०—सपदि कथय, न मेऽवसरो बहु श्रोतुम् !

---

अवितर्कितम्=अविचारितम्। बभार=दधार।

---

रामसिंह—राजाधिराज ! यह घटना तो अचिन्तितपूर्व आ पड़ी। ऐसी परिस्थिति में महाराज कृपा कर बचाएँ [ इतना कहते-कहते रामसिंह की आँखों में आँसू भर आए ]

औरङ्गजेब—कुमार ! तुम उन्हें पत्र का उत्तर दे दो कि अभी तो और सेना भेजने में मैं असमर्थ हूँ।

राम०—महाराज ! अपने प्राण की भी उपेक्षा करके पिता जी श्रीमान् का अनुसरण करते रहे हैं। आज यदि दौर्भाग्यवश उनके ऊपर विपत्ति आ पड़ी है तो श्रीमान् को उनकी रक्षा अवश्य करनी चाहिए।

और०—मुझे क्या करना चाहिये—यह मैं अच्छी तरह जानता हूँ।

राम०—[ सिर झुकाके चुपचाप बैठे रहे ]

और०—तुम्हारे पिता ने और भी कुछ लिखा है ?

राम०—[ हाथ जोड़कर ] जी हाँ, एक बात और भी उन्होंने लिखी है।

और०—जल्दी बतलाओ, बहुत सुनने का समय मेरे पास नहीं है।

राम०—[ अमुया भङ्गयैव हताशो मन्दमाह ] आर्य्य ! तातः शिवं प्रत्यजानात्-यद् "दिल्लीं गतस्य भवतो न काऽपि विपद् भविष्यति, कुशलेन च निवर्त्तयिष्यते"-इति ।

दिल्लीश्वरः—तत् ?

राम०—वीरवर ! राजपुत्राणां प्रतिज्ञा मिथ्या न भवति-इति पालनमेतस्याः श्रीचरणानामधीनम् ।

अव०—मूढा राजपुत्राः, यत् पराधीनेऽपि विषये एवं प्रतिजानन्ति ।

राम०—[ कटु वचनमिदं विषमिव पीत्वाऽधोमुखः ]

अव०—चेदेव न भवेत् ?

राम०—तत आत्मविसर्ज्जनमपि पित्रा प्रतिज्ञातम् ।

---

प्रत्यजानात् = प्रतिज्ञातवान् ।

आत्मविसर्जनम् = जीवनसमर्पणम् ।

---

राम०—[ उसकी बातचीत के ढङ्ग से ही हताश होकर मन्द स्वर से बोले ] आर्य ! पिताजी ने शिवाजी से प्रतिज्ञा की थी—"दिल्ली जाने पर आपके ऊपर किसी प्रकार की विपत्ति नहीं आयेगी और आप कुशलपूर्वक वहाँ से महाराष्ट्र लौट आयेंगे" ।

औरं०—तो क्या ?

राम०—वीरवर ! राजपूतों की प्रतिज्ञा झूठी नहीं होती है । अतः अब पिताजी की प्रतिज्ञा का पालन श्रीमान् के ही अधीन है ।

औरं०—राजपूत तो मूर्ख हुआ करते हैं, तभी तो पराधीन विषय में भी प्रतिज्ञा कर बैठते हैं ।

राम०—[ यवन सम्राट् के इस कटु वचन को जहर की भाँति पानकर (सुनकर ) शिर झुकाये बैठे रहे ]

औरं०—यदि तुम्हारे पिता की प्रतिज्ञा पूरी न हुई तो ?

राम०—तो पिताजी ने प्राण त्याग की भी प्रतिज्ञा कर ली है ।

अव०—अहो ! प्रतिज्ञा ! अहो बलम् ! [ विचार्य ] कुमार ! तव पित्रा सेनापति कार्यं सम्पादितम्, साम्राज्य-कार्यञ्च मया सम्पादयिष्यते। नात्र वचनीयं किमपि बालेन भवता। गम्यताम्, वय कार्य्यान्तरे सक्ता !

तदाकर्ण्य हतोत्साहो विवर्णः कुमार-रामसिंह सादराऽऽचार प्रतस्थे।

तावदुपातिष्ठत तुरग नर्त्तयन् दूरादेवाङ्गीकृत पादचारः कृत-प्रणाम कुमार मायाजिह्मः।

मायाजिह्मः—तात ! यो मा मम भगिनी च अपहृत्यापि स्ववन्धु-मिव रक्षितवान्, सादरञ्च प्रतियापितवान्, स एव शिवराजः प्रहरि-सवृतोऽस्ति—इति क्षुभ्यता हृदयेन स्वयमायातोऽस्मि, दयनीय एय।

---

सम्पादयिष्यते = विधास्यते। विवर्णः = म्लानः।

अङ्गीकृतपादचार = स्वीकृतपादगमनः, विनयप्रदर्शनार्थम्।

अपहृत्य = चौर्येण वधमानीय। प्रतियापितवान् = प्रत्याव-र्तितवान्। प्रहरिसवृत = यामिकरक्षितः। क्षुभ्यता = व्याकुलेन।

---

और०—अहो ! कैसी प्रतिज्ञा ! कैसी शक्ति ! [ सोचकर ] कुमार ! तुम्हारे पिता ने सेनापति का काम कर लिया है, राजा का जो काम है वह मैं करूँगा। तुम अभी लड़के हो, तुम्हें इस विषय में कुछ नहीं बोलना है। जाओ, मुझे बहुत से अन्यान्य काम हैं।

यह सुनकर हतोत्साह एवं विवर्ण रामसिंह सम्राट् के प्रति आदर व्यवहार ( सलाम ) करते हुए वहाँ से उठ गये।

तबतक अपने घोड़े को नचाते हुए दूर से ही घोडे से उतर कर पैदल आनेवाला कुमार मुअज्जम प्रणामपूर्वक वहाँ आ पहुँचा।

माया०—पिताजी ! जिन शिवराज ने अपहरण करने के बाद भी मुझे तथा मेरी बहन की रक्षा अपने बन्धुओं की तरह की और पश्चात् आदर के साथ हम लोगों को यहाँ भेज दिया उन्हें आज प्रहरियों की देख रेख में वर्तमान देखकर मेरे हृदय में बहुत चोट आई है, इसी लिये मैं स्वयम् आया हूँ। आपको शिवराज के ऊपर दया करनी चाहिये।

अव०—[ विहस्य ] स वां गृहीत्वाऽपि भयेन सत्कृतवान्, न तु सौहार्देन, जयसिंहेन चाऽऽक्रान्तः भवन्तौ भयेन दिल्लीं प्रेषितवान्, न तु सौहार्देन। अहञ्च तस्मिन् सदैव दये, किन्तु मूढोऽयं वन्यः, 'केन किमालपेत्'इति संवृतोऽस्ति। मर्यादां न भङ्क्ष्यति चेद् महाराष्ट्र देशं कुशलेन यास्यति।

माया०—तात ! एतद्देशीय-वायु-जलादिकं नानुकूलमेतस्य-इति प्रत्यहं शीर्य्यति, वैवर्ण्यञ्चाऽऽसादयति। तदेतस्मै स्वदेशे-प्रतिनिर्वर्त्तितुमेव आज्ञा-दानेन दयनीयम्।

अव०—तदपि जाने। आसन्नोऽयमाषाढमासः, नव-जलद-जल-पूर-पूरिताः सहस्रशो नद्योऽजगरा इव सर्प्पिष्यन्ति। एते

---

दयनीयः = कृपार्हः। सौहार्देन = मैत्र्या। आक्रान्तः = आक्रमणोद्देश्यीकृतः। दये = कृपां करोमि। संवृतः = गुप्तः, प्रहरिभिरिति शेषः। भङ्क्ष्यति = विनाशयिष्यति। कुशलेन = कल्याणेन।

शीर्य्यति = क्षीयते। वैवर्ण्यम् = विकृत शरीररागम्।

आसन्नः = समीपवर्ती। नवजलदानाम् = नूतनवारिधराणाम्, जल-

---

और०—[ हंसकर ] पकड़ने के बाद तुम दोनों का जो उसने सम्मान किया था वह प्रेम से नहीं किन्तु मेरे भय से और जब जयसिंह के आक्रमण का उसे डर हुआ तब उसने तुम दोनों को दिल्ली भेज दिया है न कि प्रेम से उसने ऐसा किया है। मैं भी उसपर सर्वदा दया करता हूँ, परन्तु यह जङ्गली मूर्ख है, पता नहीं कब किससे किस तरह की बातें कर बैठेगा, इसी लिये मैंने उसे प्रहरियों के बीच रखने की व्यवस्था की है। यदि वह मर्यादा का उल्लङ्घन नहीं करेगा तो अवश्य ही सकुशल महाराष्ट्र लौट जायेगा।

माया०—पिताजी ! शिवराज के स्वास्थ्य के लिये यहाँ का जलवायु अनुकूल नहीं है, इसलिये दिन-प्रतिदिन उनका स्वास्थ्य क्षीण हो रहा है और सारा शरीर पीला पड़ गया है। अतः आप उनके ऊपर अभी यही कृपा करें कि उन्हें अपने देश लौट जाने की अनुमति दे दें।

और०—मैं यह भी जानता हूँ। किन्तु आषाढ का महीना आने ही

चाश्वयानाः। इमे दिल्लीतः प्रस्थिता नदीप्रवाहे पतिताः स्रोतोभिर्नीताश्चेन्नङ्क्ष्यन्ति, तीरेषूषिताश्चेज्जल-पात-पीडिता ज्वरग्रस्ताः शोचनीयां दशां यास्यन्ति। मार्गेषु वैद्यमलभमानाः पश्चात्ताप-तप्ताः को जानाति कां दशामापद्येरन्! अत्र च मासेन वायु-जलमनुकूलमिव ज्ञास्यते, ज्वरादि-सम्भवे च राजवैद्याश्चिकित्सां विधास्यन्ति, चातुर्मास्यानन्तरं च सुखेन स्वदेशं यास्यन्ति।

माया०—तात! अथ किमित्येष प्रहरि-बन्धः?

---

पूरैः = वारिप्रवाहैः, पूरिताः = भरिताः, अजगरा इव = विशालकायाः सर्पा इव, सर्पिष्यन्ति = गमिष्यन्ति। अश्वयानाः = घोटकवाहनाः। स्रोतोभिः = धाराभिः। नङ्क्ष्यन्ति = विनाशं यास्यन्ति। तीरेषु = तटेषु। उषिताः = कृतवासाः। पश्चात्तापतप्ताः = अनुतापखिन्नाः। आपद्येरन् = प्राप्नुवीरन्।

प्रहरिबन्धः = यामिकावरोधः।

---

वाला है, इसलिये नये बादलों की नवीन वर्षा से भरी हुई हजारों नदियाँ अजगरों की तरह बहती रहेंगी। ये मराठे घोड़े पर यात्रा करनेवाले हैं। अतः इस समय दिल्ली से प्रस्थान करने पर यदि रास्ते में कहीं नदी प्रवाह में आ पड़े तब तो उसकी धारा मे प्रवाहित होकर विनष्ट ही हो जायेंगे और यदि नदियों के तट पर बीच-बीच में रुकना पड़ा तो वर्षा से पीड़ित होकर ज्वरग्रस्त हो जायेंगे और इस प्रकार इनकी दशा बहुत बुरी हो जायेगी। और भी, रास्ते में वैद्य के न मिलने पर जो इनके मनमे असमय मे दिल्ली से प्रस्थान करने का पश्चात्ताप होगा उससे तो इनकी कैसी दशा हो जायेगी—इसको कौन जानता है! किन्तु यहाँ महीने भर में ही यहाँ की जलवायु इनके लिये अनुकूल हो जायेगी, और यदि ज्वर-ताप आदि की सम्भावना होगी तो राजवैद्य इनकी चिकित्सा भी करेंगे और फिर चातुर्मास्य के बाद ( कार्तिक महीने मे ) अपने देश लौट जायेंगे।

माया०—पिताजी! अच्छा तो इन्हें प्रहरियों के बीच क्यों रखा गया है?

अव०—वत्स ! जानीषे-एष धूर्तो मूर्खश्च । मूर्खतया राजसभायां किमपि जजल्प; यथा तस्य राजदर्शनं निषिद्धम् । धूर्त्ततया चैष कैश्चित् कपट-संन्यासिभिरालपतीति श्रूयते । तत एष प्रहरिबन्धः । त्वं मम बाह्यं जीवनमपि नीति-विरुद्धमाचरेः; तन् त्वां राजधर्ममासाद्यावश्यं दण्डयेयम् , कस्तत्र वराकः पार्वतोन्दुरुः ? योऽहं राजधर्म्मं पालयितुं सहोदरान् कथावशेषानकरवम् ; याम् स्मारं स्मारं रोदिमि; यश्चाहं लालक-पालकं पितरमपि राजधर्म्ममेवाङ्गीकृत्य निगड-बद्धमकार्षम् ; यत्संवाद-श्रवणेन विदीर्य्यति हृदयम् ; स एवाहं जघन्यस्य वन्यस्य शिवस्यार्थे राजधर्मञ्च

बाह्यम् = बहिर्भवम् । जीवनम् = प्राणनम् । द्वितीय आत्मेत्यर्थः । परमस्नेहीति यावत् । नीतिविरुद्धम्=राजनियमाननुकूलम् । आचरेः=कुर्याः । सहोदरान् = भ्रातॄन् । कथावशेषम् = कथामात्रेणावशिष्टान् । लालकम् = प्रेमव्यवहारकम् , पालकम् = रक्षितारम् । निगडबद्धम् = शृङ्खलायन्त्रितम् । जघन्यस्य = नीचस्य ।

और०—बेटा ! तुम जानते हो—यह 'शिव' धूर्त भी है और मूर्ख भी । अपनी मूर्खता के कारण ही राजसभा में भी यह बातचीत करने लग गया था जिसके चलते इसे मेरे दर्शन से भी वञ्चित होना पड़ा और इसकी धूर्तता में यही प्रमाण है कि हम ने सुना है कि यह कुछ कपटी सन्यासियों के साथ बातचीत किया करता है । इसी लिये इसे प्रहरियों के संरक्षण में रखा गया है । देखो बेटा ! तुम मेरी आत्मा हो, परन्तु तुम भी यदि नीति के प्रतिकूल आचरण करोगे तो तुम्हें भी राजधर्म के अनुसार मैं अवश्य ही दण्ड दूँगा, फिर यह नीच पहाड़ी चूहा कौन है ? जो मैंने राजधर्म के पालन के लिये उन सगे भाइयों की भी हत्या कर दी जिनकी याद कर मैं आज भी रो रहा हूँ, जो मैंने राजधर्म के स्वीकार के कारण ही लालन-पालन करनेवाले पिताजी को भी कैद कर रखा था जिनकी दयनीय दशा को सुनते ही मेरा हृदय विदीर्ण होने लग जाता है वही मैं इस नीच जङ्गली 'शिव' के लिये

त्यक्ष्यामि। नैतेषु राजकार्य्येषु तव हस्तक्षेपाधिकारः।

एवं कथयन्नेव मेष-महिषादि-युद्ध प्रस्तुतमिति संवादं प्राप्य, सजयध्वनि समुत्थाय, सौवर्ण-कौशेय-पटावृतं रत्ननिचय-चञ्चचाक-चक्यं नरयानमारुह्य, सत्वर-सत्वरं धावद्भिश्छत्र-चामरकनक-दण्डादि-मण्डित-करैराश्रियमाणस्ततः प्रतस्थे।

इतो महाराष्ट्रराजोऽपि सर्वमेतदाकर्ण्य चिन्तया शोकेन तापेन कोपेन च वीचिभङ्गैरिव विविध-भाव-भङ्गैः पारावार इव क्षुभितः, भूषणेन बहुशः संवर्द्धितोत्साहः, गौरेण माल्यश्रीकेण च गुप्तं सम्मन्त्र्य, पूर्वप्राप्तानामादेश-पत्राणामेकं दत्त्वा, "एवमिदमेवमिदमिति" बहूक्त्वा मथुरां प्रति भूषणकविमपि प्रास्थापयत्।

---

संवादम् = समाचारम्। सौवर्णकौशेयपटावृतम् = सुवर्णतन्तुपट्टसूत्र-निर्मितवसनाच्छन्नम्। प्रतस्थे = प्रस्थितः।

वीचिभङ्गैरिव = लहरिभङ्गैरिव। विविधैः = अनेकप्रकारैः, भाव-भङ्गैः = विचारच्छेदैः, पारावार इवेत्युपमा। प्रास्थापयत् = प्रेषितवान्।

---

अपने राजधर्म को कदापि नहीं छोड़ सकता। ये राजकार्य हैं, इनमें तुम्हें हस्तक्षेप करने का कोई अधिकार नहीं है।

इस तरह औरङ्गजेब अपने लड़के को समझा ही रहा था कि उसे खबर मिली कि भेंड़-भैंसों की लड़ाई शुरू हो गई है। खबर पाते ही जयध्वनि-पूर्वक वहाँ से उठ गया और सोने के तारों से सहित रेशमी वस्त्र से आवृत तथा जड़े हुए रत्नों के समूह से चमकते हुए नरयान (= मनुष्य के द्वारा खींचा जानेवाला रथ) पर चढ़कर बड़ी शीघ्रता से पीछे दौड़नेवाले छत्र-धारी, चामरधारी एवम् दण्डधारियों के साथ वहाँ से चल दिया।

उधर इन सारी घटनाओं को सुन कर चिन्ता, शोक, ताप तथा कोप आदि विविध भाव भङ्गिमाओं से प्रचण्ड तरङ्गों से महासमुद्र के समान क्षुब्ध, तथा भूषण कवि द्वारा अनेक प्रकार से प्रोत्साहित महाराष्ट्रराज ने भी गौरसिंह तथा माल्यश्रीक के साथ गुप्त मन्त्रणा करने के पश्चात् पूर्व-प्राप्त अनुमति-पत्रों में से ही एक अनुमतिपत्र देकर, बहुत कुछ समझा बुझा कर भूषण कवि को भी मथुरा के लिए रवाना कर दिया।

दिल्ली-नगर-वास्तव्याः सर्वेऽपि सज्जना गृहे गृहे चत्वरे चत्वरे सरणौ सरणौ विपणौ विपणौ कर्णे कर्णे प्रतिकथं प्रतिप्रस्तावं प्रतिकिंवदन्ति प्रत्याभाणकञ्च महाराष्ट्रेश्वरदिल्लीश्वरयोराचारमेवाऽऽलोचन्ते स्म ।

तत्र हि केचन—'आः ! कदर्यमाचरितं दिल्लीवल्लभेन' इति; कतिचन 'कष्टं भोः ! कष्टं यन्नामश्रवणेनापि गर्भानपीपतन् यवनसीमन्तिन्यः, सोऽयं मुद्रा-पञ्चक-वेतनैः प्रहरि-हतकै रुद्ध' इति; इतरे 'जातोऽत्र नीति-निष्णातस्यापि भ्रमो यदेष ईदृशं प्रत्यगात्'

---

सरणौ = मार्गे । विपणौ = आपणमार्गे । प्रतिकथम् = कथां कथां प्रति । प्रतिकिंवदन्ति = प्रतिजनश्रुति । "किंवदन्ती जनश्रुतिः" इत्यमरः । प्रत्याभाणकम् = प्रतिदृष्टान्तलघुवचनम् । आलोचन्ते स्म = विचारयन्ति स्म ।

कदर्य्यम् = नीचतापूर्णम् । अपीपतन् = न्यपातयन् । यवनसीमन्तिन्यः = म्लेच्छरमण्यः । अत्र = अस्मिन् विषये । नीतिनिष्णातस्यापि =

---

उस समय दिल्ली के निवासी सभी सज्जन घर में, चौराहे पर, सड़क पर, गली में अपनी सभी कहानियों में, सभी प्रस्तावों में, सभी किंवदन्तियों की चर्चा करते समय, सभी लोकोक्तियों की व्याख्या के प्रसङ्ग में महाराष्ट्र राज तथा दिल्ली सम्राट् के व्यवहारों की ही आलोचना किया करते थे ।

उन सज्जनों के बीच कुछ लोग कहते थे—"ओह ! दिल्लीपति ने बहुत ही निन्द्य कार्य किया है ।" कुछ लोगों का कहना था—"कितनी दुःखद स्थिति है कि जिन महाराष्ट्र राज शिवा जी के नाम सुनने पर भी यवन-युवतियों का गर्भ-पात हो जाया करता था वही वीर शिवाजी आज पाँच रुपये मासिक वेतन पर सेवा करने वाले क्षुद्र प्रहरियों द्वारा प्रतिरुद्ध हो गए हैं !", अन्य लोग सोच रहे थे—"नीति निपुण होने भी पर शिवा जी ने इतनी भूल अवश्य कर दी कि वे इस क्षुद्र से मिलने आ गए";

इति; अपरे 'इयमपि काचन ग्रह-दशा भुज्यते शिवराजेन, कथमन्यथा शार्दूल-पराक्रमोऽपि निगृहीतः स्यात् शशकायितैः'–इति; अन्ये च 'सत्यं ग्रहदशा, क्षयते रुग्णोऽपि महाराष्ट्रराजः'–इति प्रोचुः।

महाराष्ट्रराजाध्युषित-हर्म्यस्य द्वारे राजकीयाः प्रहरिणः, तदन्त-र्द्वितीय-द्वारे महाराष्ट्र-प्रहरिणः। प्रथम-द्वारं प्रविष्टा अपि द्वितीय-द्वारे रुद्ध्यन्ते, ततोऽपि सूचित-स्वाभिप्राया प्राप्तवदाज्ञा पारयन्ति प्रवेष्टुम्।

नगरेऽद्य महान् कलकलः, मार्गे मार्गे शृङ्गाटके शृङ्गाटके भेरीनादः। गृहे गृहे शृङ्गारः। पथिषु यानानां पादचारिणां च

---

राजनीतिरपहितस्यापि। प्रत्यगात् = प्रत्यगच्छत्। शार्दूलपराक्रमः = सिंहबलः। शशकायितैः = शशकतुल्यैः। क्षयते = क्षीणो भवति। रुग्ण = रोगाक्रान्तः।

शृङ्गाटके शृङ्गाटके = प्रतिचतुष्पथम्। महाप्रसाधः = महान्

---

कुछ लोग इस तरह भी कहा करते थे—"शिवा जी किसी ग्रह दशा को ही भोग रहे हैं, नहीं तो सिंह सदृश पराक्रम वाले व्यक्ति का खरहे की तरह अगद व्यक्ति के द्वारा कैद कर लिया जाना कैसे सम्भव हो सकता है!"; और कुछ अन्य सज्जन भी इसका समर्थन करते थे—'अवश्य ही यह इनकी ग्रह-दशा है, इसी लिए तो रुग्ण हो कर दिनानुदिन दुर्बल भी होते जा रहे हैं!"

महाराष्ट्रराज जिस अट्टालिका में निवास कर रहे थे उसके प्रथम द्वार पर यवन सम्राट् के और दूसरे द्वार पर महाराष्ट्र के प्रहरी थे। यदि किसी प्रकार लोग प्रथम द्वार को पार भी कर लेते थे तब भी दूसरे द्वार पर उन्हें रोक दिया जाता था और फिर जब वे भीतर जाने का कारण बतला कर दूसरे द्वार के मराठे प्रहरियों से भीतर प्रवेश करने की आज्ञा पा लेते थे तभी भीतर जा पाते थे।

उस दिन दिल्ली नगर में बहुत कोलाहल मचा हुआ था। सड़कों तथा चौराहों पर बाजे बज रहे थे। घर-घर में सजावट हो रही थी। सड़कों

महासम्बाधः। किमिदं किमिदमिति निश्चित्य ज्ञातं यद्—यवनानां कश्चन वार्षिकः पर्वसमयः। स्थाने स्थाने कदलीस्तम्भ-रचना, स्थाने स्थाने च पिपासितेभ्यो हिमोपल-शीतलं सितोपल-जलं पाय्यते। महाराष्ट्रराजस्य हर्म्य-द्वारि प्रतिसायं बहवो भिक्षुकाः, सन्यासिनः, पङ्गवः, खञ्जाः, एडाः, कुब्जाः, अन्धाश्च एकत्र भवन्ति; येभ्यः प्रत्यहमन्नं वितीर्य्यते महाराष्ट्रपतिना। किन्तु समयोऽयं दिल्ली-नगरे यवनानां महामहोत्सवस्येति न शक्यते निरवकाशे तस्मिन् घण्टापथे भिक्षुक मण्डली-निवेशः—इति कोटपालेन सूचितं यत्-'षड् दिनानि यावन्मार्गोपरोधो न विधेयः, भिक्षुकेभ्यः किमपि

सम्मर्दः। "सङ्कट ना तु सम्बाधः" इत्यमरः। पर्वसमयः=उत्सवसमयः। हिमोपलशीतलम्=दृढीभूतजलशीतलम्। हिमोपलः = "बर्फ" इति लोके। सितोपलजलम्=शर्करामिश्रं वारि। पङ्गवः=जङ्घाहीनाः। "श्रोणः पङ्गावि" इत्यमरः। खञ्जाः=खोडाः। एडाः =बधिराः। कुब्जाः= 'कुबडा' इति ख्याताः। अन्धाः=नेत्रशून्याः। प्रत्यहम् = प्रतिदिनम्। निरवकाशे = जनसम्मर्दपूरिते। भिक्षुकमण्डलीनिवेशः = याचक-समूहस्थितिः। मार्गोपरोधः=सरणिप्रतिबन्धः। वितरणीयम्=देयम्।

पर रथ आदि यान तथा पैदल चलने वालों की बहुत भीड़ लगी थी। पूछने पर ज्ञात हुआ कि उस दिन यवनों का कोई वार्षिक पर्व था। जगह जगह पर केले के स्तम्भ खड़े किये हुये थे, कहीं-कहीं प्यासे पथिकों को बर्फमिश्रित शरबत पिलाया जा रहा था। महाराष्ट्रराज की अट्टालिका के द्वार पर प्रतिसन्ध्या बहुत से भिक्षुकों, संन्यासियों, लङ्गड़ों, खोड़ों, बहरों, कुबड़ों और अन्धों की जमघट होती थी और महाराष्ट्रराज उन्हें खाने पीने को दिया करते थे। किन्तु उस दिन दिल्ली नगर में यवनों के महामहोत्सव के कारण राजमार्ग पर इतनी भीड़ थी कि भिक्षुकों की मण्डली का वहाँ आना (उस दिन) सम्भव नहीं था। अतः कोतवाल ने आकर सूचना दी कि उस दिन से लेकर छः दिनों तक रास्ते में भिक्षुक मण्डली के यातायात से विघ्न-बाधा नहीं प्रस्तुत करना है, यदि उन्हें भिक्षुकों को कुछ देनी

भोज्यादि देयञ्चेद नगराद् वहिर्यमुनातटे भृत्यद्वारा प्रेष्यम्, तत्रैव च वितरणीयम्।"

आज्ञानेतामाप्यातितरां प्रासीदन् महाराष्ट्र–वीरा। महाराष्ट्रराजो रोगग्रस्त इत्याकलय्य च सुमुदिरे द्विषः भिक्षुकाश्च प्रत्यहं यमुनातटे एव शष्कुलीः, अपूपान्, मोदकान्, पेटाः, इण्डरिकाश्च प्राप्य परस्सहस्रेराशीराशिभिः समवर्द्धयन्।

एकदा भृत्य-वेषेण गौरसिंहः स्वयमपि मध्यभागावलम्बि–मिष्टान्न–पेटावलम्ब–दण्डाग्रमेकतः स्कन्धे कृत्वा, अपर–प्रान्त–लग्न–स्कन्धेन भृत्येन सह कालिन्दी–तटमागत्य, पञ्जराद्बहिर्निर्गतः कीर इव निःश्वस्य भिक्षुकेभ्यो भोज्यमर्पयितुमारब्धवान्। तस्मिन्नन्धकार–मिश्रिते

---

आप्य = लब्ध्वा। आङ्प्रश्लेषोऽत्र। प्रासीदन् = प्रसन्ना जाताः।

शष्कुली = पूरिकाः। अपूपान् = पुवान्। "पूपोऽपूपः स्यादि" त्यमरः। मोदकान् = लड्डुकान्। पेटाः = "पेडा" इति ख्याताः। इण्डरिकाः = "वड़ी" इति ख्याताः।

मध्यभागावलम्बिन्याः, मिष्टान्नपेटानाः, अवलम्बस्य = आधारस्य,

---

है तो नगर के बाहर यमुना के तट पर सारा देय पदार्थ सेवकों द्वारा भेजवाकर बँटवा दें।

इस तरह की आज्ञा पाकर महाराष्ट्र-वीर बहुत ही प्रसन्न हो उठे। शिवाजी को रोगग्रस्त जानकर उधर शत्रुमण्डली के हृदय में भी प्रसन्नता हो रही थी। इधर भिक्षुक लोग भी प्रतिदिन महाराष्ट्रराज की कृपा से यमुनातट पर ही पूरियाँ, पूए, मिठाइयाँ, पेडे तथा बड़ियाँ पा पाकर शिवाजी को असंख्य आशीर्वाद दे रहे थे।

एक दिन सेवक के वेष में ही स्वयम् गौर सिंह भी मध्य भाग में लटकती हुई मिठाई की पेटी से युक्त भार वाहक दण्ड के एक किनारे को अपने कन्धे पर और दूसरे को एक भृत्य के कन्धे पर रख कर यमुना-तट निकल आए और पिञ्जड़े से छुटे सुग्गे के समान चैन की साँस लेकर

वारुणी-चुम्बनेन मत्तस्येव मार्त्तण्डस्य, कोमले प्रकाशे केनापि "राघवाचार्य्यस्य आशीर्य्यन्त्र-वेष्टनमिदं पठित्वा राज्ञे देयम्"—इत्युक्त्वा हस्ते समर्पितं चतुःपञ्चकृत्वश्च भुग्नितं रक्त-सूत्र-वेष्टितं भूर्जत्वक्-पत्रकं दृष्टम्। केन दत्तमिति विचिन्वन्नपि तमपरिचिन्वन् तूष्णीं सन् कक्षगुटिकायां संस्थाप्य परावृत्तः। स्ववासस्थानमागत्य, अतिरहस्यम्, ऊर्द्ध्वतन-गृहमाश्रित्य, महाराजमाहूय, अनन्यश्राव्यं पत्रमेवमपठत्—

---

दण्डस्य, अग्रम्। अपरप्रान्ते = द्वितीयभागे, लग्नः रन्ध्रो यस्य तेन। अर्पयितुम् = दातुम्। वारुणीचुम्बनेन = मदिरापानेन, सूर्यपक्षे पश्चिमाशासम्पर्केण। मत्तस्य = मदाघूर्णितस्य। कोमले = मृदुनि। भुग्नितम् = न्युब्जीकृतम्। भूर्जत्वक्-पत्रकम् = भूर्जत्वचि लिखित पत्रकम्। विचिन्वन्नपि = अन्वेषयन्नपि। अपरिचिन्वन् = अनध्यवस्यन्। अतिरहस्यम् = नितान्त गुप्तम्। अनन्यश्राव्यम् = अनितरश्रवणार्हम्।

---

भिक्षुकों में खाद्य पदार्थ बाटने लग गए। बाँटते समय ही मदिरा-सेवन से उन्मत्त व्यक्ति के व्यामोह निमित्त अत्यल्प ज्ञान के समान पश्चिम दिशा के चुम्बन करने से उन्मत्त (अस्त प्राय) सूर्य के अन्धकार निमित्त मन्द प्रकाश में किसी ने "राघवाचार्य द्वारा प्रेषित यह आशीर्वाद यन्त्र का गाँठ है, इसे पढ़ कर आप महाराज को दे देंगे" यह कह कर चार-पाँच बार (परत) लपेटा हुआ, लाल धागे में बन्धा भोजपत्र पर लिखा हुआ पत्र उनके हाथ में दे दिया। किसने दिया इसकी खोज करने पर भी जब उस व्यक्ति का पता नहीं लग पाया तब गौर सिंह अपने कच्छे में उसे छिपा कर वहाँ से अपने शिविर को लौट गए। अपने शिविर पहुंच कर अत्यन्त गुप्त रूप में महाराज को ऊपर के कमरे में बुला कर गौरसिंह उस पत्र को पढ़ने लगे—

"विजयोऽस्तु महाराजस्य। महाराष्ट्र-देशाद् दिल्ली-पर्य्यन्तं सहस्रशो भावत्का वीरा विविध-वेषैः सञ्चरन्ति। दिल्ली-नगरमपि सहस्रशः प्रविष्टाः सन्ति, यमुनायां शतशो नावो युष्मदीयैर्गुप्त-भटैः पूरिता मथुरातो दिल्लीपर्य्यन्तं प्रत्यहं सर्पन्ति। चत्वारि दिनानि यावत् सुभगो दिल्ली-त्यागावसरः"।

सवमेतदाकर्ण्य राघवाचार्य्यं कञ्चन निजं परमहितैषिणं मन्यमानौ तौ माल्यश्रीकमप्याकार्य एवमेवमिति बहुशः समालपितवन्तौ। परतो महाराष्ट्रराजेनोक्तम्—"परश्वस्तर्हि"! ताभ्यामप्युक्तम्–'आम! परश्व, भगवति भास्करे पश्चिमसमुद्रं स्पृशति" एवं ते स्थिरयित्वा सोपान-परम्परयाऽवरुह्य भोजनादि-व्यापार

---

सञ्चरन्ति = भ्रमन्ति। युष्माकमेभिः युष्मदीयैः। सर्पन्ति = गच्छन्ति। सुभगः = शोभनः।

परश्वः = "परसों" इति लोकेऽपभ्रंशीभूतम् अव्ययम्। पश्चिमसमुद्रम् = वारुणवारिधिम्। स्पृशति = चुम्बति, सप्तम्या रूप, सूर्यास्तमनवेलायामिति यावत्। स्थिरयित्वा = निश्चित्य। अवरुह्य = नीचैरागत्य। पर्य्यङ्कमा·

---

"महाराज की विजय हो। महाराष्ट्र देश से लेकर दिल्ली तक आपके हजारों वीर विभिन्न वेश-भूषाओं में घूम रहे हैं। दिल्ली नगर में आपके बहुत से वीर घुस चुके हैं। यमुना में भी आपके गुप्त वेष योद्धाओं से परिपूर्ण सैकड़ों नाव प्रतिदिन मथुरा से दिल्ली तक आ रहे हैं। और चार दिनों तक दिल्ली से बाहर निकल आने का बड़ा ही सुअवसर है।"

पत्र में लिखी बातें सुन कर राघवाचार्य को अपना अत्यन्त हितैषी समझने वाले महाराष्ट्र राज तथा गौर सिंह ने माल्यश्रीक को भी वहाँ बुलाया और उनसे भी सारी बातें बतलाईं। बाद में महाराष्ट्र राज ने कहा—"अच्छा तो परसों···!" इसमें उन दोनों ने भी सम्मति प्रकट की—"जी हाँ, परसों सूर्यास्त के समय ···।" इस प्रकार निर्णय करने के

परिसभाप्य पर्य्यङ्कमारूढाः।

यातयामा यामिनी, अस्मिन्नपि समये नगरे महानेव वादित्र-ध्वनि। तावदकस्मादेकेन महाराष्ट्र-भृत्येन त्वरितैः पदैः सोपानमारुह्य, अस्मिन् गृहे प्रविश्य, अञ्जलिं बद्ध्वा कथितम्—महाराज! प्रतिष्ठित इव कश्चन पञ्चाशद्वर्षदेशीयो यवन शिबिकामारुह्य समायातोऽस्ति। भवनेऽस्मिन् प्रविशन्नस्माभि पृष्टश्च "सम्राट् प्रेषितोऽस्मि चिकित्सितु महाराष्ट्रराजम्, वैद्योऽहम्" इति वदन् समौढि प्रविशति। तदत्र प्रभुचरणा एव प्रमाणम्। तदाकर्ण्य यावदुत्तर चिन्तयति महाराष्ट्र-वसुधाधवस्तावदप्राप्तोत्तर एव पादत्राण-पटापटाभिः सोपानपङ्क्तौ

रूढा. = चढ़ाया गुप्ताः।

यातयामा = अतीतैकप्रहरा, यामिनी = रात्रि। वादित्रध्वनि = नृत्यवाद्यकोलाहलः। प्रतिष्ठित = मर्य्यादाशाली। प्रविशन् = आगच्छन्। चिकित्सितुम् = नीरोग कर्तुम्। समौढि = सगर्वम्। महाराष्ट्रवसुधाया, धव. = पति.। अप्राप्तोत्तरः = अलब्धप्रतिवचन। पादत्राणपटापटाभिः=

पश्चात् वे पुन सीढ़ियों के माध्यम से नीचे आ गए और भोजनादि कृत्यों के सम्पादन के बाद सोने चले गये।

रात का एक पहर बीत चुका था, परन्तु इस समय भी दिल्ली नगर में नाच गान चल ही रहे थे। उसी बीच एक महाराष्ट्रदेशी सेवक ने शीघ्रता से ऊपर आकर उस कमरे में घुसकर हाथ जोड़ कर कहने लगा—"महाराज! लगभग ५० वर्षों की उम्र का एक प्रतिष्ठित सा व्यक्ति यवन पाल्की पर चढ़कर यहाँ आया है। जब इस घर में घुसते समय हम लोगों ने उसे रोका और यहाँ आने का कारण पूछा तो "मैं राजवैद्य हूँ, दिल्लीसम्राट् ने महाराष्ट्रराज की चिकित्सा के लिए मुझे यहाँ भेजा है" यह कहकर जबरदस्ती इस कमरे में घुसना चाह रहा है। अब श्रीमान् की जैसी आज्ञा हो"। महाराष्ट्रराज उसका उत्तर सोच ही रहे थे कि महाराष्ट्रराज

ध्वनयन् प्रविवेश यवन-चिकित्सकः।

ततः सर्वेऽपि तदभिमुखा ददृशुः-यदेकः पिचण्डिलः, दृढस्नायुः, ज्वलन्नयन-युगारोपित-राजत-शलाकाऽधिक-चाकचक्य-चमत्कृतोपनेत्रः, हरित-कौशेयोष्णीष-शिरस्कः, आनाभिविलम्बमान-सित-कृष्ण-सान्द्र-कूर्चः कर्णान्त-दीर्घ-श्मश्रु-द्वयः, हरितकञ्चुकः, सुदीर्घ-पाण्डुराधोवसनः, कर-कलित-पुष्ट-यष्टिकः, "कुत्र महाराष्ट्रराजः? को रोगः?" इत्याम्रेडयन् यवनचिकित्सकः प्रविष्टः। तत्पृष्ठलग्न एव

उपानत्पटपटाशब्दैः। ध्वनयन् = शब्दयन्।

पिचण्डिलः = दीर्घोदरः। दृढस्नायुः = पुष्टवरत्नसः। ज्वलन्नयनयुगे= प्रदीप्तनेत्रद्वये, आरोपितम्, राजतशलाकायाः = रजतोपनेत्रदण्डस्य, अधिकचाकचक्येन, चमत्कृतम्, उपनेत्रम् = "चश्मा" इति ख्यातम्, यस्य सः। हरितम्, कौशेयम्, उष्णीषम्, शिरसि यस्य सः। "शेषाद्विभाषा" इति वैकल्पिकः कप्। आनाभि विलम्बमानम्, सितकृष्णम्, सान्द्रम्, कूर्चं यस्य सः। मध्यमे वयसि वर्तमान इति श्मश्रु न पूर्णतया श्वैत्यमभजत। कर्णान्तदीर्घम्, श्मश्रुद्वय यस्य सः। सुदीर्घम् पाण्डुरम्, अधोवसनम् = "लुंगी" इति ख्यातं यस्य सः। करे कलिता पुष्टा यष्टिका =

का उत्तर (अनुमति) पाए बिना ही वह यवन-वैद्य अपने जूतों से सीढ़ियों को खटखटाते हुये उस कमरे में घुस गया।

उसके आते ही सबों ने जब उसकी ओर दृष्टि डाली तो देखा कि "कहाँ हैं महाराष्ट्रराज, कहाँ हैं? कौनसा रोग है?" यह कहता हुआ एक खूब मोटा-ताजा यवन वैद्य वहाँ आ पहुँचा। उसकी चमकती आँखों पर चान्दी के बने फ्रेम के चाकचिक्य से चमत्कृत चश्मा लगा था, जिसके माथे पर हरे रेशमी वस्त्र की टोपी लगी थी, उसकी अधपकी घनी दाढ़ी नाभि तक लटक रही थी, उसका मूँछ दोनों कानों तक बढ़ा हुआ था, उसका कुर्त्ता हरे रङ्ग का था, उसकी लुङ्गी पीले रङ्ग की थी और उसके हाथ में एक छोटी सी मजबूत छड़ी भी थी। उसके पीछे ही एक और बीस-बाइस वर्षों की

चैको द्वाविंशति-वर्षकल्पो यवन-युवकोऽपि कक्ष-स्थापित-श्याम-मञ्जूष प्रविष्ट इति।

अथोत्थाय माल्यश्रीक गौरसिंहाभ्यां स चिकित्सको राजपल्यङ्क-समीप उपवेशितो राज्ञो मस्तक स्पृशन् पृष्टवान् 'को रोगः ?'—इति। ततस्तेषामेवमभून्नालापा।

महाराष्ट्रराज.—चिकित्सक! प्रत्यक्षतो न ज्ञायते को रोगः—किन्तु क्षुधा ह्रसते, अङ्गानि च निर्बलानि भवन्ति।

चिकित्सकः—[ चक्षुषी सम्मील्य द्वयोरपि करयोर्नाडीश्चतसृभिरङ्गुलिभि परीक्ष्य ] नाड्यः शुद्धाः। मन्ये स्वसञ्जतामपहाय परवान्

---

लघुदण्डः, येन सः। कक्षे स्थापिता श्यामा मञ्जूषा=पटा, येन स।

राज पल्यङ्कस्य = पर्यङ्कस्य, समीपे।

क्षुधा = बुभुक्षा, "आप चैव हलन्तानामि"ति भागुरिमतेनेदम्।

द्वयोरपि करयो, यवनचिकित्साशास्त्रे द्वयोरपि करयोर्नाडीपरीक्षा भवति, वातपित्तकफरक्ताशयाश्रयाश्च धानवश्च सन्ति, तदर्थे चतसृभिरङ्गुलिभि परीक्ष्यन्ते रोगिण इति वेदितव्यम्।

---

उस का यवन-युवक भी काँख में एक काली पेटी दबाया हुआ उस कमरे में घुसा।

उसके बाद जब उठकर माल्यश्रीक तथा गौरसिंह ने उस चिकित्सक को महाराज की शय्या के पास ले जाकर बैठाया तब महाराष्ट्रराज का माथा छूता हुआ वैद्यराज ने पूछा—'कौन सा रोग है ?" इस प्रश्न पर उन सबों में निम्नलिखित वार्तालाप हुआ .—

महाराष्ट्रराज—वैद्य महाशय! प्रत्यक्ष रूप में तो कोई भी रोग मेरे समझ में नहीं आ रहा है। किन्तु मेरी भूख कम होती जा रही है और सारा शरीर दुर्बल होता आ रहा है।

चिकित्सक—[ आँखें मून्दकर शिवाजी के दोनों हाथों की नाड़ियों की ४ उगलियों से परीक्षा करने के पश्चात् ] नाड़ियाँ तो स्वच्छ हैं। मुझे ऐसा

संवृत्तः—इति चिन्तारोगोऽयम्।

महाराष्ट्रराज—[ तस्य तेजस्विमुखमण्डल निपुण निरीक्षमाणः ] सत्यमन्येऽपि चिकित्सका एवमेव वदन्ति। किन्तु न जाने कीदृशोऽयं रोगो यज्ज्वलयत्यङ्गानि।

चिकित्सक—औषधं ददामि।

महा०—अलं क्लेशेन ! न वयं यवनस्पृष्टमगदमङ्गीकुर्मः, भवानेव कष्टमूरीकृत्य श्रान्तवानिति गृह्यतामेष स्वल्प उपहार', [ इत्यङ्गुलीयकमार्पयत ]

माल्यश्रीकः—राजचिकित्सक ! तथ्यं ब्रूते महाराष्ट्रराजः, नैतस्य कुले केनापि यवनौषधं गृहीतम्। एतस्य समीपमायाताः सर्वेऽपि गुणिनो यथोचितैरुपहारैः सत्क्रियन्ते, तद् गृह्यतामेतत्समयानुरूपमुपायनम्।

• अगदम् = औषधम्। उपहारः = उपायनम्। आर्पयत् = दत्तवान्।

लग रहा है कि आपको चिन्तारोग हो गया है कि आप पहले स्वतन्त्र थे पर आज परतन्त्र हो गये हैं।

महाराष्ट्रराज—[ वैद्यराज के देदीप्यमान मुखमण्डल को पैनी दृष्टि से देखते हुए ] आपका कहना सत्य है, अन्य वैद्य भी यही कहा करते हैं। किन्तु मैं यह नहीं समझ पा रहा हूँ कि किस तरह का यह रोग है जो मेरे अङ्गों को जला रहा है।

चिकित्सक—कोई बात नहीं, मैं दवा दे रहा हूँ।

महा०—आप क्यों कष्ट कर रहे हैं ! यवनों के द्वारा स्पृष्ट औषधि का परिग्रहण हम लोग नहीं किया करते हैं। आप ने यहाँ आने में जो कष्ट तथा श्रम किया है तदर्थ आप यह छोटा सा उपहार ले लें। [ यह कहकर शिवाजी ने वैद्य को अपनी अँगूठी दे दी ]

माल्य०—राजवैद्य जी ! महाराष्ट्रराज सत्य कह रहे हैं। इनके वंश में आजतक किसी ने भी यवन से औषधि नहीं ली है। किन्तु इनके पास आनेवाले सभी गुणियों का यथोचित उपहार से सत्कार किया जाता है। अतः आप भी समयानुरूप यह उपहार ले लें।

चिकित्सकः—[ अङ्गुलीयकं हस्तेन स्पृश्य ] धन्या वदान्यता तत्रभवतः! न वयं दिल्ली-वल्लभ-पाणि-पल्लव-वल्लज-लालिताः परदत्तं कारु-कोषमपीहामहे। न वा चिकित्सा-विषयेषु रोगिणः सम्मतिमपेक्षामहे। तत्रापि भवतश्चिकित्सनाय प्रबला राज्ञामाज्ञा, तत्क्षम्यताम्, [ इति वक्षः समस्पृशत् ] [ महाराजोऽन्तरेव कोपेन जाज्वल्यमानः स्वभावविकारं गोपयन् समतिष्ठत ]

गौर०—किं निर्णीतं भवता ?

चिकित्सकः—यन्निर्णीतं तस्य प्रतीकारं विदधामि। आविद ! आविद !! मञ्जूषामुद्घाटय! औषधं पाययित्वा क्षणेन नीरोगं विधास्यामि महाराजम्। [ तदनुचरः पेटीपिधानमुदतूतुलत्, चिकित्सक

वदान्यता=दानप्रवणता। कारुकोषम्=कारुनिधिम्। कारुनामा कश्चन महाधनिको यवनदेशे जातो यन्नाम्ना "कारू का खजाना" इति प्रसिद्धं तेषु।
प्रतीकारम्=निवारणोपायम्। आविद!, सहचरं नाम्ना सम्बोधयति। पेटायाः पिधानम्=मुखम्। "ढिक्कन" इति हिन्दी। द्रवकम्=रसम्।

चिकित्सक—[ हाथ में अंगूठी लेकर ] आपकी उदारता धन्य है। किन्तु दिल्लीसम्राट् के उदार करपल्लवों से लालित-पालित होनेवाले हम लोग कारूँ के खजाने की भी इच्छा नहीं रखते। साथ ही चिकित्सा के प्रसङ्ग में भी हम लोग रोगी की सम्मति की अपेक्षा नहीं रखते हैं। उसमें भी आपकी चिकित्सा के लिये तो सम्राट् की प्रबल आज्ञा है। अतः क्षमा करें [ यह कहकर शिवाजी की छाती पर वैद्यराज ने हाथ रक्खा ]।

[ महाराष्ट्रराज भीतर-भीतर क्रोध से जलते हुये भी अपने मनोविकार को छिपाकर पड़े रहे ]

गौर०—वैद्य महाशय ! आप ने किस रोग का निर्णय किया ?

चिकित्सक—जिस रोग का निर्णय किया उसका प्रतीकार कर रहा हूँ। 'आविद, आविद ! जरा दवा की पेटी तो खोलो। दवा पिलाकर मैं अभी क्षण भर में ही महाराज को नीरोग बना देता हूँ।' [ वैद्यराज के भृत्य ने पेटी का ढक्कन उठा दिया और वैद्यराज ग्लास में निर्मल जल के समान

अकस्मिन् काच-पात्रे निर्म्मल-जलमिव कश्चन द्रवकमापूर्य्य तस्मिन् श्वेतं चूर्णमेक मेलयितुमारेभे ]

महाराजः—किमिदमौषधम् ?

चिकित्सक—आम्, पीयूष-हालाहलं नामौषधम्।

माल्यश्रीक—पीयूष-हालाहलम् ?

चिकित्सक—आम्! पीयूष-हालाहलम्, कफ-वात-पित्त-प्रकोपजो रोगश्चेदिदं पीयूषं क्षणेनोल्लाघं विदधाति। पलायितुकामानां प्रवञ्चनामात्रं चेद् 'हालाहलम्' क्षणेन विनाशयति।

ततो निश्चितं विषमिदमिति मन्यमानाः सर्वे परस्परमवालूलुकन्। तावदेषोऽङ्गुल्यग्रेण तोयमावर्त्य, चूर्णं मेलयित्वा समीपमानयत्। महाराजस्तु तस्य तादृश-वचन-भङ्गी-श्रवणे क्रमतो विवृद्ध-

पीयूषहालाहलम् = अमृतविषम्। ननु विषामृतम्।

उल्लाघम् = नीरोगम्। प्रवञ्चनामात्रम् = प्रतारणामात्रम्।

एक प्रकार का तरल पदार्थ भरकर उसमें थोड़ा उजला सा चूर्ण मिलाने लग गये ]

महा०—यह क्या औषधि है ?

चिकि०—जी हाँ, यह 'पीयूष-हालाहल' नाम की औषधि है।

माल्य०—'पीयूष हालाहल !'

चिकित्सक—जी हाँ, यह 'पीयूष-हालाहल' है। यदि कफ, वात या पित्त के प्रकोप से कोई रोग हुआ हो तब तो यह 'पीयूष' ( अमृत ) क्षण भर में नीरोग बना देता है। किन्तु यदि भागने के लिये रोग की वञ्चना कोई करता है तो उसे यह 'हालाहल' ( विष ) क्षण भर में ही विनष्ट भी कर देता है।

उसके बाद "यह तो विष ही है" यह समझ कर सब परस्पर देखने लगे। तबतक अपनी अङ्गुली के अग्रभाग से पानी का आवर्त्तन(मिश्रण)कर वैद्यराज ने उसमें श्वेत चूर्ण को मिलाया और शिवाजी के मुख के पास वह ग्लास पिलाने के लिये ले आया। वैद्यराज की टेढ़ी-मेढ़ी बातें सुनने से अधिका-

मन्यु साम्प्रत यवन-स्पृष्ट-पानीय-पानमचिकीर्षुं प्रत्यक्षं गरल-जलं पाययति-इति ज्वालयेव ज्वलितो मुख-समीपमानीयमानं सपात्रं चिकित्सक-हस्तं तथा समताडयत्; यथा तत् काचपात्रं समुच्छलितं कुड्याहत शतधा समभूत्। तदाहृति-विस्मितप्रायस्य च चिकित्सकस्य शिरसि दृढं चपेटमेकमाहत्य "शास्तिरियं रोगिभि सह क्ष्वेलायाः"-इति कथयन् कूर्चं गृहीत्वा बलेन चकर्ष। ततश्च गौरसिंहोऽपि पृष्ठतो बाहुमूलं धृत्वा त सुदूरं जघर्ष।

अथ महाराजस्तस्य कृत्रिम-कूर्चं स्वहस्तेनोत्पाटितम्, तञ्च कृष्यमाणमपि खिलखिला-शब्दं हसन्त दृष्ट्वा किमिदमिति

---

विवृद्धमन्युः = प्ररूढकोपः। यवनस्पृष्टस्य, पानीयस्य = वारिणः, पानम्। गरलजलम् = विषमिश्रवारि। समुच्छलितम् = समुत्पतितम्। तदाहृत्या = तत्ताडनेन, विस्मितप्रायस्य = साश्चर्यस्य। चपेटः = प्रसृतं करतलम्। लक्षणया तत्प्रहारोऽपि। शास्तिः = दण्डनम्। क्ष्वेलायाः = उपहासस्य। चकर्ष = कृष्टवान्। जघर्ष = घृष्टवान्।

---

धिक क्रुद्ध तथा यवनों द्वारा स्पृष्ट जल तक पीने में भी अनिच्छुक महाराष्ट्र-राज ने "अब तो यह विष ही पिला रहा है" यह सोचकर आगबबूले होकर मुँह के पास लाये जानेवाले ग्लास से युक्त वैद्यराज के हाथ में ऐसा चपेटा लगाया कि वह ग्लास वैद्यराज के हाथ से छलककर दीवार में टकराकर चूर चूर हो गया। चोट लगने से वह वैद्यराज कुछ विस्मित सा हो ही रहा था कि शिवाजी ने उसके सिर में भी एक मजे का चपेटा लगाया और "रोगियों के साथ मजाक करने का यही दण्ड है" यह कह कर उसकी लम्बी दाढ़ी को भी जोरों से खींच लिया। फिर गौरसिंह भी पीछे से उसकी बाँह पकड़कर दूरों तक उसे घसीट ले गये।

किन्तु गौर सिंह द्वारा निर्मम रूप में घसीटे जाने पर भी खिलखिला कर हँसते हुए उस वैद्य तथा अपने हाथ से उखाड़ी गई उसकी बनावटी

सावधानतया समालुलोके ददर्श च यत्—स्वस्य बाल्य-मित्रं प्रसिद्धो योद्धा श्रीमान् सुरेश्वरोऽस्तीति।

ततो महाराज उत्थाय तं गाढमालिलिङ्ग। ततस्तथैव माल्यश्रीकः, गौरसिंहश्च परिषस्वजे। ततो महाराजाऽऽदेशेन सर्वे उपविष्टाः।

ततो विहस्य सुरेश्वरेण कथितम्—प्रभो! शिर शिरासु महती वेदना, सर्किं विश्वेभ्योऽपि चिकित्सकेभ्य ईदृश्येव चपेट-दक्षिणा दीयते? माल्यश्रीक आह—'फलमिदं सिंहे सह क्रीडायाः'। महाराष्ट्राजोऽपि मन्दं विहस्य किमपि नावोचत्। ततः सञ्जाते पारस्परिक-कुशल-प्रश्नादि-कलापे सुरेश्वरः समवादीत्।

---

आलुलोके = ददर्श। ददर्श इत्यस्य ज्ञानमर्थः। बाल्यमित्रम् = शैशव-सहचरम्।

परिषस्वजे = आलिलिङ्ग। महाराजादेशेन = महाराजाज्ञया।

शिर शिरासु = मस्तकनाडीषु। वेदना = पीडा। विश्वेभ्यः = समस्तेभ्यः। चपेटदक्षिणा = करतलप्रहारदक्षिणा। पारस्परिकाणाम् = आन्योन्यानाम्, कुशलप्रश्नादीनाम्, कलापे = समूहे।

---

दाढ़ी की ओर जब महाराष्ट्राज ने सावधान होकर अपनी दृष्टि डाली तो उन्होंने देखा कि वे तो उनके बाल्यावस्था के मित्र प्रसिद्ध योद्धा श्रीमान् सुरेश्वर जी थे।

यह देखते ही उठकर महाराज ने उन्हें गले लगाया। उसके बाद माल्यश्रीक तथा गौरसिंह ने भी उनका आलिङ्गन किया। तत्पश्चात् महाराज की अनुमति पाकर सब बैठ गए।

बैठने के बाद सुरेश्वर जी ने हँस कर कहा—"प्रभो! आपकी चपेट खाने से तो मेरे माथे में बहुत वेदना हो उठी है। क्या सभी वैद्यों को आप दक्षिणा के रूप में अपनी चपेट ही देते हैं?" माल्यश्रीक ने उत्तर दिया—"सिंह के साथ मजाक करने का तो यही फल होगा।" इस पर महाराष्ट्र राज ने भी मुस्करा दिया किन्तु कुछ जवाब नहीं दिया। तदनन्तर परस्पर कुशलादि प्रश्न के समाप्त हो जाने पर सुरेश्वर जी ने कहा—

महाराज! विद्मो वयं निखिलामत्रत्यां घटनाम्, न सा पुनर्वर्णनीया। महाराष्ट्र-देशाद् दिल्ली-पर्य्यन्तं प्रतिक्रोशान्तरालस्थाऽस्माकीना निवसन्ति। धावित्वा परस्परं क्रमतः संवादं वदन्तः पत्रं वाऽर्पयन्तः सत्वरं महाराष्ट्र-देशं भवद्विषये विदितवन्तं कुर्वन्ति। आकर्ण्य भट्टारकस्य निग्रह-वृत्तान्तम्; पारावार इव वाडवेन, कोप-कृपीटयोनिना क्षुभितो महाराष्ट्रदेशः। सर्वोऽपि दिल्लीं दिधक्षन्निव चिचर्वयिषन्निव चुचूर्णयिषन्निव लुलुण्ठयिषन्निव च कोप-जरा-जर्जरीभूतो भावत्कः। न जाने-किमिति भवतः स्वदेशं प्रति-

अत्रत्याम् = इह भवाम्। प्रतिक्रोशान्तरालम् = एकैकक्रोशमध्ये। धावित्वा = त्वरया गत्वा। विदितवन्तम् = अवगतार्थम्। भट्टारकस्य = स्वामिनः, भवतः। "राजा भट्टारको देवः" इत्यमरः। पारावार इव = सागर इव। वाडवेन = वडवानुन्मोत्थेनानलेन। कोप एव कृपीटयोनिः = ज्वलनः, तेन दिधक्षन्निव = दग्धुमिच्छन्निव। चिचर्वयिषन् = चर्वयितुमिच्छन्। चुचूर्णयिषन् = चूर्णयितुमभिलषन्। लुलुण्ठयिषन् = लुण्ठितुमिच्छन्। कोप एव जरा = वृद्धता, तया

"महाराज! यहाँ की सारी घटनाओं को हम लोग जानते हैं उनकी पुनः चर्चा अनावश्यक है। महाराष्ट्र देश से लेकर दिल्ली तक एक एक कोश की दूरी पर हमारे वीर योद्धा निवास कर रहे हैं। एक जगह से दूसरी जगह तक दौड़-दौड़ कर हमारे सैनिक मौखिक सवाद या पत्र द्वारा शीघ्र ही आपके बारे में महाराष्ट्र देश को सूचित कर रहे हैं। श्रीमान् के कैद कर लिए जाने की खबर से उत्पन्न कोपानल से सारा महाराष्ट्र देश उसी प्रकार क्षुब्ध हो उठा है जिस प्रकार बड़वानल से समुद्र क्षुब्ध हो उठता है। वहाँ की जनता इस प्रकार कोधात्मक वृद्धावस्था से जर्जर हो चुकी है जिससे ऐसा लगता है कि वह (जनता) दिल्ली को जला देना चाहती, चबा जाना चाहती, चूर-चूर कर देना चाहती और लूट लेना चाहती हो। फिर भी न जाने आप के मन में महाराष्ट्र लौट जाने की इच्छा क्यों नहीं हो रही है। यदि आप चाहें तो गरुड़, वायु

निवर्त्तितुमिच्छैव न भवति ? अन्यथा गरुडस्येव समीरणस्येव मनस इव च को नाम शक्तः श्रीमतो गतिमवरोद्धुम् ? तत्साम्प्रतं यवनानां कञ्चनोत्सवसमयः—इत्यवसरोऽयं प्रस्थानस्य। यद्यपि दिल्लीश्वरः शून्यमतावलम्बीति न तादृशोऽत्राऽऽडम्बरो मोहरमोत्सवस्य, तथाऽपि पर्य्याप्तोऽस्मत्कार्य्य-सम्पादनायेति न विलम्ब्यताम्।

ततो महाराजेन यत् स्थिरीकृतमासीत्, तदखिल कर्णे प्रोक्तम्। तेनापि बहुशः कथयित्वा श्रुत्वा च किञ्चिद् विचार्य्यैव कथितम्—

वरम्, यमुनाया अनुतीरं गच्छत एव पथः पार्श्वे पर्कटिपलाशिनस्तले सत्वरगामिनः पञ्चषा हया द्रक्ष्यन्ते। तेषां नियन्ता

जर्जरीभूत = व्याकुलः। गरुडस्येव = वैनतेयस्येव। समीरणस्येव = वायोरिव। मनस इव = चेतस इव। शून्यमतावलम्बी = "सुन्नी" इति ख्यात। बौद्धीय शून्यमतमेव यावनशब्देषु "सुन्न" इति ख्यातमिति हार्दम्। मोहरमोत्सवस्य = "मुहर्रम" इति ख्यातस्योत्सवस्य।

अनुतीरम्=अनुतटम्। पर्कटिपलाशिनः = प्लक्षवृक्षस्य। सत्वरगामिनः = शीघ्रगतय। नियन्ता=सारथि, सूत, प्रकृते रक्षक। स्वार्थम् =

राथा मन की गति के समान आपकी गति ( = स्वदेश प्रस्थान ) में कौन बाधा डाल सकता है ! अभी यवनों के 'मुहर्रम' त्यौहार का समय है—अत यहाँ से स्वदेश परावर्तन का यह बड़ा ही सुअवसर है। यद्यपि दिल्ली सम्राट् के 'सुन्नी' होने के कारण यहाँ 'मुहर्रम' बहुत धूमधाम से नहीं मनाया जा रहा है, तथापि हम लोगों की इष्ट सिद्धि के लिए तो इतना आडम्बर भी पर्याप्त है। अत अब विलम्ब न करें।"

इन बातों को सुन कर धीरे से महाराज ने अपनी सारी मन्त्रणाएँ उनके कान में बतला दी। भुरेश्वर जी ने भी बहुत कुछ कहने-सुनने के बाद कुछ विचार सा कर महाराज से पुन कहा—

"अच्छी बात है ! यमुना तट के पास जाते ही आप सड़क के किनारे एक पाकड़ के पेड़ के तले खूब तेज चलने वाले ५-६ घोड़े देखेंगे। यदि

पृष्टो दक्ष कर्णं संस्पृश्य, किमपि वदेच्चेत्स्वार्थं ते घोद्धव्या आरो-ढव्याश्च, मथुरां प्रति धावयितव्याः। मार्गेऽपि च सदक्षकर्णस्पर्शं श्रीमत्साम्मुखीना भवेयुः, तेऽपि स्वकीया एव निश्चेतव्याः। घोटकानां कशाश्च प्रायो दण्डरूपा एव लक्ष्यन्ते। तेषामग्रं सञ्चाल्याकृष्येत चेच्छुरिका बहिर्भवेयुः परिवर्त्य ता एव पुनर्दण्डाग्रेषु योज्येरश्चेद् भल्ला: सम्पद्येरन्-इति। को जानीते कीदृशी घटना घटेत पथि ?

तदाकर्णयन्तो मध्य एव सर्वे "साधु साधु"-इति प्रोचुः। गुप्तं किमपि सम्मन्त्र्य च, "परश्वः सायम्, परश्व:"-इति सहर्षं जगदुः।

अथोद्घाटितं कूर्चं च पुनः संयोज्य, उपनेत्रमासज्य, चिकित्स-कोनोक्तम्-महाराज ! ममौषधमङ्गीक्रियताम्। क्षणेन शान्तिर्भविता,

---

स्वस्मै प्रयोजनाय। घोद्धव्याः = ज्ञातव्याः। श्रीमत्साम्मुखीनाः = भवत्पुरः स्थिताः। निश्चेतव्याः = निर्णेतव्याः। कशाः = अश्वताडन्य। अग्रम् = प्रान्तम्। सञ्चाल्य = भ्रामयित्वा, "घुमा कर" इति हिन्दी। योज्येरन् = मेल्येरन्। घटेत = सम्भवेत्।

---

उनके साहस पूछे जाने पर अपने दायें कान छूकर उत्तर दें तो आप उन घोड़ों को अपने घोड़े समझेंगे और उन पर सवार होकर मथुरा के लिए घोड़े दौड़ा देंगे। रास्ते में भी दायें कान छूकर आपके जो लोग आवेंगे उन्हें आप अपने ही समझेंगे। घोड़े के कोड़े प्रायशः डण्डे की तरह ही दीखेंगे। उनके अग्र भाग को घुमाकर जब आप बाहर खींचेंगे तो उनसे छुरियाँ निकल आएँगी। यदि उलट कर छुरियों को आप डण्डों के आगे लगा देंगे तो भल्लम बन जाएँगे। कौन जानता है कि रास्ते में कहाँ कैसी परिस्थिति आ पड़ेगी।"

इन बातों को सुनते हुए सबों ने बीच में ही कहा—"ठीक है, ठीक है।" उसके बाद गुप्त रूप में कुछ मन्त्रणा करने के पश्चात् "परसों शाम को, परसों" इस प्रकार की बात सबों ने हर्ष पूर्वक कही।

तत्पश्चात् खुली हुई दाढ़ी को पुनः लगा कर, चश्मा पहन कर चिकित्सक ने कहा—"महाराज ! मेरी औषधि तो आप कृपया लेलें। क्षण

चिकित्सा-प्रकरणे तु आर्य्यशास्त्रेऽपि स्पर्शदोषो नास्त्यूरीकृतः। पुनः पेयं रचयामि, किञ्चित् पीयताम्।

शिव०—प्राप्तोदयो महाराष्ट्रराजः! चिकित्सक! सत्यं सुधाकरोऽसि, तव कर-स्पर्शेन हीयते मे व्याधिः प्रस्तूयताम्, अवश्यं पास्यामि।

तेन विहस्य मन्दमुक्तम्-"कथं न सुधाकरः, चन्द्रकान्तस्पर्शेऽपि रसं रचयेत्?" तदनन्तरं च पुनर्मन्द मोदप्रासेन गदितम्-'सुदुर्लभमिदमौषधम्। जलमिव कलिन्द-गिरि-निर्झरस्य, चूर्णमिव

आर्यशास्त्रे = हिन्दुधर्मग्रन्थे। ऊरीकृतः=अङ्गीकृतः। पेयम्=पानीयम्।

सुधाकरः=पीयूषपाणिः, पक्षे चन्द्रः। करस्पर्शेन = हस्तस्पर्शेन, किरणसंसर्गेण च। हीयते = क्षीयते। प्रस्तूयताम् = साध्यताम्।

सुधाकरः = शशी। चन्द्रकान्तस्य = शशितुल्यकान्तेः, स्पर्शे = संसर्गे, चन्द्रकान्तमणेः संसर्गे च। पक्षे चन्द्रकस्य=चान्द्रमानस्य, अन्तः = नाश, यस्मात् स शिवराजः। रसम् =द्रवात्मकमौषधम् वारि च। कलिन्दगिरिनिर्झरस्य=कलिन्दोद्भूतप्रवाहस्य, यमुनायाः इति वाच्योऽर्थः।

भर में ही आपका रोग दूर हो जाएगा। चिकित्सा के प्रकरण में हिन्दू-धर्म शास्त्र में स्पर्श दोष नहीं माना गया है, मैं फिर दवा बना रहा हूँ, आप थोड़ी सी दवा पीलें।"

शिव०—अब महाराष्ट्र राज नीरोग हो चुके वैद्य जी! आप तो सचमुच सुधाकर हैं, क्योंकि आपके हाथ से छूने से ही मेरा रोग समाप्त हो चुका। अब आप तैयार करें, अवश्य पीलेंगे।

वैद्य जी ने हँसते हुए कहा—"चन्द्रकान्त मणि (अर्थान्तर-चन्द्रमान का अन्त करने वाले शिवा जी) के स्पर्श होने के बाद भी सुधाकर (चन्द्रमा अर्थान्तर—शरबत बनाने वाला) रस (जल, अर्थान्तर—शरबत) क्यों नहीं बनाए!" क्षण भर में ही पुनः प्रसन्न मुद्रा में उन्होंने

शोषितस्य मधु-वंश-निर्य्यासस्य' ।

ततः स्मित्वा माल्यश्रीकेणोक्तम्, "स्पष्टं किन्नोच्यते यदिदं यमुना-जलम्, इयं च सिता"-इति ।

ततः सर्वे मन्दं जहसुः ।

महाराष्ट्रराजस्तु सिता-मधुरं कलिन्द-नन्दिनी-नीरं पीत्वा मुमुदेतमाम् ।

अथोत्थाय चिकित्सकः प्रोवाच-"गच्छाम्यहम्, पर्य्याप्तं ममौषध वारमेकमेव सेवनेन गदनदमपि शोषयितुम् । तदल्ला-कृपया परश्व एव भवांस्तथा प्रबलो नीरोगश्च संवर्त्स्यति; यथा शक्ष्यति

---

शोषितस्य=शुष्कतां नीतस्य । मधुवंशनिर्यासस्य, मधुवंशः=इक्षुदण्डः, तन्निर्यासस्य=तद्रसस्य । मधुनः वशानिर्यासस्य=वंशलोचनस्येति चार्थः ।

मुमुदेतमाम् = अतितरां जहर्ष ।

गदनदम्=रोगनदीम् । अल्लायाः = महामायायाः कृपया । यवना ईश्वरं मन्यन्ते तत्तदार्थमिति प्रागेव विनिवेदितम् । क्रोशान्, बहुसङ्ख्या-

---

कहा—"यह औषधि दुर्लभ है । यह जल कलिन्द पर्वत के झरने का है और यह चूर्ण सुखाये मीठे बाँस के निर्यास का है ।"

उस पर हँस कर माल्यश्रीक ने कहा—तो साफ-साफ क्यों नहीं बतला रहे हैं कि यह यमुना का जल है और यह चीनी है ।

उसके बाद सभी मुस्कराने लगे । और महाराष्ट्र राज भी चीनी से मिश्रित यमुना-जल पीकर बहुत ही प्रसन्न हो उठे ।

उसके बाद उठ कर वैद्यजी ने कहा—"मैं तो अब चल रहा हूँ और मेरी यह दवा रोगों के महासमुद्र को भी एक बार सेवन करने से ही सोख लेने वाली है । अतः अल्ला की कृपा से परसों आते-आते ही आप इतने प्रबल तथा नीरोग हो जाएँगे कि आप क्षण भर में ही कई

क्षणेन क्रोशानाजानेयेन धावितुम्" । तत. सर्वे—'तथाऽस्तु तथाऽस्तु'-इति स्वीचक्रुः ।

महाराजः स्वकीय हीरक-हार तस्य कण्ठे प्राक्षिपत् । सोऽपि प्रणमन् सोपानमुत्तीर्णं शिबिकामारोहन् प्रहरिभि. दृष्ट.—"का दशा महाराजस्य ?" स उक्तवान्—"रोग कठिन आसीत्, किन्तु तथा प्रतिकृतवानस्मि, यथा परश्व एव न लप्स्यते भवता रुग्णो महाराज." ।

ततो जन-प्रवाहे मिलिते तस्मिन्, प्रहरिणः परस्परमेव-मालपन्—

कान् । धावितुम्=त्वरित गन्तुम् । लोकप्रसिद्धेन वैद्याना कथनप्रकारेणानेन गूढेङ्गितमकाषात् ।

हीरकहारम्=मौक्तिकमालाम् । प्रतिकृतवान्=चिकित्सितवान् । रुग्णो न लप्स्यते=सरोगो न प्राप्स्यते-न मिलिष्यति, पलायितत्वादिति यावत् ।

कोशों तक तेज घोड़ा दौड़ाने में समर्थ हो जाएँगे !" यह सुन कर सबों ने "ठीक है, ठीक है" ऐसा कहा ।

पश्चात् महाराष्ट्रराज ने अपना हीरे का हार भी वैद्य जी के गले में डाल दिया । वैद्यराज भी शिवा जी को प्रणाम करते हुए सीढ़ियों से नीचे उतर कर जब अपनी पालकी में बैठने लगे तब प्रहरियों ने उनसे पूछा—"महाराज की हालत कैसी है ?" वैद्य जी ने उत्तर दिया—रोग तो बहुत ही भयङ्कर था, परन्तु मैंने इस तरह की अच्छी चिकित्सा की है कि आप परसों रुग्ण महाराज को नहीं देखेंगे ।

जब प्रहरी लोग एकत्र हुए तब वे आपस में निम्न-लिखित रूप से बातचीत करने लगे—

एकः—गहनो रोग आसीत्, कथं क्षणेन शिथिलीकृत एतेन ?

द्वितीयः—अरे ! न जानीषे, सम्राजा चिकित्सकोऽयम्।

तृतीयः—मन्ये, एतच्चिकित्सा तुष्टेन महाराजेनैव हीरकहारोऽयमर्पितः, यः कन्धरेऽस्य लोल-लोलोऽवलोकितः।

चतुर्थः—वेत्सि रे ! महाराष्ट्रराजस्यौदार्य्यम्, यः प्रतिमज्जिदस्थानं प्रत्यहं पक्वान्नानि प्रेषयति, यश्च अस्माद्दृशानप्यनुसेवकानपि कूर्चिका स्निग्ध-कूर्चान् इण्डिरिका-पिचण्डिलांश्च विदधाति।

गहनः = कठिनः। शिथिलीकृतः = दुर्बलीकृतः। रोग इत्यनुरजनीयम्। प्रतिमज्जिदस्थानम् = सर्वेषु "मस्जीद" इति प्रथितस्थलेषु। लोललोलः = अतिचञ्चलः।

पक्वान्नानि = पूरिकापूपादीनि। "पक्वान" इति हिन्दीप्रसिद्धोऽपभ्रष्टतया। कूर्चिकया = क्षीरविकृत्या,

"दध्ना सह पयः पक्वं यत्तत्स्याद्दधिकूर्चिका।
तक्रेण पक्वं यत्क्षीरं तद्भवेत्तक्रकूर्चिका॥"

स्निग्धाः = चिक्कणीकृताः, कूर्चा येषां तान्। इण्डिरिकाभिः वटिकाभिः, मिष्टान्नविशेषैर्वा। पिचण्डिलान् = तुन्दिलान्।

एक प्रहरी—रोग तो बड़ा ही भयङ्कर था, फिर इतनी शीघ्रता से कैसे उन्होंने आराम कर दिया ?

दूसरा प्रहरी—अरे ! तुम नहीं जानते, ये सम्राट् के चिकित्सक हैं न ?

तीसरा प्रहरी—मुझे तो ऐसा लग रहा है कि इनकी अद्भुत चिकित्सा से ही सन्तुष्ट होकर महाराष्ट्रराज ने उन्हें हीरे का हार भी दे दिया है जो इनके कन्धे पर लटक रहा था।

चौथा प्रहरी—जानते हो रे ! महाराष्ट्र राज कितने उदार हैं जो प्रतिदिन प्रत्येक मस्जिदमें पक्वान भेजा करते हैं और हम लोग यद्यपि उनके शत्रु के सेवक हैं, फिर भी खोवा खिलाते-खिलाते हम लोगों को चिकने मूंछ वाले बना रहे हैं और इण्डिरिका (मिष्टान्नविशेष)ओं से हमारी तोंद फुला रहे हैं ?

किमाश्चर्यं यदि स उपकारिणे चिकित्सकाय हारं दद्यात्?

सर्वे—[ शनैः ] वर्द्धतां वर्द्धतां महाराजः!

परेऽहनि महाराष्ट्रराजस्योल्लाघतामाकलय्य, ऋते केभ्यश्चित् सर्वेऽपि प्रसादमेवाऽऽकलयन्। महाराष्ट्रराजेन चाऽऽपणस्थानि सर्वाण्यपि पक्वान्नानि द्विगुण-मूल्यैः क्रीतानि, स्वाऽऽवसथमानाय्य च महत्सु पेटास्वायोज्य, दिल्लीनगर वास्तव्यानां भद्राणां गृहेषु प्रेषितानि। अद्य महाराष्ट्रराजस्योल्लाघतासूचिकेयं वृष्टिरिव पक्वान्नानां सञ्जाता। मज्जिद-स्थानेषु च दधिकूर्चिका-नवनीत-सितापाक-प्रपातैः पङ्किलानि समभूवन् भूतलानि। यमुना तटे चैकम-

उल्लाघताम् = नीरोगताम्। केभ्यश्चित् = दावहृदयेभ्यः। आपणस्थानि = विपणौ विक्रयाणि। स्वावसथम = स्वसदनम्। भद्राणाम् = श्रेष्ठानाम्। उल्लाघतासूचिका = रोगमुक्तताद्योतिका। दधिकूर्चिकानाम्, नवनीतानाम् = हैयङ्गवीनानाम्, सितापाकानाम् = शर्करापाचितानाम्, कूष्माण्डादीनाञ्च प्रपातैः = अत्यधिकपतनैः। पङ्किलानि = पिच्छिलानि।

यदि अपने उपकारक चिकित्सक को उन्होंने हार ही दे दिया तो उनके लिए यह कौन सी बड़ी बात है?

सब प्रहरी—( मन्द स्वर में ) महाराष्ट्र राज की विजय हो! विजय हो!

दूसरे दिन महाराष्ट्रराज की नीरोगता देख कर कुछ दुष्टों को छोड़ कर सब के मन में प्रसन्नता ही हुई। और उस दिन महाराष्ट्रराज ने बाजार में जितना भी पकवान उपलब्ध था उसे दूनी कीमत पर खरीद लिया और अपने निवास स्थान में मँगवा कर बड़ी बड़ी पेटियों में भर कर दिल्ली नगर में रहने वाले भद्र व्यक्तियों के घर भेजवा दिया। उस दिन तो महाराष्ट्र राज की नीरोगता की सूचना देने वाले पकवानों की वर्षा सी हो रही थी। मस्जिदों में दधिकूर्चिका (जमे हुए तथा उबले हुए दूध का मिश्रित रूप), मक्खन, मुरब्बे आदि के (ढोते समय) रास्ते में गिरने

त्पीयो यवसोटज निर्मापितम्। तत्रैव शतशः पक्वान्न-पेटा संस्थाप्य सहस्रशो भिक्षुभ्यो मोदक शष्कुल्यपूप यवागू-पिटकाऽऽमिक्षे-ण्डरिकादीनि वितीर्णानि। तेषु यथाशक्ति पक्वान्नभारानुत्थाप्य नीतवत्सु परेषु पङ्ग्वन्धादिषु तत्रैवोपविश्यानायासं भुक्तवत्सु, परिशिष्ट यमुनाजले मत्स्य कच्छपादिभ्योऽपि वितीर्णम्। उद्घोषितञ्च यत् यमुनातटे श्वोऽपि सायङ्काले भिक्षुभिरागन्तव्यम्, यथेष्ट दास्यते, उपवेश्य च भोजयिष्यते—इति। अवलोक्येमामुदारतां महाराष्ट्रराजस्य सर्वेऽपि—यवना अयवनाश्च मित्राणि शत्रवश्च तं प्रशशंसिरे।

यवसोटजम् = यवसकुटीरम्। तृणविशेषच्छन्न लघुगृहम्। "पर्णशालोट-जोऽस्त्रियाम्" इत्यमर। यवागू = पिष्टमिष्ट जले पकम् "लपसी" इति हिन्दी। पिटकम् = "पेड़ा" इति ख्यातम्। आमिक्षा = तप्ते पयसि दध्यादिसंसर्गेण यद्विदीर्णं दुग्ध तत्। "आमिक्षा सा शृतोष्णे या क्षीरे स्याद्-धियोगत" इत्यमरः। लोके "छेना" इति कथ्यते, वङ्गीयमिष्टान्नमूलभू-तम्। इतरत्पूर्वव्याख्यातम्।

के कारण मार्ग की भूमि पङ्किल हो गई था। यमुना के तट पर भी एक छोटी सी घास की कुटिया बनवाई गई थी। उसी में सैकड़ों पकवान भरी पेटियाँ रख कर हजारों भिक्षुकों को मिठाइयाँ, कचौड़ियाँ, पूये, लपसी, पेड़े, छेना इण्डरिका आदि अच्छे-अच्छे भक्ष्य पदार्थ दिये जा रहे थे। जब ताकत के अनुसार भिक्षुक पकवान लेकर अपने अपने स्थान लौट गए थे और लँगड़े लूँजे वहीं बैठ कर निश्चिन्तता से सब कुछ खा चुके थे तब जो अवशिष्ट रह गया था उसे यमुना जल में मछली, कछुवे आदि जलचरों के भोजन के लिए प्रवाहित कर दिया गया था। और महाराष्ट्रराज की ओर से घोषणा करवा दी गई थी कि यमुना के तट पर कल शाम को भी भिक्षुक लोग आ जाँय, उन्हें पर्याप्त भोजन-सामग्री भी दी जाएगी और वहाँ बैठ कर भी खिलाया जाएगा। महाराष्ट्रराज की इस उदारता को देखकर सभी हिन्दू मुसल्मान, शत्रु मित्र उनकी प्रशंसा कर रहे थे।

अद्य रात्रौ दिल्ली-वास्तव्य पक्वान्न पाचकाः परेऽह्न्यधिक पक्तुमादिष्टाः। ते च महति विक्रये महाँल्लाभः-इति समस्तां रजनीं पक्वान्नानि प्रस्तुवन्त, चुल्लीं ज्वलयन्त, कटाहेषु पौन पुन्येन घृतमाश्यन्त, पिष्टातक-द्रवैरपूपानि पाचयन्त, दर्वीश्चालयन्त, हस्ताभ्यां मोदकान् वर्तुलीकुर्वन्त, रामठ-शृङ्गवेर लवङ्गैला-लवण-मरिचाऽऽमोदित सुस्वादु चूर्ण गर्भान् शृङ्गाटकान् सम्पादयन्तः, शष्कुलीनां घृत च्योतयन्तः, यवागूश्चालयन्त, हिङ्गु-जीरक लवण-राजिकामोदित तक्रे वटकान् मज्जयन्तः, कूर्चिकासु शर्करा-

प्रस्तुवन्तः = साधितवन्तः। कटाहेषु = पूरिकानिर्माणभाजनेषु। घृतम् = सर्पिः। आश्यन्तः = क्षिपन्तः। पिष्टातकद्रवै = अपूपनिर्माणार्थं पूर्वत एव रक्षितैः-मिश्रपिष्टमिश्रणैः। दर्वीः = पूरिकानिष्कासनभाजनानि। प्रकृते "छमौटा" इति हिन्दी। वर्तुलीकुर्वन्तः = गोलतां नयन्तः। रामठशृङ्गवेरलवङ्गैला-लवणमरिचै, आमोदितम् = सुगन्धि कृतम्, सुस्वादु चूर्णम्, गर्भे येषा तान्। रामठादयः पूर्वं व्याख्याता। शृङ्गाटकान् = "समोसा" इति लोके ख्यातान्। च्योतयन्त = निस्सारयन्तः। हिङ्गुजीरकलवणराजिकाभि आमोदिते = सुरभिते, तक्रे = उदश्विति, "तक्र ह्युदश्विन्मथित" इत्यमर। राजिका = "राई" इति लोके ख्याता।

उस रात को दिल्ली निवासी हलवाइयों को अगले दिन अधिक से अधिक मिठाइयाँ आदि बनाने का आदेश दे दिया गया था। अधिक बिक्री होगी तो बचत भी अधिक होगी, इस भावना से सारी रात पक्वान बनाने के लिए चूल्हे जलाते हुए, कड़ाहों में बारम्बार घी डालते हुए, आँटा आदि घोल-घोल कर पूए बनाते हुए, छमौटा चलाते हुये, हाथों से मिठाइयों को गोलाकार बनाते हुए, हींग, अदरक, लवङ्ग इलायची तथा मरिच आदि मसालों से भरे हुए समोसे बनाते हुए, पूरी कचौड़ियों से घी चुआते हुए, सूजी चलाते हुए, हीङ्ग, जीरा, नमक और राई के चूर्ण से सुगन्धित तक्र में बड़ा बना कर डुबोते हुये (दही बड़ा बनाते हुये),

सितोपल-मृद्वीका आलोडयन्तः, प्रातरेव पर्वतानिव पक्वान्नानां प्रस्तुतवन्तः। महासम्भारममुं स्वच्छानां भोजन-सामग्रीणामालोक्य मोहरमोत्सवानन्दिताः सहस्रशो नागरा अपि यथेष्टं चिक्रीयिरे। परिशिष्टञ्चाखिलं सामग्री-जातं महाराजाऽध्युषितप्रासादस्य चतसृष्वपि शालासु व्यापृतम्। पक्वान्न-समारोहममुमालोक्य प्रहरिणः परस्परमेवमालापमकार्षुः।

एकः—महामद! उद्विग्नोऽस्मि आलोकमालोकं प्रत्यहमेतमाडम्बरम्, कदाऽयं समाप्स्यति वितरण कोलाहलः?

महामदः-हसन! विक्षिप्तोऽसि, एतस्यैव कोलाहलस्य प्रसा·

---

वटकान्="बड़ा, बारा" इति हिन्दी। मज्जयन्तः = बुडयन्तः। कूर्चिकासु = क्षीरविकृतिषु। आलोडयन्तः = संगात्य मथ्नन्तः। पर्वतानिव = गिरीनिव। उच्चतायामुपमितोऽपि। महासम्भारम् = विपुलसञ्चयम्। चिक्रीयिरे = क्रीतवन्त। सामग्रीजातम् = वस्तुजातम्। व्यापृतम् = विस्तारितम्।

आडम्बरम् = सम्भर्दम्। वितरणकोलाहलः = दानकलकलः।

विक्षिप्तोऽसि = उन्मत्तोऽसि।

---

खोआ में खाड, मिश्री तथा शिशमिश आदि मिलाते हुए सुबह होते होते हलवाइयों ने पहाड़ों की तरह पकवानों की ढेर लगा दी थी। अच्छी अच्छी भोजन सामग्रियों की ढेर देख कर मुहर्रम मनाने वालों ने भी काफी पकवान खरीदे थे। और सब सामान महाराष्ट्रराज के निवास भवन को चारों तरफ दूकानों में फैला हुआ था। पकवान की उस विशाल ढेर को देख कर सभी प्रहरी आपस में निम्न-लिखित प्रकार से बातचीत कर रहे थे—

एक प्रहरी—मुहम्मद! प्रतिदिन इस आडम्बर को देखते-देखते अब मन ऊब गया है। यह कोलाहल कब समाप्त होने वाला है?

मुहम्मद—हुसेन! क्या तुम पागल हो गए हो? इसी कोलाहल के

दात् वयमपि यवागू सर्पिः-सिक्त करतलं श्मश्रुषु प्रोञ्छामः, तत्कोऽयं हर्ष-समये उद्वेगः ! कसीम ! किं चिन्तयसि ?

कसीमः—अद्य चरमं दिनं वितरणस्येति श्रूयते ।

महा० आः ! कष्टम् !! तन्मधुर-भाषणैस्तोषणीयो महाराजः, निर्गमन प्रवेशेषु प्रयश्च नावरोद्धव्यो जनः, यथा तुष्टोऽन्नभवान-धिकं प्रयच्छेत ।

हसनः—अहो ! कोष्णानां कचौरीणां गन्धोऽसौ चपलयति मे रसनाम् ।

---

प्रसादात् = कृपायाः यवागूर्लपिथा, सिक्तम् = आर्द्रम् । एवम्भू-तप्रयोगेण यवागूशब्दस्य "हलुवा, मोहनभोग" इति प्रसिद्धेऽपि प्रवृत्तिनि-मित्त दर्शयति । उद्वेगः = विरागात्मक शोकम् । 'महामद-हसन-कसीमाः' नामानि यवनभृत्यानाम् ।

तोषणीयः = प्रसादयितव्यः । निर्गमनप्रवेशेषु = गमनागमनेषु । प्रयच्छेत् = दद्यात् ।

कचौरीणाम् = घृतचोरिणाम् । प्रयोगोऽस्यान्यत्रापि मिलति । तद् यथा—

"माषोदरी सुभगहिङ्गुसुवासयुक्ता धान्याब्दशुण्ठिमरिचादिभिरर्चिता च । कोष्णाऽमृतोपमरसा रसनाभिरामा हे हे कचौरि ! घृतचौरि ! नमो नमस्ते ॥"

---

प्रसाद से तो हम लोग भी हलवा खा-खाकर मूँछ पर हाथ फेरा करते हैं। इस हर्ष के अवसर पर उद्वेग कैसा ? कसीम ! तुम क्या सोच रहे हो ?

कसीम—सुना जाता है कि आज पकवान बाँटने का अन्तिम दिन है।

मुहम्मद—आः ! तब तो बड़ी ही दुःखद बात है । अच्छा, महाराष्ट्र-राज को मीठी बातों से प्रसन्न करना चाहिये और भीतर जाने-आने में किसी पर रोक-टोक नहीं लगाना चाहिये ताकि महाराष्ट्रराज प्रसन्न होकर अधिकाधिक भोज्य पदार्थ हम लोगों को दे सकें ।

हुसेन—ओह ! गरम-गरम कचौरियों की गमक तो मेरी जिह्वा को चञ्चल बना रही है ।

कसीमः—महामद! हसन! सतर्कौ भव, कोटपालोऽसौ समायाति।

अथ सर्वे भल्लमुधम्य स्तब्धग्रीवा इतश्चेतश्च पर्य्यटितुमारब्धवन्तः, यावद्रेचितकेनाश्वं चालयन् कोटपालो निवृत्तः।

दिनमिदं प्रधानं मोहरमोत्सवस्य, गृहे गृहे शोक-समाजः, स्थाने स्थाने विलाप-गीति-गानम्, न कस्याप्यवसरोऽद्य विषयान्तरं सन्धातुम्। मोहरमोत्सवानुषङ्गिणां हरितैर्वस्त्रैर्दिल्ली हरितेवाभूत्।

---

इति मूलकारानुमोदिता टिप्पणी। घृतचौरीशब्दापभ्रंश एव लोके "कचौरि" इति प्रसिद्धः, प्रदर्शित पद्यन्तु हास्यरसाभ्यन्तरच्छन्दोमात्रापूर्णविचारमविधायैव निर्मितम्। अत एव कचौरि! इति, घृतचौरि! इति चोभयसम्बोध्यमानं दृश्यत इति वेदितव्यम्। वस्तुतस्तु हिन्दीप्रभृतिषु प्रसिद्धा ये केचनापि शब्दा व्याकरणप्रक्रियया शुद्धाः सन्तः प्रयोज्याः। एवमेव सर्वासु भाषासु भवति। तथा च कचौरीशब्दस्य प्राक्रियिकस्य प्रयोज्यत्वे साधुत्वे च न लेशतोऽपि संशयः।

रेचितकेन = अश्वगतिविशेषेण। कोटपालः="कोतवाल"इति प्रसिद्धः।

शोकसमाजः=शोकप्रदर्शनार्थं सम्मिलिता गोष्ठी। तद्दिने मोहमद-नामा यवनधर्मप्रवर्तको मारित इति शोकाभिनयमद्यापि कुर्वन्ति। विलापगीतेः = 'मर्सिया' इति उर्दूप्रसिद्धायाः, गानम् = गीतिः। विषयान्तरम् = कार्यान्तरम्, सन्धातुम् = विचारयितुम्। मोहरमोत्सवस्य, अनुषङ्गिणाम् = सङ्गिणाम्। हरिता = हरिद्वर्णवती। ज्वलयन्निव =

---

कसीम—मुहम्मद! हुसेन! सावधान हो जाओगे, कोतवाल आ रहा है!

उसके बाद घोड़ा नचाते हुये कोतवाल के वहाँ से गुजर जाने तक वे बल्लम सम्हाल कर गर्दन स्तब्ध करके सावधानी से इधर उधर घूमते रहे!

उस दिन मुहर्रम का सबसे प्रधान उत्सव था। घर-घर में शोक सभा का आयोजन किया जा रहा था, जगह-जगह पर लोग मर्सिया गा रहे थे, किसी को अन्य विषय में सोचने की फुरसत नहीं थी। मुहर्रम मनानेवालों

स्यारब्यादि म्लेच्छदशान् दिधक्षुरिव अस्ताचल-निर्झर-शावल जलानि पिपासुरिव वरुणदिशो नेदीयान् सवृत्त ।

अथ शनै शनैरभूवन् छत्रमया दिल्लीमार्गा । सहस्रश सेचका पृष्ठाऽऽरोपितैर्भस्त्रा-पूरितैर्जलभारै 'अपसरापसर' इति पान्थानपसारमपसार पथ सेक्तुमारब्धवन्त । क्षणेनाऽऽपणिवैरा पणा सज्जीकृता विपणयश्च जन-प्रवाह-पूरिता सञ्जाता । महाराष्ट्रराजस्य गृहात् क्षण क्षण पक्वान्न पूर पूरितानि विशालानि वश-पात्राणि बहिर्नीयन्त स्म । तावद् गौरसिंहोऽऽगत्य प्रहरिभ्य प्रत्येक मधुरान्नानां महासम्भार प्रदत्त । साम्मुखीना पार्श्व-परिवर्तिन

---

पाश्चात्यान् = पश्चिमभवान् । दिधक्षुरिव = दग्धुमिच्छुरिव । अस्ताचल निर्झराणाम् चरमगिरिवारिप्रवाहाणाम्, शीतलजलानि शिशिरवारीणि । पिपासुरिव — पातुमिच्छुरिव । सवृत्तोऽभवत् । वरुणदिश पश्चिमाया । नेदीयान् — निकटस्थ ।

छत्रमया = आतपत्रमया । छत्रिजनसञ्चारात् । सेचका = दार्तिका । 'भिस्ती' इति ख्याता । भस्त्रापूरितै = दृतिभरितै । भस्त्रा चर्मप्रसेविका इत्यमर । अपसारमपसारम् = अपसार्यापसार्य अपनुदन्तम् ।

---

अरब आदि पश्चिमी म्लेच्छ देशों को मानो जला कर भस्मसात् कर देने की और अस्ताचल के झरने के शीतल जल को मानो पीने की इच्छा रखते हुये भगवान् सूर्य पश्चिम दिशा के निकट पहुँच गए थे ।

तदनन्तर धीरे धीरे दिल्ली के मार्ग छातों से भरने लग गये । हजारों पानी सींचने वाले अपने अपने पीठ पर पानी से भरी चमड़े की डालचा लाद कर हटो हटो कहकर रास्ते से पथिकों को हटाते हुए पानी छिड़कने लग गये । क्षणभर में ही व्यापारियों ने अपनी-अपनी दूकानें सजा ली थीं और बाजार की गलियाँ लोगों की भीड़ से भर गई थीं । महाराष्ट्रराज के घर से मिनट मिनट पर पकवानों से भरे बड़े-बड़े बाँस के टोकरे बाहर निकाले जा रहे थे । तब तक गौरसिंह आये और प्रत्येक प्रहरी को मिठाइयाँ

आपणिकाश्च मोदकादि-राशि-दानैरतितरां तोषिताः। पेटानां परत पेटाः, विहङ्गिकानां परतो विहङ्गिकाः, सर्वा एव पक्वान्नानां महासम्भारैः पूरिताः सर्वा एव चोपरितः पटैरावृताः, बह्वयश्च तत्र द्वाभ्यां त्रिभिश्चतुर्भिश्च वाहकैर्वाह्या आसन्। सर्वोऽयं पक्वान्न-पात्र-समुदायः कालिन्दी-कूल कुटीरमाप्तः। सहस्रशस्तत्र भिक्षुकाः पक्वान्न-वितरणैस्तोषिताः, अपरे उपवेश्य भोजिताः, सर्वे च परितृप्ता निवर्त्तितुमारेभिरे।

अथ संवृत्तोऽन्धकारः। कुटीरान्तरे चैकस्याः पेटायाः पक्वान्न-निचयमपसार्य्य तन्मध्यान्नि:सृत एकस्तेजस्वी संन्यासी। एष

सेक्तुम् = आर्द्रीकर्तुम्। आपणिकैः = आपणाध्यक्षैः। वंशपात्राणि = वेणुनिर्मिताः पेटकाः। सांमुखीनाः = पुरःस्थिताः। विहङ्गिकानाम् = वीवधानाम्, भारयष्टीनाम्। "बहगी" इति हिन्दी। उपरितः = उपरिष्टात्। आवृताः = आच्छन्नाः। वाहकैः=भारकैः = वैहङ्गिकैः। वाह्याः = प्रापयितव्याः। कालिन्दीकूलकुटीरम् = यमुनातटस्थलघुकुटीम्। आप्त = गतः। परितृप्ताः = अतितरां भोजनेन तुष्टाः।

संवृत्तः=समभूत्। पक्वान्ननिचयम् = पूरिकादिसन्दोहम्। अपसार्य = दूरीकृत्वा। निःसृतः = बहिर्भूतः। धूलिविमर्दधूसरितगात्रः=रजोव्यूह-

का एक एक टोकरा उन्होंने दे दिया। सामने आए हुए, पास [redacted] खड़े तथा दूकानदारों को भी मिठाइयाँ आदि देकर सन्तुष्ट किया गया। पेटियों पर पेटियाँ, बहंगियों के बाद बहंगियाँ निकल रही थीं और सब पकवानों से लदी थीं, कपड़े से ढकी थीं बहुत पेटियाँ और बहंगियाँ तो ऐसी थीं कि एक से नहीं अपितु अनेक व्यक्तियों से ढोने योग्य थीं। पकवानों से भरे सब पात्र क्रमशः यमुना के तट पर लाये गये। वहाँ पकवानों के बाटने से हजारों भिक्षुक सन्तुष्ट किये गये, कुछ लोगों को बैठा कर भी खिलाया गया और पश्चात् तृप्त होकर सब वहाँ से चलने लग गए।

तब तक सन्ध्या हो चुकी थी। कुटी के भीतर पड़ी पेटियों के बीच एक में से सारा पकवान हटाकर उसमें से एक तेजस्वी सन्यासी बाहर निकले।

धूलि-विमर्द-धूसरित-देहः काषाय-वसन-वेष्टित-कच-कलापः, काषाय-वस्त्र-परिधानोत्तरीयः, वक्र दण्डहस्तः, भस्मोल्लिखित-ललाटः, कुटीरान्तःस्थान् द्वित्रान् आलिङ्ग्य, "को विलम्बः" इत्यवोचत्।

एष महाराष्ट्रराजः, ते च गौरसिंहादयो वीराः, तेऽपि पक्वान्न-वाहक-वेषं परित्यज्य, संन्यासि-वेषमाकलय्य, मनसैव भगवतीं भवानीं प्रणम्य, पृष्ठतः कुटीरात् निःसृत्य, अनुकालिन्दीतीरमेव प्रचलिताः। समयेऽस्मिन् लोह-पञ्जरान्निःसृतः पञ्चास्य इव, जाल-बन्धन-विमुक्तो विहङ्ग इव, कुवेणीतो नद्यां परिभ्रष्टो मत्स्य इव,

च्छुरितदेहः। काषायवसनेन = गैरिकवस्त्रेण, वेष्टितः= वलयितः, कचकलापो येन सः। काषाय वसन परिधान, उत्तरीयञ्च यस्य सः। वक्रः=कुटिलः, दण्डः, हस्ते यस्य सः। भस्मोल्लिखितललाटः=विभूतिच्छुरितालिकः।

पक्वान्नवाहकानाम्=मिष्टान्नप्रापकाणाम्, वेशम् = नेपथ्यम्। भवानीम् = शिवसहचरीम्। अनुकालिन्दीतीरम् = यमुनातटसमीपतः। लोह-पञ्जरात् = आयससिंहबन्धनागारात्। पञ्चास्य इव = केसरीव। जाल-बन्धनात्-विमुक्तः = अपसृतः। विहङ्ग इव = पक्षीव। कुवेणीतः= मत्स्याधानीतः। परिभ्रष्टः = चलितः। अहितुण्डिकस्य = सर्पग्राहिणः,

समस्त शरीर पर धूलियों का लेप लगाये हुए, गेरुआ वस्त्र से अपने बाल को लपेटे हुए, गेरुआ वस्त्रधारी, टेढ़ी लाठी हाथ में लिये, ललाट पर भस्म रमाए सन्यासी ने कुटिया में वर्तमान दो-चार व्यक्तियों का आलिङ्गन कर पूछा—"अब विलम्ब क्यों ?"

यह महाराष्ट्रराज और वे गौरसिंह आदि पकवान ढोनेवालों का वेश छोड़कर सन्यासियों का वेश धारण कर, मन ही मन भगवती भवानी को प्रणाम करते हुए कुटी के पीछे से बाहर निकल कर यमुना-तट की ओर चल पड़े। उस समय लोहे के पिंजड़े से मुक्त सिंह के समान, जाल के बन्धन से उन्मुक्त पक्षी के समान, (मछलियाँ रखने की) टोकरी से किसी तरह निकलकर नदी में गिरी हुई मछली के समान, सँपेरे की पेटी से विमुक्त सर्प

अहितुण्डिक-पिटकापसृतः पन्नग इव, चिरानुभूतं स्वातन्त्र्यसुख-मनुभवन् महाराष्ट्रराजः परितोऽवलोक्य सुदीर्घमश्वसत् । अवालोकयच्च-यद् गगनतलं किञ्चित् किञ्चित् श्याममतो धत्ते । अस्पष्टाकृतिरपि सम्मुख दक्षिण-दिशि सुदूर वितनः, विनिवर्तमान परश्शत भिक्षुक-व्रात-व्याप्त', यातायात परैरनेकैः पान्थैश्च परिपूरितो घण्टापथ. । वामत चाल्यमानाभिः, मयूर-कारण्डवादि-विविधाऽऽकाराभि , दीर्घाभि , आयताभिः, अल्पाभि', महतीभिः साट्टाभिः, निरट्टाभिः, सोल्लोचाभि', अनुल्लोचाभि', सनूपुर-क्षेपणी-क्षेपण-झणत्कार-विस्मायित-मीनाभिः, पथिकै , व्यापार-वस्तुजातैः, क्रीडा-

---

पिटकात् = पेटकात , अपसृतः = पलायितः । पन्नग इव = नाग इव । चिराननुभूतम् = दीर्घकालाल्लब्धम् । अश्वसत् = निश्वासमग्रहात् । दु ख भुत्ताना स्वभावोऽयम् ।

धत्ते = दधाति । अस्पष्टाकृति = अविभाव्यमानाकारः । वितत: = विस्तीर्णः । विनिवर्त्तमानानाम् = परावृत्ति लभमानानाम् , परश्शतानाम् , भिक्षुकाणाम् , व्रातेन, व्याप्तः । घण्टापथ =राजमार्ग. । चाल्यमानाभि = सार्यमाणाभि । दीर्घाभि = लम्बमानाभि । आयताभि = विशालाभि । अल्पाभि =लघ्वीभि । साट्टाभिः=सक्षौमाभि । 'स्यादट्ट क्षौमम्'-इत्यमरः । सोल्लोचाभि =सच्छदिभि । सनूपुरक्षेपणीनाम्=क्षुद्रघण्टिकाभि सहिताना

---

के समान का आनन्द पानेवाले महाराष्ट्रराज ने इधर उधर देखकर चैन की साँस ली और देखा कि आकाशमण्डल कुछ कुछ काला सा हो रहा था। अस्पष्ट रूप में दीखनेवाला और दक्षिण दिशा की ओर काफी दूर तक जाने वाला राजमार्ग लौटनेवाले असंख्य भिक्षुकों के समूह से व्याप्त और आने जानेवाले पथिकों से परिपूर्ण था। बायें भाग में मयूर, बत्तक आदि के विविध आकार के, लम्बे चौड़े, छोटे बड़े, अटारीयुक्त तथा अटारीरहित, चन्दवावाले तथा बिना चन्दवावाले, घूँघरूदार चप्पू के चलाने से होने वाली घुँघरू की झङ्कार से मछलियों को विस्मित कर देनेवाले, पथिक,

मात्रव्यसनिभिर्नागरैश्च परिपूरिताभिः, परस्सहस्राभिः तरणिभिः, विलोडित नील-नीरा, परश्शत – कमठ-पृष्ठ-बिम्ब – प्रतिबिम्बैरिव, प्रतिसायं निविशमानावगाह्मान – नीलगिरि – गण्डशैलायमान-सिन्धुर-घटा क्षालनैरिव, सकल कलङ्काङ्कित दिल्ली-वल्लभ-सम्पर्कैरिव च श्याम – श्यामा, सन्तरणाऽऽसक्तैर्जैवनयुवकैर्विक्षोभ्यमाणा, क्वचित्सन्ध्योपासन-परायणैर्जल-युद्धाऽऽसक्त-यवन – बालक – वर-

नौकाद्यशनाम्, क्षेपणहस्तत्कारैः=गतनसणदिति शब्दैः, विस्मापितमीनाभिः=साश्चर्यीकृतमत्स्याभिः। तरणिविशेषणम्। क्रीडामात्रव्यसनिभिः=खेलनमात्रनिरतैः। नागरैः=पौरैः। तरणिभिः=नौकाभिः। विलोडितम् = हिल्लोलितम्, नील नीर यस्याः सा। परश्शतानाम् = अगणितानाम्, कमठानाम् = कूर्मानाम्, पृष्ठस्य, बिम्बप्रतिबिम्बैरिव = मण्डलप्रतिच्छायाभिरिव। निविशमानानाम्=प्रविशताम्, अवगाहमानानाम्= निमज्जताम्, नीलगिरिगण्डशैलायमानानाम् = नीलाचलच्युतस्थूलोरलायमानानाम्। सिन्धुराणाम् = गजानाम्, घटानाम् = मण्डलानाम्, क्षालनैरिव = धावनैरिव। सकलकलङ्कै = सर्वविषापैः, दुर्यशोभिश्च, अङ्कितस्य = लाञ्छितस्य, दिल्लीवल्लभस्य, सम्पर्कैरिव = सान्निध्यैरिव। श्यामश्यामा = अतिकृष्णा। सन्तरणासक्तै = प्लवननिरतैः। विक्षोभ्यमाणा = आकुलीक्रियमाणा। सन्ध्योपासनपरायणैः = सन्ध्यार्चननिरतैः, जलयुद्धासक्तानाम् = वारिक्रीडासक्तानाम्, यवनबालकानाम्,

व्यापार के सामान और नौका विहार करनेवाले नागरिकों से परिपूर्ण हजारों नाव की खेवाई से आलोडित नील जलवाली, असंख्य कछुओं के पीठों के बिम्बन प्रतिबिम्बन से, नीलगिरि से च्युत विशाल प्रस्तर-खण्डों के समान दीखनेवाले और प्रतिदिन सन्ध्या समय में प्रवेश कर निमज्जन करनेवाले गजराजों द्वारा किये गए स्नान के कारण और सकल कलङ्कों से अङ्कित दिल्लीवल्लभ के सम्पर्क से और भी अधिक काली दीखनेवाली; तैरने में लगे यवन युवकों से विक्षुब्ध होनेवाली; यत्र-तत्र सन्ध्योपासन में सक्त होने के

यन्त्र-च्युताम्बु-बिन्दु-स्पर्श-भीतैरपसारमपसारमुपविशद्भिर्ब्राह्मणैः सेव्यमाना, क्वचित्प्रक्षिप्त-मांसाग्र-बडिश-बद्ध-रज्जु-हस्तैर्जलचर-तालु-वेधं प्रतीक्षमाणैर्यवनैर्नान्तिकेष्वमोक्ष्यमाणा, तरङ्गभङ्गैर्हस्तैरिव स्वं वक्षो घ्नती सकज्जलाश्रु-प्रवाहमर्यादेव, स्वभ्रातरं यमं दिल्लीकलङ्क-वृत्तान्तं निर्विवेदयिषन्तीव ततः प्रवहन्ती यमुना। इतस्ततः समस्तं दिनमितस्ततोऽनिवाह्य सायं स्वावासमायातैर्विहङ्ग-कुलैर्व्याप्तान्युद्यानानि।

करसन्तैः, च्युतानाम् = पतितानाम्, अम्बुबिन्दूनाम् = जलपृषताम्, स्पर्शात्, भीतैः = भयत्रस्तैः। ब्राह्मणैः = विप्रैः। सेव्यमाना = आश्रीयमाणा। प्रक्षिप्ते = प्रेरिते, मांसाग्रे, बडिशे = मत्स्यवेधिन्याम्, बद्धा = ग्रन्थिता, रज्जुः = दाम, करे येषां तैः जलचराणाम् = मीनादीनाम्, तालुवेधम् = काकुदच्छेदम्। अन्तिकेषु = समीपेषु। नामोक्ष्यमाणा = न अवलोक्यमाना। तरङ्गभङ्गैः = लहरिच्छेदैः। वक्षः = उरः। घ्नती = ताडयन्ती। सकज्जलाश्रुप्रवाहमर्यादा = साञ्जनाश्रुप्रवाहेन। यमम् = यमराजम्। निर्विवेदयिषन्तीव = निवेदयितुमिच्छन्तीव। यमुना = यमस्वसा। वामतः = सव्येतरभागे। दूरतः = दक्षिणस्यां दिशि। इतस्ततः = यत्र तत्र। अनिवाह्य = समाप्य। स्वावासम् = स्वसदनम्। विहङ्गकुलैः = पक्षिनिवहैः। व्याप्तानि = आवृतानि।

कहीं जलक्रीडा में निरत यवन-बालकों के हाथों से जलबिन्दुओं के सम्पर्क की आशङ्का से इधर-उधर जाकर बैठनेवाले ब्राह्मणों से सेवित होनेवाली, कहीं कहीं मांस से युक्त अग्रभागवाली बंसी के डोरे को हाथों में लेकर मछलियाँ फँसाने की प्रतीक्षा में पर्यमाण यवन बालकों की पंक्ति से आवृत तटवाली यमुना मानो अपने तरङ्गात्मक हाथों से छाती पीटती हुए नील-प्रवाहात्मक कज्जलाश्रु बहाती हुई अपने भाई यमराज से दिल्लीकलङ्क औरङ्ग-जेब के दुराचार को कहने की इच्छा करती सी बह रही थी। और दायीं ओर वे उद्यान शोभित हो रहे थे, जिनमें इधर-उधर घूमकर समस्त दिन को बिताने के बाद सन्ध्या के समय अपने-अपने नीड आदि आराम स्थान में आकर पक्षियाँ कलरव कर रही थीं।

सर्वे शनैः शनैस्तेनैव पथा दक्षिणाभुखं प्रचलिताः। क्रमशोऽयं मार्गो यमुना-प्रवाहाद् दूरत्वं संवृत्तः। बहवो भिक्षुकाश्च महाराष्ट्रराजस्यौदार्यं प्रशंसन्तो ग्रामटिकानां पथा अन्वसरन्।

तावत्कश्चिदभिमुखमागच्छन् भव्यमिमं वीरसंन्यासिनं पश्यन्नपृच्छत्–'को भवान् ?'

एष आह—नारायण ! नारायण ! संन्यासिनो वयम् !

स आह—कुत्र गम्यते ?

एष आह—नारायणस्य करुणया वृन्दावनमुद्दिश्य गम्यते।

स आह—कियद्दूरं दिल्ली ?

एष आह—इयमासन्ना दिल्ली, सपदि गम्यतामन्यथा गोपुराव-

---

यमुनाप्रवाहात् = कालिन्दीपूरात्। ग्रामटिकानाम्=क्षुद्रग्रामाणाम्। पथा = मार्गान्। अन्वसरन् = अनुसृतवन्त। भव्यम् = सुन्दरम्। गोपुरावरोधः = प्रधानद्वारपिधानम्।

---

धीरे-धीरे उसी रास्ते से सब दक्षिण दिशा की ओर चल पड़े। क्रमशः यमुना प्रवाह से उनके रास्ते की दूरी बढ़ती गई। बहुत से भिक्षुक महाराष्ट्र-राज की उदारता की प्रशंसा करते हुए उस मुख्य मार्ग को छोड़कर टोलियों जानेवाले मार्गों पर चले गये।

तब एक कोई सामने से आता हुआ इस भव्य तथा वीर सन्यासी को देखकर पूछा—"आप कौन हैं ?"

संन्यासी ने उत्तर दिया—"नारायण ! नारायण ! हम सन्यासी हैं।"

उसने पुन पूछा—कहाँ जा रहे हैं ?

सन्यासी ने उत्तर दिया—भगवान् की कृपा से हम वृन्दावन की ओर जा रहे हैं।

उसने पूछा—यहाँ से दिल्ली कितनी दूरी पर है ?

संन्यासी ने उत्तर दिया—यहाँ से तो बहुत नजदीक है। आप शीघ्र

रोध स्यान्। गोविन्द ! गोविन्द ! हरे कृष्ण ! विष्णो !

एवमालप्य तस्मिन् नगराभिमुखं त्वरित प्रचलिते, पुनरेते किञ्चिदग्रतो गत्वा द्विमुखं पन्थानमवालुलुकन्।

अथ केन पथा गन्तव्यम् ? कुतो यातव्यम् ? इति विचार-यन्त्रेव माल्यश्रीकोऽग्रवामोद्वामे पथि किञ्चिदेव दूरे विशालमेकं प्लक्ष-वृक्षम्, तदधस्ताच्च पञ्चपान् शाखास्वद्धान् खुराग्रोन्मथित-भूभागा-नश्वान्! 'इत आगम्यताम्, मन्ये त एतेऽश्वा"-इत्युक्त्वा चाखि-लांस्तत एव नीतवान्।

अथ महाराष्ट्रराजोऽपि तान् खलीन-लेहन-लीला-लीनान्

द्विमुखम् = उभयतो गच्छन्तम्।

लक्षवृक्षम् = पर्कटद्रुमम्। शाखासु = द्रुमावयवेषु, बद्धान् = यन्त्रितान्। खुराग्रै = शफप्रान्तैः, उन्मथिता भूभागा यैस्तान्। अखि-लान् = सकलान्। तत एव = तत्रैव।

खलीनस्य = कविकायाः, लेहनलीलायाम् = चर्वणक्रीडायाम्, लीनान् =

जाइए, नहीं तो प्रवेशद्वार बन्द हो जायेगा। गोविन्द! गोविन्द! हरे! कृष्ण! कृष्ण!

उपर्युक्त वार्तालाप करने के पश्चात् जब वह व्यक्ति दिल्ली की ओर शीघ्रता से बढ़ गया तब ये सब पुनः थोड़ा आगे बढ़े और वहाँ एक दोमुहानी दिखाई पड़ी।

तत्पश्चात् "किस रास्ते से हम लोगों को चलना चाहिये ? किधर से चलना चाहिये ?" इस तरह के तर्क-वितर्क में सब संलग्न ही थे कि माल्यश्रीक ने बायीं ओर जानेवाले मार्ग पर कुछ दूर में स्थित एक बहुत विशाल पाकड के वृक्ष के नीचे उसकी शाखाओं में बँधे पाँच-छः घोड़े देखे जो अपने खुर से जमीन को खुरखुरा रहे थे। घोड़े देखते ही माल्यश्रीक "इधर आइये, मैं समझता हूँ कि ये वे अपने ही घोड़े हैं।" यह कह कर सबको उधर ही ले गये।

उसके बाद महाराष्ट्रराज ने भी लगाम चबाने के खेल में लीन, मायवी

अतिमुक्त-कुसुम-स्तबकैरिव फेन-निचयैः परिपूजित-वसुन्धरान् सज्जोपवेशनिकान् उभयतो लम्बित-लौह-पादाधारान् स्वागमन-पादाहति-श्रवणैनैवोर्ध्वकर्णान, श्यामान् रक्तांश्च हयान् आलोक्य पार्श्वस्थमेकं हयनियामकञ्च वीक्ष्य मन्दमगादीत्–"कस्यैते हया ?" स च दक्ष कर्णं सस्पृशन्नुदतीतरत्—दिल्लीनिवासिनः कस्यचिन्म-हाभाग्यस्य।

अथ 'इमे एव, इमे एव, तेऽश्वा'—इति सर्वैरुक्तम्। ततो विशालमेकमाजानेयं महाराष्ट्रराज आरूढः अपरं गौरसिंहः, अन्यञ्च माल्यश्रीकः। त्रयोऽपि च नियामक-हस्तादादाय कशा दण्डान् गृहीत्वा त्वरितं दक्षिणाऽभिमुखं धाविताः।

---

लम्बान्। अतिमुक्तकुसुमस्तबकैरिव=माधवीकुसुमगुच्छैरिव। फेननिचयैः = डिण्डीरव्रातैः। परिपूजितवसुन्धरान्=समर्चितधरणीन्। अश्वा परिश्रमजैः फेनैः पृथिवीमार्द्रयन्ति स्मेति भावः। सज्जोपवेशनिकान्=सन्नद्धाश्वपृष्ठा-सनान्। उपवेशनिका-"काठी" इति हिन्दी। लम्बित =दोलायितः, लौह = आयसः, पादाधार = "रिकाब" इति प्रसिद्धः, येषां तान्। हय

---

के फूलों के स्तबक के समान फनों के समूह से वसुन्धरा की पूजा करनेवाले, पालान से सुसज्जित, दोनों तरफ लटकती हुई लोहे की पाद धारणी (रिकाब) से सम्पन्न, अपने (=महाराष्ट्रराज के) आगमन के समय होनेवाले पादाघात के सुनने से खड़े कानोंवाले काले और लाल घोड़ों को देखा और घोड़ों के पास में खड़े एक साइस को देखकर मन्द स्वर में पूछा—'ये घोड़े किसके हैं ?' साइस ने अपने दायें कान पर हाथ रखकर उत्तर दिया—"दिल्ली निवासी किसी भाग्यवान व्यक्ति के।"

तत्पश्चात् "ये ही हैं, ये घोड़े ये ही हैं' ऐसा सबों ने कहा। तदनन्तर एक विशाल घोड़े पर महाराष्ट्रराज सवार हो गये और दूसरे पर गौरसिंह तथा तीसरे पर माल्यश्रीक। साइसों द्वारा दिये गये चाबुक लेकर तीनों ही व्यक्तियों ने दक्षिण दिशा की ओर अपने घोड़े दौड़ाये।

अथ गव्यूतिं यावन्निर्विघ्नं धावद्भिरकस्मात् पुरतः समागच्छन्तः सप्त सादिनो दृष्टाः। ते च समागतमात्राः 'तिष्ठत' इत्येतेषां गतिं रुरुधुः, अचकथंश्च यत्-कुत आगच्छथ ?—इति।

एतैरुक्तम्-संन्यासिनो वयम्, दिल्लीत आगच्छामः।

तैरुदितम्—वरम्! वयमपि दिल्लीमेव गच्छामः, किन्तु विस्मृतमार्गाः स्मः, तत्परावृत्य दिल्ली-पर्य्यन्तमस्माभिः सह गच्छत।

ततो गौरेणोक्तम्—दयध्वं संन्यासिनाम्, सरलोऽयं मार्गः, सम्मुखमेव दिल्ली, उत्तराऽभिमुखा इव प्रयात, सपदि प्राप्स्यथ राजधानीम्-इति।

---

नियामकम् = अश्वरक्षकम्। उदतीतरत् = उत्तरमदात्। कशादण्डान् = अश्वताडनयष्टीः। धाविताः = जवाचलिताः।

● गव्यूतिम् = क्रोशद्वयम्। सादिनः = अश्वारोहाः। रुरुधुः = वारितवन्तः। उदितम् = कथितम्। विस्मृतमार्गाः=अनवधारितपदवीकाः। दयध्वम्=दया कुरुत। संन्यासिनामित्यत्र "अधीगर्थदयेशां कर्मणि" इति षष्ठी। प्रयात=गच्छत।

---

इस भय से दो कोशों तक निर्विघ्न घोड़े दौड़ाने के बाद एकाएक उन लोगों ने सामने आते हुए सात घुड़सवारों को देखा। आते ही उन घुड़सवारों ने "ठहरो" यह कह उन सबों का रास्ता रोक लिया और पूछा—कहाँ से आप लोग आ रहे हैं। संन्यासियों ने उत्तर दिया—हम लोग दिल्ली से आ रहे हैं। पुनः उन घुड़सवारों ने कहा—अच्छा, हम लोगों को भी दिल्ली ही जाना है, परन्तु रास्ता भूल गए हैं। अतः आप लोग दिल्ली तक हम लोगों के साथ लौट चलें। उसपर गौर सिंह ने कहा—हम संन्यासियों पर कृपा कीजिए। यहाँ से दिल्ली जाने का रास्ता एकदम सीधा है, दिल्ली सामने ही बसी हुई है, आप लोग उत्तर मुख प्रस्थान करें और शीघ्र ही राजधानी दिल्ली पहुँच जायँगे।

अथ तेषां प्रधान इवैकः प्रांशुर्निपुणं निरीक्षमाण उवाच—इयमुदारा वाग्, एषा भव्या मूर्तिः, एते राजयोग्या आजानेयाश्च न पुष्णन्ति युष्माकं साधारण सन्यासि-भिक्षुताम्। तत् स्पष्टं कथ्यताम्, के यूयम्? ततो माल्यश्रीक उवाच—'सत्यम्! कुलमास्माकीनमुत्तमम्, किन्तु गृहीत-सन्यासा वयं सदा पर्यटनकौतुकिनो भाग्यवतां केषाञ्चिदौदार्य्येण लब्ध-सुन्दर-घोटका साम्प्रतं मधुरां यामः।'

ते तु सप्तापि निपुणं निरीक्षमाणास्तूष्णीमतिष्ठन्।

ततस्तेष्वेकेन मन्दमुक्तम्—अहं शास्तिखानेन सह चिरं महाराष्ट्र-युद्धे आसमिति परिचिनोमि शिवम्। तादृश एवास्य

---

प्रधान इव = श्रेष्ठ इव। प्रांशु = उन्नत। पुष्णन्ति = समर्थयन्ते।

उत्तमम् = श्रेष्ठम्। गृहीतसन्यासा = धारितभिक्षुकव्रता। पर्यटनकौतुकिनः = भ्रमणकौतूहला। भाग्यवताम् = सम्पन्नानाम्। लब्धसुन्दरघोटका = प्राप्ताजानेया।

---

उसके बाद उन सात घुड़सवारों के नेता जैसे एक लम्बे से घुड़सवार ने पैनी दृष्टि से देखता हुआ कहा—यह उदार वाणी ये भव्य स्वरूप तथा राजयोग्य ये अच्छे घोड़े आप लोगों के साधारण सन्यासी होने की बात के पोषक नहीं है। अतः सच-सच बतलायें कि आप लोग कौन हैं?

उस पर माल्यश्रीक ने उत्तर दिया—आपका कथन सत्य है। हम लोग उच्चकुल के हैं। किन्तु हम लोग सन्यास-ग्रहण कर लेने के कारण सर्वदा पर्यटन के लिए उत्सुक हैं और किन्हीं महापुरुषों की उदारता से हम लोगों को सुन्दर घोड़े उपलब्ध हो चुके हैं। अब हम लोग मथुरा जा रहे हैं। ५

उस पर वे सातों घुड़सवार पैनी दृष्टि से उन सबकी ओर देखते हुए थोड़ी देर तक तो मौन रहे।

पश्चात् उनमें से एक ने धीरे से कहा—मैं शाइस्ता खाँ के साथ युद्ध में चिरकाल तक रहने के कारण शिवाजी को

स्वर सन्नाहश्च। अपरेणोदितम्—भाषणभङ्गी च स्पृशति महाराष्ट्र-भाषाम्। अन्येन शनैरालपितम्—शान्तं पापम्! स तु दिल्लीनगरे निगृहीतोऽस्ति। अपरेणोट्टङ्कितम्—धूर्ता महाराष्ट्राः, तथा निगृहीतानामप्येषां पलायनं नाऽऽश्चर्यप्रदम्।

अथ महाराष्ट्रराजेन मनस्येव 'महतीयमापदेति' चिन्ता-निमग्नेन कथितम्—सरलोऽयं मार्गः, गम्यताम्। ततस्तेषां प्रधानेन गदितम्—नैवम्, भवतामेकेनापि गन्तव्यं सहास्माभिः।

ततो यावदेते परस्परमालोक्य किमपि विमृशन्ति, तावत्तेषामेकेन सन्दिहानेन शनैः पृष्ठतोऽश्वं सञ्चाल्य महाराजस्य निकटे आगत्य, अकस्माद् भल्लाग्रेण शिरो-वेष्टनमुत्तोलितम्, दृष्टश्च

स्वर. = स्वनः। भाषणमिति यावत्। सन्नाह = शरीरबन्ध।
भाषणभङ्गी = कथनशैली। निगृहीतानाम् = कारागृहे स्थापितानाम्।
आपदा = आपत्ति। भागुरीयमतेनाबन्तता।
विमृशन्ति = विचारयन्ति। सन्दिहानेन = सदेह कुर्वता।
भल्लाग्रेण = कुन्तप्रान्तेन। शिरोवेष्टनम् = उष्णीषम्। उत्तोलितम् =

अच्छी तरह पहचानता हूँ। इनकी भी बोलचाल तथा शरीरसङ्घटना तो वैसी ही लग रही है। दूसरे ने कहा—हाँ, इनके बोलने की शैली भी तो मराठे की तरह ही लग रही है। तीसरे ने मन्द स्वर से कहा—झूठमूठ की बात नहीं करनी चाहिए। शिवाजी तो दिल्ली नगर में कैद कर लिए गए हैं। चौथे ने कहा—मराठे बड़े चालाक होते हैं। कैद कर लिए जाने के बाद भी उनका भग आना आश्चर्य-जनक नहीं है।

उसके पश्चात् "यह तो बड़ी विपत्ति है" यह मन में ही महाराष्ट्रराज ने कहा—रास्ता बहुत सीधा है, आप लोग जायँ। उस पर मुखियाने कहा—नहीं, ऐसा नहीं होगा, आप में से एक व्यक्ति को भी तो हम लोगों के साथ दिल्ली तक चलना ही होगा।

जब तक ये लोग परस्पर देख कर कुछ सोचते हैं तब तक उन सात घुड़सवारों में से एक घुड़ सवार सन्देह के कारण धीरे से

सर्वैर्दृष्टमस्य शिरसि लौहं शिरस्त्रमस्तीति। महाराष्ट्रराजः सचकितमुत्फालितवाहः एकतः स्थितवान्, माल्यश्रीकगौरसिंहाभ्यां च झटिति कशादण्डाग्रं सञ्चाल्य, छुरिकामाकृष्य, परिवर्त्य, पुनस्तथैव संयोज्य भल्ला विहिताः। महाराष्ट्रराजस्तु यावत्तथा करोति तावत्—"सोऽयम्, सोऽयम्, चोरोऽयम्, पलायितकोऽयम्, कश्योऽयम्, मुसल्योऽयम्, घात्योऽयम्, पात्योऽयम्"—इति सकोलाहलं ते—"छिन्धि-छिन्धि, भिन्धि-भिन्धि" इत्यपतन्।

योऽयं महाराष्ट्रराजं प्रथमं परिचिकाय, सोऽकस्मात् क्रूरं

---

उत्क्षिपन्। लौहम्=आयसम्। शिरस्त्रम्=शीर्षत्राणम्। उत्फालितवाहः=उत्प्लावितास्वः। एकतः = एकस्यां दिशि। सञ्चाल्य = सभ्राम्य। पलायितकः = अपसृतः। कश्यः = कशाभिस्ताडनीयः। मुसल्यः = मुसलेन हन्तुं योग्यः। घात्यः = मारयितव्यः। पात्यः = पातनीयः।

परिचिकाय = परिचितवान्। क्रूरम् = कठोरम्। उदतूतुलत्=उद-

---

अपने घोड़े को पीछे से उचका कर महाराष्ट्रराज के पास आ गया और झटके से अपने बल्लम के अग्र भाग से उसने उनकी पगड़ी को ऊपर उठा दिया। सबों ने देखा कि उनके मस्तक पर तो लोहे की टोपी लगी हुई थी। महाराष्ट्रराज तो आश्चर्य से अपना घोड़ा कुदा कर एक ओर हट गये, और माल्यश्रीक तथा गौर सिंह ने झट से चाबुक के अग्र भाग को हिला डुला कर छूरे निकाल लिये और छूरों को उलट कर चाबुक के आगे लगा कर बल्लम तैयार कर लिये। महाराष्ट्रराज भी वैसा करना ही चाहते थे कि कुछ सवार 'यही है, यही है, यही चोर है, यह भागने वाला है, चाबुक से इसकी मरम्मत होनी चाहिये मुसल से इसे मारना चाहिये, यह तो मार देने योग्य है, समाप्त करने लायक है" इस प्रकार कोलाहल करते हुये 'काटो काटो, मारो, मारो' कह कर टूट पड़े।

जिसने सर्वप्रथम शिवाजी को पहचाना था उसने शिवाजी के माथे पर

खड्गमस्योपर्य्युदस्तुलत, अन्ये चान्यौ व्यमावकार्षुः। महाराजस्तु सज्जभल्लो नासीदिति किङ्कर्त्तव्यविमूढोऽभूत्, अपश्यच्च हृदये प्रबलबाणेनाऽऽहतोऽसौ प्रहर्त्ता सचीत्कारं हयपृष्ठाद् भूमौ पतितः–इति।

अथ द्वितीयोऽपि सक्ष्वेडं खड्गं कोशादाकृष्य तस्मिन्नापतिवस्तथैव बाणविद्धो भूमौ पतितः। तृतीयोऽप्युत्पतित एवमेव भूमौ समशयिष्ट। तावन्महाराजोऽपि मल्लतल्लजं करपल्लवेन दृढं गृहीत्वा सिंह इव बस्तानेतानाचक्राम। ते चत्वारोऽपि त्रिभिरेतैराक्रान्ताः कौशल-युद्धेनैषां चकिता बभूवुः। तेषामेकः शिवेनाऽऽहत, द्वितीन

क्षिपत्। व्यमौ = उद्विग्नौ। अकार्षु = चक्रु, सज्जभल्लः = सज्जकुन्तः। किङ्कर्त्तव्ये = किं विधेयमिति विचारणे निमूढः = विन्निः। प्रबलेन = दुर्धर्षेण, बाणेन = शरेण। प्रहर्त्ता = मारयिता। सचीत्कारम् = सशब्द-क्रन्दनम्।

सक्ष्वेडम् = सगर्जनम्। तस्मिन् = शिवे। समशयिष्ट = अस्वाप्सीत्। मल्लतल्लजम् = प्रशस्त कुन्तम्। करपल्लवेन = करकिसलयेन। अत्रपल्लवशब्दोऽनुप्रासार्थमेव। सिंह इव = पञ्चास्य इवेत्युपमा। बस्तान् = अजान्, बर्बरान्। कौशलयुद्धेन = निपुणसंग्रामेण। चकिताः = भीता।

अपना क्रूर खड्ग फेंका और अन्य घुड़सवारों ने माल्यभीक तथा गौरसिंह पर आक्रमण कर उन्हें व्यग्र कर दिया। किन्तु महाराज शिवाजी, अपने वल्लम के तैयार न रहने के कारण, किङ्कर्त्तव्यविमूढ हो गये। इतने में ही उन्होंने देखा कि उनके ऊपर आक्रमण करने वाला वह दुष्ट किसी के प्रबल बाण से आहत होकर चीत्कारपूर्वक घोड़े पर से नीचे गिर गया।

तदनन्तर म्यान से तलवार निकाल कर गर्जन के साथ उन पर आक्रमण करने वाला दूसरा दुष्ट भी उसी प्रकार बाणाहत होकर जमीन पर गिर गया। तीसरा आक्रमण करने को उद्यत ही था कि वह भी धराशायी हो गया। तब तक महाराज ने भी अपने वल्लम को तैयार कर उन बकरों पर सिंह के समान आक्रमण कर दिया। इन तीन वीरों द्वारा आक्रान्त

योऽपि, तृतीयश्च गौरेण मल्लेनाऽऽहतः, चतुर्थश्च माल्यश्रीकेणाऽऽहतवाहः सहयं तेनापथेनैव नीयमानो गर्त्ते पातितः। एवमाषाढ-घन-घटामिव क्षणेनापसृतामालोक्य सर्वेऽप्यक्षतविग्रहा सपदि सैन्धवेभ्य उत्तीर्य्य, गतप्राणानामेषां केषाञ्चन खड्गान् चन्द्रहासान् गृहीत्वा, यावत्पुनरश्वानारुह्य जिगमिषन्ति, तावन्महाराष्ट्रराजेनोक्तम्—'स्थीयताम्, न भयम्। दृश्यतां कोऽस्मत्प्राण-रक्षक, यो बाणैः प्रत्यर्थिनः प्राहरत्। नाहं कथमप्यानृण्यमुपयास्यामि यो मत्कण्ठे खड्गमप्येवं प्राहरत्; स शिताग्रेण शरेण

---

आहतवाहः = मारिताश्वः। सहयम् = सघोटकम्। अपथेन = अमार्गेण। गर्त्ते = श्वभ्रे। आषाढघनघटामिव = वर्षारम्भमेघमालामिव। अपसृताम् = दूरीभूताम्। अक्षतविग्रहाः = अनाहतदेहाः। गतप्राणानाम् = गतासूनाम्। जिगमिषन्ति = गन्तुमिच्छन्ति। दृश्यताम् = ज्ञायताम्। अस्मत्प्राणरक्षक = अस्मज्जीवनदाता। प्रत्यर्थिनः = शत्रून्। एवम् = अमुना प्रकारेण। प्राहरत् = प्राताडयत्। शिताग्रेण = तीक्ष्णप्रान्तेन।

---

अवशिष्ट चार दुष्ट भी इनकी युद्ध-कुशलता से चकित हो गये। उन चार में से दो को तो शिवाजी ने मार गिराया, तीसरे को गौरसिंह ने अपने भल्लम से समाप्त कर दिया और चौथे के घोड़े पर माल्यश्रीक ने इस प्रकार प्रहार किया कि कुमार्गगामी के समान वह भी घोड़े के साथ गड्ढे में जा गिरा। इस प्रकार वर्षाऋतु के प्रारम्भ में घिरी हुई घन-घटा के समान आई हुई विपत्ति को क्षण भर में ही विनष्ट हुई देखकर अक्षतशरीर सम्पद से तीनों ही वीर अपने अपने घोड़े से उतर गये और मरे हुए उन दुष्टों के खड्ग लेकर घोड़े पर सवार होकर प्रस्थान करना ही चाहते थे कि महाराष्ट्रराज ने कहा—"ठहरो, डरो नहीं, पहले यह तो देखो कि हम लोगों का यह कौन प्राण-रक्षक है जिसने अपने तीखे बाणों से इन शत्रुओं को मार गिराया है! उस व्यक्ति के ऋण से मैं कभी मुक्त नहीं हो पाऊँगा जिसके

यथा झञ्झावात पात-घाताहतः शुष्कच्छद इव परतः पपात।"

ततः सर्वेऽपि पृष्ठतो विचिन्वन्तस्तमेवाश्व-नियामकमल्पीयांसमेक-मश्वमारूढमिष्वासपाणिं कटि-बद्ध-तूणीरमायान्तमपश्यन्।

अथ तमवलोक्य विहित-बहुल-साधुवादे समासादितप्रसादे महाराष्ट्रराजे, सोऽपि वाहादुत्तीर्णः। ततः समीपमागतं तं कलित हय-नियामक-वेषोऽसौ राघवाचार्य्यगोस्वामी—इतिपरिचिच्ये महाराजः।

अहो! दया स्वामिनः! इति सगद्गदस्वरं साष्टाङ्गं प्रणन्तुकामं महाराजमालोक्य, अञ्जलिं बद्ध्वा स उवाच-महाराज महाराज!

---

झञ्झावात-पात-घाताहतः=झञ्झिकवायुपतनताडितः। शुष्कच्छद इव=नीरसपत्रमिव।

विचिन्वन्तः=अन्विष्यन्तः। अल्पीयांसम्=अतिलघुम्। इष्वा-सपाणिम्=धनुर्हस्तम्। कटिबद्धतूणीरम्=मध्यलग्नितेषुधिम्। आया-न्तम्=आगच्छन्तम्।

विहित-बहुल-साधुवादे=कथितानेकधन्यवादे। समासादितप्रसादे=लब्धप्रसन्नताके। परिचिच्ये=परिचितवान्।

प्रणन्तुकामम्=नमस्कर्तुमिच्छन्तम्। अञ्जलिम्=करसम्पुटम्।

---

वाणाघात से मेरे गले पर तलवार चलाने वाला यह दुष्ट आन्धी के आघात से सूखे पत्ते की तरह दूसरे तरफ गिर गया है।"

उसके बाद जब सबों ने पीछे की ओर दृष्टि डाली तो देखा कि एक साधारण घोड़े पर चढ़कर कोई साइस जैसा व्यक्ति कमर में तरकस बाँधे हुए और हाथ में धनुष लिये उधर ही आ रहा था।

उसे देखकर महाराष्ट्रराज द्वारा शतशः धन्यवाद देने तथा स्वयम् प्रमुदित हो जाने के बाद वह व्यक्ति भी घोड़े से उतर गया। तत्पश्चात् जब वह व्यक्ति शिवाजी के समीप आया तब महाराज ने पहचान लिया कि वे तो साइस के कल्पित वेष में राघवाचार्य स्वामी ही थे।

"अहा! स्वामीजी की बड़ी दया है।" ऐसा कहकर साष्टाङ्ग प्रणाम

दासोऽयं श्रैमत्कः। अस्य गोस्वामिता इव-नियामकता च व्याज-मात्रम्, जनोऽयं तोप-रोष-भाजनं महाराजस्य। तदाकर्ण्य चकितः क्षणं तूष्णीको महाराजोऽवादीत्-किमिव मोहयसि ? स्पष्टं कथय, कस्त्वमस्माकमसाधारणो बन्धुः ?

स तु जानुभ्यामवनीं गत्वा, अञ्जलिं बद्ध्वा, शिरो नमयित्वा, सप्रश्रयमगादीत्—

देव ! दासोऽयं श्रीमच्चरणैर्लालितोऽपि पालितोऽपि वासितोऽपि निर्वासितोऽपि रघुवीरसिंहः !

तदाकर्ण्य चकितो महाराजः, रघुवीर-प्राप्तेः स्वप्नमिव, इन्द्र-जालमिव, गन्धर्वपुरमिव च पश्यन्; विस्मृतात्मा, कण्टकित,

---

श्रैमत्कः = भावत्कः। तोपस्य = प्रसन्नतायाः। रोपस्य = क्रोधस्य च। भाजनम् = पात्रम्। असाधारणः = अनन्यादृशः। बन्धुः = मित्रम्।
वासितः = दत्तस्थानः। निर्वासितः = परदेशे निष्कासितः।
गन्धर्वपुरमिव = मायानगरमिव। कालनिरस्तात्। कण्टकित =

---

करने के लिये उत्सुक महाराष्ट्रराज को देखकर रघुवार्यजी ने हाथ जोड़कर कहा—"महाराज! महाराज! यह आपका सेवक है। इसका सन्यासी का रूप धारण करना तथा धारस बन जाना कार्य-मात्र है। यह व्यक्ति श्रीमान् के सन्तोष तथा कोप का भागी है"। यह सुनकर आश्चर्यान्वित होने के कारण क्षणभर मौनावलम्बन के बाद महाराज ने पूछा—"मुझे व्यामोह में क्यों डाल रहे हो, ठीक-ठीक बतलाओ कि हम लोगों के असाधारण बन्धु तुम कौन हो"। तदनन्तर वह घुटने टेककर, हाथ जोड़कर और नतमस्तक होकर कहने लगा—"देव! यह आपका सेवक वही रघुवीरसिंह है जिसका श्रीमान् से लालन, पालन, वासन और निर्वासन भी हुआ है"।

यह सुनकर महाराज चकित हो गये और रघुवीर के मिलन को स्वप्न की तरह, इन्द्रजाल की तरह तथा गन्धर्वनगर की तरह समझते हुए अपनी भी सुध भूल गये, उनके शरीर में रोमाञ्च, पसीना तथा कम्पन आ गये,

खिन्नः, वेगिरश्च तमुत्थाप्य, गाढमालिङ्ग्य, स्मारं स्मारं स्वकृत्यं तत्कृत्यञ्च मुग्धमाणवक इव मुक्तकण्ठं रुरोद।

चिरात्तस्मिन्नुपशान्ते गौरोऽपि भगिनीजीवजीवनं बाष्पस्नातं रघुवीरं तथैवाऽऽलिलिङ्ग, अश्रूणि च मुमोच। परतः प्रेमबाष्पपूर-पूरितो माल्यश्रीकोऽप्याशिश्लेष। ततो महाराज उवाच—

रघुवीर! क्षमस्व, यद्विनाऽपराधमुपकार्य्यपि मयाऽनादृतोऽसि; त्वत्पिता जटिलवेषो वीरेन्द्रसिंहः, त्वां विना कण्ठेन प्राणान् धारयति, तव पुरोहितो गणेशशास्त्री अस्थिचर्मावशेषः। श्रूयते त्वां प्राणनाथं मन्यमाना सौवर्णी आशामात्रेण जीवति, आगच्छ,

पुलकितः। आलिङ्ग्य = आश्लिष्य। मुग्धमाणवक इव = मूढबाल इव। तस्मिन्=रोदने। भगिनीजीवजीवनम् = सहोदरीप्राणरक्षकम्। आशिश्लेष=आलिङ्गितवान्।

अनादृतः = तिरस्कृतः। कण्ठेन=गलेन। न सर्वेण शरीरेण। गतप्राणाना हि प्राणाः कियन्ति दिनानि प्रायः कण्ठे तिष्ठन्ति इति तथा

रघुवीरसिंह को उठाकर उन्होंने गले लगाकर लगा लिया और अपने अविचारित निर्वासन कार्य तथा रघुवीर की स्वामिभक्ति की याद कर छोटे बच्चे की तरह फूट-फूटकर रोने लग गये।

चिरकाल के बाद महाराज के क्रन्दन के समाप्त हो जाने पर गौरसिंह ने अपनी बहन के प्राणाधार आँसुओं से स्नान किये हुए रघुवीरसिंह को गले लगाकर आँसू बहाये। पश्चात् प्रेमाश्रुपूर्ण नेत्रवाले माल्यश्रीक ने भी उसी प्रकार रघुवीरसिंह का गाढालिङ्गन किया। तदनन्तर महाराज ने कहा—

"रघुवीर! उपकारी तथा निरपराध होने पर भी तुम्हारा जो मैंने अनादर किया था उसके लिये क्षमा करो, तुम्हारे पिता वीरेन्द्रसिंह भी तुम्हारे वियोग में संन्यासी के वेश में किसी प्रकार जी रहे हैं ( मरणासन्न हैं ) और तुम्हारे कुलपुरोहित गणेशशास्त्री का शरीर भी केवल अस्थिचर्मावशेष है। सुना जाता है कि तुम्हें अपना प्राणनाथ माननेवाली सौवर्णी भी केवल

सपदि महाराष्ट्र देशं गत्वा सर्वानुज्जीवय !

इति कथयित्वा महाराष्ट्र-पतिर्निजमश्वमारुढः, माल्यश्रीरो गौरश्च निजाश्वमारूढौ, भूमौ पतितानामेवैषामेकं प्रांशुमश्वं रघुवीरोऽप्यारूढः। यावदेते दक्षिणाभिमुखाः पुनः पथः कश्चिदंशमतिवाहयन्ति, तावदकस्मादेव प्रतीचीतः कदम्ब कदम्ब सवलितेन पथा खटखटा शब्दं समागच्छतो दिल्लीश सङ्केताङ्कित पट्टिका कलित-कटिबन्धान् श्याम-वसनान् रक्तशिरोवेष्टनान् भुशुण्डी मण्डित बाहु-दण्डान् शतमिवाश्वारोहानपश्यन्।

कथनेन गतासुप्रायता त्वया। उज्जीवय=उत्थापय।

प्रतीचीत=पश्चिमतः। कदम्बानाम्=नीपानाम्, कदम्बेन=समूहेन, सवलितेन=वलयितेन। युक्तेनेत्यर्थः। दिल्लीशसङ्केतेन=अवरङ्गजीवनाम्ना अङ्किताभि=चिह्निताभिः, पट्टिकाभिः, कलिता=युता, कटिबन्धा, येषां तान्।

---

तुम्हारे मिलन की आशा से ही किसी प्रकार जी रही है। अतः अब चलो, शीघ्र ही महाराष्ट्र देश पहुँचकर सभी को उज्जीवित करो"।

यह कह महाराष्ट्रराज अपने घोड़े पर चढ़ गये और गौरसिंह एवम् माल्यश्रीक अपने अपने घोड़े पर सवार हो गये और जमीन पर गिरे उन खल दुष्टों में से ही किसी एक के ऊँचे घोड़े पर रघुवीरसिंह भी आरूढ हो गये। घोड़े पर चढ़ कर दक्षिण दिशा की ओर वहाँ से कुछ ही आगे बढ़ पाए थे कि उन सबने देखा कि पश्चिम दिशा से कदम्ब के वृक्षों के समूह से परिपूर्ण मार्ग से खड़-खड़ाते हुये, दिल्ली सम्राट् के सङ्केत से युक्त पट्टिका से कसे कमर वाले, नीले वस्त्र पहने हुए, लाल पगड़ी वाले सैकड़ों बन्दूक धारी घोड़े पर आ रहे थे।

ते च 'सोऽयं सोऽयमिति' सपदि सपरिकरं शिवं पर्य्यवेष्टयन्। किमिति ? किमिति ?—इति पृष्टाश्च सकर्ण-स्पर्शं मन्दं किमपि प्रोचुः। अथ सर्वेऽपि हृष्टा मथुराऽभिमुखमन्धकारमये पथि विलीनाः।

इत्येकादशो निश्वासः

---

इमे सर्वे कलितयवनवेषा महाराष्ट्रवीरा इति राघवोक्तौ गुप्तसेनावर्णनादिभ्यः सुरेश्वरोक्तेश्च स्पष्टीकृतपूर्वमिति शम्।

इति श्रीशिवराजविजयवैजयन्त्यामेकादशनिश्वासविवरणम्।

---

"वही है, वही है" यह कहते हुये उन बन्दूक धारियों ने झट से आकर सानुचर शिवा जी को घेर लिया। जब उन सबों से पूछा गया कि क्या बात है, तब आपने अपने कान छूकर मन्द स्वर से उन सबों ने कुछ कहा। तत्पश्चात् सभी प्रसन्नता पूर्वक मथुरा की ओर जाने वाले अन्धकारमय मार्ग में विलीन हो गए।

शिवराजविजय के हिन्दी का एकादश निश्वास समाप्त हुआ।

॥ श्रीः ॥

# द्वादशो निश्वासः

"तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः ।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथ-मन्मथः ॥"

—भागवते ।

---

द्वादशे शिवराजस्य दिल्लीयात्राकालमारभ्यैव समुत्सुकाना तदर्थं महान्तं यत्नमनुष्ठानादिकञ्चानुतिष्ठता महाराष्ट्राणा पुरत पुनरागमन शिवस्येत्येका कथा, रघुवीरसमागमनमिति द्वितीया, अनयोरेव प्रधानभूतयोः परिपूर्त्यर्थं ग्रन्थसमाप्तौ सम्मङ्गलायमानमानसत्वञ्च प्रचारयितु श्रोतृप्रभृतिषु सौवर्णी परिएर्यादिलक्षणा अपि कथाभागाः प्रदर्शयितव्या । तदेतस्य कथाव्रातस्य समुपक्षेपक भागवतीय रासपञ्चाध्यायी-गृहीत पद्यमुपस्थापयति । वंशीनिनादेन समाहूय व्रजबालाः कालिन्दीतटे रममाणास्तासा साभिमानत्वं निरीक्ष्य अन्तर्हितो भगवान् श्रीकृष्णः । पश्चात्ताभि कृतगोपीगीतादिरूपाक्रन्दाभिश्चिराभिलपितभिरप्रार्थितश्च प्रकटीभूतः । तदेतत्कामविजयप्रदर्शनं रासपञ्चाध्याय्या कृत वेदविदा व्यासेन । तदुपपादकश्चाय श्लोकः ।

शूरस्य = शूरसेनस्यापत्य पुमान् शौरि । तासाम् = चिरहरिविरहखिन्नचेतस्कानाम्, गोपीनाम् । सम्बन्धमात्रविवक्षया षष्ठी । आविरभूत् = प्रकटीभूतः । शौरि विशिनष्टि स्मयमानम् = ईषद्धास्यमयम्, मुखाम्बुजम् = आननपद्म यस्य सः । भगवतः स्मयश्च मायेति न विस्मर्तव्यम् । तथा च—

---

"उन विरहिणी गोपियों के समक्ष विकसित मुखकमल, पीताम्बर तथा वनमाला से विभूषित एवम् कामदेव के भी कामदेव भगवान् कृष्ण प्रकट हो गए।"

—श्रीमद्भागवत ।

"यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिः ध्रुवा नीतिर्मतिर्मम ॥"

श्रीमद्भगवद्गीतायाम् ।

---

"हासो जनोन्मादकरी च माया, दुरन्तसर्गो यदपाङ्गमोक्षः" इति तत्रैव। **पीताम्बरधरः** = पीतकौशेयवासाः। **स्रग्वी** = मालाधारः। **साक्षात्** = प्रत्यक्षीभूतः। **मन्मथस्य** = कामस्य, **मन्मथः** = मथनः। पदैरेभिः स्पष्टतां नीतो रासाभिधेयभाव इति नाविदितं पण्डितेषु। रासपञ्चाध्याया विकृततमर्थं विकृतमनीषया समुपस्थाप्य कृष्णचरित्रे कलङ्कव्रातमालोकयत। प्रतारणायापि व्यासेनाय श्लोक उपरचितः, उपनिबद्धश्चाय स्वग्रन्थे व्यासेनेति बहुतरं विवित्सुभिः पुराणमतदीपिका निभालयितव्या।

उपक्रमे विष्णोर्माया भगवतीत्यभिधाय सकलजगन्मोहयित्र्यास्तस्याः प्राबल्यं दर्शितम्, उपसंहारे तस्या विजयकरणोपायं भगवदेकतानत्वं प्रदिदर्शयिषुः, शिववीरस्य दिल्लीकलङ्ककरतलगतस्य ततो निःसृत्य पुनरपि स्वराज्यपरिप्राप्तेः कारणञ्च भगवच्छरणीकरणमेवेति विवेदयिषुः, "श्रीकृष्णः शरणं मम" इति महामन्त्रमुपदिदिक्षु, गीताश्लोकमुपक्षिपति यत्र योगेश्वर इति।

योगानां योगिनाञ्चेश्वरः। महामायापतिरिति यावत्। इदमपि पदं भगवच्चरित्रशुद्धतायाः प्रबलं प्रमाणमिति वेदितव्यम्। **धनुर्धरः** = सर्वश्रेष्ठधनुर्धारी। पृथाया अपत्यं पुमान् पार्थः। **तत्र** = तत्रैव। **श्रीः** = शोभा, लक्ष्मीः। **विजयः** = उत्कर्षः। **भूतिः** = सम्पत्तिः। **नीतिः** = नयः। **ध्रुवा** = अवश्यम्भाविनी। इति मम मतिः = सम्मतिः, मनीषा च। इति धृतराष्ट्रं प्रति गीतावसाने सञ्जयनिष्कर्षकथनम्।

---

"जिस पक्ष में योगेश्वर भगवान् श्रीकृष्ण तथा धनुर्धर अर्जुन हैं उसी पक्ष में श्री, विजय, भूति तथा नीति का होना निश्चित है—ऐसी मेरी बुद्धि है।"

—श्रीमद्भगवद्गीता।

जातोऽयमरुणोदयः, कलविङ्कैरारब्धः कलरवः, तनूभूतं तमः, धीरः समीरः, इरंमदो मदयति मयूरान्, मतङ्ग-मोहनं गन्धमुद्गिरति नव-वारिद-वारि-सरसिता रसा, बलाहका मन्दं गर्जन्ति। समयेऽस्मिन् तोरणदुर्ग-समीपस्थ-सरोवर-प्रान्ते शिवमन्दिरे चारुहासिनी सौवर्ण्याऽऽलपति स्म—

चारुहासिनी—भद्रे! दिष्ट्या वर्द्धसे, फलितं तव मनोरथैः, गुप्तवेषो रघुवीरसिंहस्त्वमथवो दिल्लीं गतस्य महाराजस्य रक्षाम-करणेन-इति सन्तुष्टेन महाराजेन सादरमानीयते। अद्येव सर्वे

---

अरुणोदयवर्णनपूर्वकं ग्रन्थारम्भ इत्युपक्रमोपसंहारयोरैक्यं दिदर्शयिषुरुणोदयवर्णनं प्रारभते—जातोऽयमिति। कलविङ्कैः = चटकैः। कलरवः = मधुरालापः। तनूभूतम् = क्षीणतां गतम्। इरंमदः = मेघज्योतिः। मूल-पर्याययोर्वैपरीत्येनोक्तममरः। मदयति = हर्षयति। मतङ्गमोहनम् = करिवशीकरणम्। उद्गिरति = उद्वमति। नववारिदवारिभिः = नूतनजलधरजलैः, सरसिता = सरसतामापादिता। रसा = विश्वम्भरा। बलाहकाः = मेघाः। तोरणदुर्गसमीपस्थस्य, सरोवरस्य = जलाशयस्य, प्रान्ते=तटे। सौवर्ण्या, सहार्थकत्वभावनात्तृतीया।

दिष्ट्या=भागधेयेन। फलितम् = पूर्णताङ्गतम्। ह्यः = पूर्वदिने।

---

अरुणोदय हो चुका था, कलविङ्कों ने अपना कलरव प्रारम्भ कर दिया था, अन्धकार क्षीण हो चुका था, धीर समीर बह रहा था, बिजली की कौंध मयूरों को प्रमुदित कर रही थी, नूतन जलधर से निपतित वृष्टिजल से सरस वसुधा गजराजों को मुग्ध करने वाली गन्ध उगल रही थी। उसी समय तोरण दुर्ग के समीपस्थ सरोवर के तट पर शिवमन्दिर में चारुहासिनी सौवर्णी के साथ वार्तालाप कर रही थी :—

चारुहासिनी—भद्रे! तुम्हारा भाग्योदय हो चुका है, तुम्हारे मनोरथ पूरे हो चुके, दिल्ली गये हुये सम्मान्य महाराष्ट्रराज की गुप्तवेष में रक्षा करने के कारण महाराज सन्तुष्ट हो कर रघुवीर सिंह को सादर यहाँ लिवा

दिष्ट्या वर्द्धसे !

सौवर्णी—किं कथयसि ? अपि सत्यमिदम् ?

चारुहासिनी—[ सहर्षम् ] भगिनि ! कथमसत्यं वच्मि ? तत् पश्य तोरणदुर्गेषु सतोरणा ध्वजा आरोप्यन्ते। अधुनैव दुर्गाध्यक्षो मन्दिरमागत्य मारुतिमूर्तिं प्रणम्य वृत्तान्तमिमं सर्वान् संश्राव्य गतः

सौवर्णी महादेवं परिक्रम्य, प्रणम्य, पुलकावरुद्धकण्ठा गाढं चारुहासिनीमालिलिङ्ग। ततश्चिरं चारुहासिनी सौवर्णी चोपविश्य व्यतीत-दुर्घटनानां स्मारं स्मारं रोदं रोदं मङ्गल-वृत्तान्तं चामुमवधारमवधारं मोदं मोदं बहुभिः समालापैर्घटिकार्द्धं यापितवत्यौ।

---

सतोरणा =सबहिर्द्वारा। "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः।

पुलकावरुद्धकण्ठा = रोमाञ्चविस्खलद्गला। दुर्घटनानामित्यत्र "अधीगर्थे" त्यादिना षष्ठी। अवधारमवधारम् = निश्चित्य निश्चित्य। आभीक्ष्ण्ये णमुल्।

---

दुर्दिनस्वरूप दुःख में चिरकाल से अब तक निमग्न अपने नेत्रों को आज प्रसन्नतारूप अमृत की वर्षा में स्नान कराओ ! तुम्हारे सौभाग्य का उदय हो चुका !

सौवर्णी—क्या कह रही हो ? क्या यह बात सत्य है ?

चारुहासिनी—[ हर्ष के साथ ] प्यारी बहन ! झूठ क्यों कहूँ ? देखो—तोरणदुर्ग के ऊपर भी महराब के साथ साथ उत्सवध्वजों का आरोपण किया जा रहा है। अभी अभी दुर्गाध्यक्ष मन्दिर आये थे और यहाँ हनुमान् जी को प्रणाम करने के पश्चात् सारा वृत्तान्त कह गये हैं।

सौवर्णी—तदनन्तर भगवान् शङ्कर का प्रदक्षिण कर, उन्हें प्रणाम कर रोमाञ्च के कारण अवरुद्ध कण्ठ वाली उस सौवर्णी ने चारुहासिनी का गाढालिङ्गन किया। तत्पश्चात् चारुहासिनी और सौवर्णी वहीं बैठ गई और बीती हुई घटनाओं का बारम्बार स्मरण कर, रो रो कर ( रघुवीर सिंह के परावर्त्तन की ) मङ्गलमय घटना का निश्चय कर आनन्द लूटती हुई विभिन्न प्रकार के वार्त्तालाप से उन दोनों ने अपना आधा घण्टा बिताया।

चारु०—भद्रे ! समूलतपस्या संवृत्ताऽसि, तत् त्यज सांप्रतं तपस्विनी-वेषम् ।

सौवर्णी—भगिनि ! मैवम्, पत्युः कुशलेनाऽऽत्मप्रकटनवृत्तान्तमवाप्याऽऽलपिष्यामि, तं दृष्ट्वा च तपस्विनीवेषं त्यक्ष्यामीति सुदृढे मम प्रतिज्ञे । तत्रैका पूर्णा, परस्यामपि गङ्गाधरस्यानुग्रहेण पूर्णायामूरीकरिष्यामि ते वचनम् ।

तत—"अहो ! कुसुमानि चेयानि, मुहूर्त्तेन पुनस्त्वा द्रक्ष्यामि"—इत्युक्त्वा तामालिङ्गय वाटिकां प्रविष्टायां तस्याम्, परमानन्द-सन्दोह-मद-मन्थरा सौवर्णी पौनःपुन्येन महादेवमूर्तिं परिक्रम्य, विल्वपत्रैः सम्पूज्य, बं बं बं, हर हर हर, इति व्याहृत्य, आन-

समूला तपस्या यस्याः सा । परिपूर्णतपश्चरणेति यावत् । तपस्विनी-वेषम् = योगिनीनेपथ्यम् ।

सुदृढे = निश्चितप्राये । गङ्गाधरस्य = भूतेशस्य ।

चेयानि = सकलनीयानि ।

परमानन्दसन्दोहस्य=प्रगाढहर्षसमूहस्य, मदेन, मन्थरा=सालस्या । परिक्रम्य=प्रदक्षिणीकृत्य । व्याहृत्य=निगद्य । आनन्दाश्रुकलाभि =हर्षास्क-

चारु०—भद्रे ! तुम्हारी तपस्या सफल हो चुकी । अतः अब तपस्विनी का वेश छोड़ दो ।

सौवर्णी—बहन ! अभी ऐसा करने के लिये मत कहो । कुशलपूर्वक अपने पतिदेव के प्रकट होने का शुभ सवाद सुनकर ही मैं बातें भी करूँगी और उनके दर्शन के बाद ही अपने तपस्विनी वेष को भी छोड़ूँगी—ये दो प्रतिज्ञाएँ मैंने की थीं । इन में एक प्रतिज्ञा तो पूरी हो चुकी और जब भगवान् शङ्कर की कृपा से मेरी दूसरी प्रतिज्ञा भी पूरी हो जाएगी तब तुम्हारी भी बात मैं मान लूँगी ।

उसके बाद "अच्छा, मुझे फूल भी चुनने हैं; अतः थोड़े समय के बाद मैं पुनः तुमसे मिलूँगी" यह कह कर उसका आलिङ्गन कर जब चारुहासिनी पुष्पवाटिका में प्रविष्ट हो गई तब बारम्बार महादेव की मूर्त्ति का परिक्रमण

न्दाश्रु-कलाऽऽकुलित-कपोला चिरमस्तोष्ट। ततो महादेवं ध्यायन्ती, निमीलित-चक्षुरेव मनोरथमये जगति समपश्यत्—यन्महादेवः स्वयं प्रकटीभूय, "मा स्म भैः" इत्यसकृदाभाष्य, वाटिका कुट-जाला-न्तर्निविश्य भस्मोद्धूलितेन वलित-व्यालबाल-वलयेन करेण रघु-वीर-बाहु मूले गृहीत्वा समानाय्य "एष ते पतिर्गृह्यताम्" इति कथ-यित्वा, तत्परिपूजित-मूर्त्तावेव निलीनः। स्वयं च बद्ध-सौवर्णोष्णी-षम्, महार्ह-कञ्चुकम्, लोलचन्द्रहासम्, पुलकाश्रु-परिपूर्ण-लोल-लोचनम्, दृशा लिहन्तमिव, आलिङ्गन्तमिव, परिपिबन्तमिव च

णिकाभिः, आकुलितकपोला=विच्छुरितगण्डस्थला। अस्तोष्ट=स्तुतिमकार्षीत्। **निमीलितचक्षुरेव** = अनुन्मिषितनयनैव। **मनोरथमये** = कल्पनिके। **मास्म भैः** = भयं मा कार्षीः। "स्मोत्तरे लङ् च"। यत्तु 'मा भैरिति' पाठं स्वीकृत्य पण्डितानामाह्वानं विचारकरणार्थम्; तत्तु बुद्धिवैशद्यवैभवविलसितमिति सन्तोष्टव्यम्। **वाटिकाकुटजालान्तः** = उद्यानानोकहसमूहान्तराले। **भस्मोद्धूलितेन** = भूतिच्छुरितेन। **वलितः**=वेष्टितः, व्यालबाल इव वलयो यस्मिन् तेन। पूर्वनिपातप्रकरणानित्यताप्रदर्शनार्थमेव पाठः। षष्ठीतत्पुरुषो वा। बालव्याल इति मीतद्युदयः।

**परिपूजितमूर्त्तौ** = सेवितप्रतिमायाम्। **बद्धसौवर्णोष्णीषम्** = धारित-महारजतशिरोवेष्टनम्। **महार्हकञ्चुकम्**=महामूल्यवारबाणम्। **लोलचन्द्रहा-सम्** = चलदसिम्। पुलकाश्रुभिः परिपूर्णे लोले लोचने यस्य तम्। लिहन्त-

कर, बिल्वपत्र से अपनी पूजा कर 'बम् बम् बम्,' 'हर हर हर' इस शब्द का उच्चारण कर आनन्दाश्रुप्रवाह से प्रक्षालित कपोलों से सम्पन्न और परमानन्द सन्दोह के प्रभाव से भन्वर सौवर्णी ने चिरकाल तक महादेव की स्तुति की। तत्पश्चात् आँखें मूँद कर महादेव का ध्यान करते समय ही उसने अपने मनोरथमय संसार में देखा कि महादेव उसके समक्ष प्रकट हो गये और सौवर्णी को "डरो मत" यह बात बारम्बार कह कर; वाटिका के वृक्षों के पुञ्ज में प्रविष्ट होकर भस्म से विभूषित एवम् बालसर्परूप वलय (कङ्कन) से सम्पन्न हाथ से रघुवीर का बाहुमूल पकड़कर उस सौवर्णी के

वीक्षमाणा आत्मानं विस्मृत्य चित्रार्पितेव जडीकृतेव पुत्तलिकायितेव गतचेतनेव मोहन-मन्त्र-मोहितेव च स्विन्ना कण्टकिता पुलकिता वेपिता च तथैव समस्थित।

किञ्चित्क्षणानन्तरञ्च—"भद्रे! क्षमस्व वारमेकमवलोकयैतं त्वदर्पित-जीवनम्"—इति मधुर-मधुरं कर्ण-रसायनं वचनमाकर्ण्य नयने उन्मील्य, तमेव जीवनाऽऽधारम्, ध्यान-विहित-साक्षात्कारम्, विलुलिताश्रु-धारम्, संसार-सारम्, प्रापित-परम-पीडा-पाराधारम्,

मिव = आस्वादयन्तमिवेत्युत्प्रेक्षा। एवमग्रेऽपि। चित्रार्पितेव = आलेख्यलिखितेव। पुत्तलिकायितेव = कृत्रिमकाष्ठस्त्रीत्वमापादितेव। मोहनमन्त्रमोहितेव = वशीकरणमन्त्रायत्तीकृतेव।

कर्णरसायनम् = श्रोत्रानन्दजनकम्। ध्यानविहितसाक्षात्कारम् = चिन्तनानुभूतप्रत्यक्षम्। विलुलिताश्रुधारम् = प्रचलितास्रतरङ्गकम्। प्रापितपरमपीडापारावारम् = लम्भितविपुलयन्त्रणासागरम्। अभिहित-

समक्ष ले आये और "ये लो, अपने पतिदेव का परिग्रहण करो" यह बात सौवर्णी से कह कर वे (महादेव जी) सौवर्णी द्वारा आराधित स्वमूर्ति में ही विलीन हो गये। उधर सौवर्णी भी सुवर्णमय उष्णीष (पगड़ी) को धारण किये, बहुमूल्य कञ्चुक से विभूषित, चमकते चन्द्रहास से चमत्कृत, हर्षाश्रु-परिपूर्ण चञ्चल लोचन-युगलवाले, अपनी दृष्टि से उसका (सौवर्णी का) आस्वादन, आलिङ्गन तथा परिपान-सा करते हुए अपने पतिदेव को देखती हुई अपनी भी सुध भूलकर चित्रलिखित-सी, जड़ीभूत-सी, काष्ठमय प्रतिमा-सी, चेतना-शून्य-सी एवम् मोहक मंत्रों द्वारा मोहित सी होने के कारण पसीने, रोमाञ्च और कम्पन से युक्त होकर वैसे ही खड़ी रही।

कुछ क्षणों के पश्चात् "भद्रे! क्षमा करो। तेरे लिये अपने जीवन को समर्पित कर देनेवाले इस व्यक्ति के ऊपर एक बार अपनी दृष्टि तो डाल" इस प्रकार की अत्यन्त मधुर श्रवणसुखद वाणी सुनकर जब सौवर्णी ने अपनी आँखें खोलीं तो उसने अपने समक्ष अपने जीवनाधार, ध्यान करते समय साक्षात्कृत, आँखों से अश्रुधारा बहाते हुए, संसारसार, दौर्भाग्य के कारण

अभिहितवचनपीयूषाऽऽसारं रघुवीरसिंहमदर्शत्।

दृष्ट्वैव चोत्थाय तस्य पादयोः पतित्वा अनपेक्षित-व्रीडा, समनुभूत चिर विरह पीडा-कलित विक्षिप्त क्रीडा, मुक्तकण्ठं रुरोद। सोऽपि च समानोद्गारोऽपि कथं कथमपि धैर्य्यमाधाय, भज्यमानेन स्वरेण सान्त्वयन्, कम्पमानैरङ्गैरुत्थाप्य, आलिङ्ग्य, कण्टकित-कराकलित पटखण्डेन कपोल-तल गलदश्रु-धारां प्रोञ्छितवान्। उपवेश्योपविश्य च कथितवान्—प्रिये! मामुद्दिश्य बहु कष्टं सोढवत्यसीति स्मारं स्मारं विदीर्यते हृदयम्। अहह!! कतिवारं नाहं निवेदितवान्—यद् सुभ्रूव मादृशो अकिञ्चित्करे अन्यवस्थे

वचनपीयूषासारम् = कथितवचोऽमृतधारासम्पातम्।

अनपेक्षितव्रीडा = अगृहीतलज्जा। समनुभूतया चिरविरहपीडया, कलिता। विक्षिप्तक्रीडा = उन्मत्तलीला यया सा। मुक्तकण्ठम् = स्फोटित गलम्। अतितारमिति यावत्। समानः, उद्गारः = दुःखोद्गमः यस्य सः। भज्यमानेन = त्रुट्यता। विशृङ्खलितेनेति यावत्। कण्टकिते = सरोमाञ्चे करे, आकलितेन, पटखण्डेन = मुखशोषकवस्त्रशकलेन। कपोलतलाद्, गलन्तीम् = पतन्तीम्, अश्रुधाराम्। उपवेश्य = सौवर्णीं प्रतिष्ठाप्य। उपविश्य = स्वयमासित्वा। विदीर्यते = द्विधा भवति। अकिञ्चित्करे=

विशाल दुःखसागर को सम्प्राप्त एवम् वचनामृत प्रवाह को प्रवाहित करने वाले रघुवीरसिंह को देखा।

देखते ही उठकर उसके चरणों पर गिरकर, लज्जा की उपेक्षा कर चिर-विरह की वेदना की अनुभूति से उन्माद क्रीडा को प्राप्त करनेवाली वह सौवर्णी मुक्तकण्ठ रोने लग गई। दुःखोद्गार में सौवर्णी सदृश होने पर भी रघुवीरसिंह ने जिस किसी प्रकार धैर्य धारण कर, अवरुद्ध स्वर से सौवर्णी को सान्त्वना देता हुआ, अपने कम्पन युक्त अङ्गों से चरणपतित सौवर्णी को उठाकर, उसका प्रेमालिङ्गन कर रोमाञ्चयुक्त हाथ में वर्तमान रूमाल से सौवर्णी के कपोलों से बहती हुई अश्रुधारा को पोंछ दिया और उसे बैठाकर तथा स्वयम् भी बैठकर सौवर्णी से कहने लगा—"प्रिये! मेरे निमित्त तुमने बहुत कष्ट उठाया है—यह स्मरण कर मेरा हृदय विदीर्ण हो रहा है।

अनुरक्ताऽसि। अस्तु, व्यतीता सा दुरदृष्ट-दशा, तवैव पुण्यैरहमपि जीवामि, दुष्कीर्ति-वेदनां विधूय महाराजस्य परम-पुरस्कार-भाजनं च संवृत्तोऽस्मि। महाराजः स्वयमधुना तव पाणिं मां ग्राहयिष्यति, अधुना त्यजेमं संन्यासि-वेषम्, यदवलोकनेनापि खिद्यते चेतः।

अहह ! क्व ते नवनीत-कोमलान्यङ्गानि ? क्व चैतद् ब्रह्मचर्यम् ? न तव प्रकृति-कुञ्चिताः कचा जटाजूटतामर्हन्ति, नेयं त्वग् भसितसङ्घर्षमर्हति, नायं मौक्तिक माला-गौरवमपि सग्लानि सहमानः कन्धरो रुद्राक्ष-राशि-भार-कष्टमर्हति, न वेयं

कार्यासाधके, कर्तुमशक्ते। अव्यवस्थे = स्थित्यादिव्यवस्थारहिते। दुष्कीर्तिवेदनाम्=दुर्यशोयन्त्रणाम्। विधूय = तिरस्कृत्य।

नवनीतवत् = हैयङ्गवीनवत्, कोमलानि = मृदूनि। क्व चैतद् ब्रह्मचर्यमिति विषमालङ्कारः। प्रकृतिकुञ्चिताः = स्वभाववक्राः। जटाजूटताम् = जटात्मना बन्धनम्। इयम् = ईदृशी। विशिष्टेति यावत्। भसितसङ्घर्षम् = भूतिमर्दनम्। मौक्तिकमालागौरवम् = मणिस्रग्गुरुताम्।

हाय !! क्या मैं तुमसे कई बार नहीं कह चुका था कि तुम मेरे जैसे तुच्छ तथा अव्यवस्थित व्यक्ति से व्यर्थ प्रेम कर रही हो ! अस्तु, अब वह दुरदृष्ट की दुर्दशा बीत चुकी, तुम्हारे ही पुण्य के प्रभाव से मैं भी जीवित हूँ एवम् अपने दुर्यश के कारण हुई व्यथा की उपेक्षा कर सम्प्रति महाराज का परम-पुरस्कार-पात्र भी बन चुका हू। अब स्वयम् महाराज मेरे द्वारा तुम्हारा पाणिग्रहण करानेवाले हैं। अतः अब इस तपस्विनी-वेषको छोड़ दो जिसके अवलोकनमात्र से भी मन खिन्न हो रहा है।

हाय ! नवनीत की तरह कोमल ये तुम्हारे अङ्ग कहाँ और यह कठोर ब्रह्मचर्य कहाँ ! तुम्हारे ये स्वभावतः घुंघराले बाल जटा बनाने योग्य नहीं हैं, तुम्हारी यह कोमल त्वचा भस्म की रगड़ खाने योग्य नहीं है, मोतियों की माला के भार को ढोने में भी कष्ट का अनुभव करनेवाला तुम्हारा यह कन्धा रुद्राक्ष माला के भार के ढोने से उत्पन्न होनेवाले कष्ट का सहन करने

कुसुम शयन-सनाथन प्रार्थना-भाजनं गात्र यष्टिः स्थण्डिल शय्यामर्हति । तदुत्तिष्ठ, सनाथय स्व-वास-भवनम्, समुज्जीवय वृद्ध देवशर्माणं पुरोहितम्, समासादय च चिरत्यक्त-प्रकृति-सिद्ध निज वेषम् । गच्छाम्यहमधुना, मदर्थमेव चिराङ्गीकृत ब्रह्मचर्यं स्वपितर प्रशमयितुम् । ततश्च राजमाताऽपि कुशलमावेदनीया, क्षम्यतां क्षम्यताम्, साम्प्रत नास्ति मेऽवकाश । कदाचिद् वेत्सि भवती यद् अद्यैवापराह्णे महाराष्ट्रराजस्य प्रताप-दुर्ग प्रवेश इति । नास्त्यथास्माकमवसर क्षणमप्यन्यथाऽतिवाहयितुम्--इत्यनुमन्यसे चेत्साधयामि ।

---

सग्लानि = सखेदानुभवम् । रुद्राक्षराशीनां भार एव कष्टम् । कुसुमशयनसनाथनस्य = पुष्पशय्यास्वीकरणस्य, प्रार्थनायाः, भाजनम् = आधारीभूतम् । स्थण्डिलशय्याम् = अपरिष्कृतभूशयनम् । सनाथय = शोभय । चिराङ्गीकृतब्रह्मचर्यम् = दीर्घकालगृहीतव्रतविशेषम् । आवेदनीया = बोधनीया । अवकाशः = अवसर । अतिवाहयितुम् = समापयितुम् । साधयामि = गच्छामि । नाटकीयमप्येतमिति साहित्यदर्पणादिषु स्फुटीकृतम् ।

---

योग्य नहीं है और पुष्पों की शय्या पर सोने के लिये प्रार्थना करने योग्य तुम्हारा यह शरीर भी जमीन पर सोने योग्य नहीं है । अतः अब उठो, अपने वासस्थान को सनाथित करो, अपने वृद्ध कुल-पुरोहित देवशर्माजी को उज्जीवित करो और अपने चिरत्यक्त प्राकृतिक वेष का भी धारण करो । मेरे ही निमित्त चिरकाल से सन्यासव्रत धारण करनेवाले पिताजी से मिलने मैं अभी जा रहा हूं । तत्पश्चात् राजमाता को भी अपने कुशल की सूचना देनी है, अत अभी क्षमा करो । मुझे बहुत अवकाश इस समय नहीं है । तुम तो प्रायः जानती होगी कि आज ही अपराह्न काल में महाराष्ट्रराज अपने प्रताप दुर्ग में प्रवेश करनेवाले हैं । आज हम लोगों को एक क्षण भी अन्यान्य कार्य में व्यतीत करने का अवसर नहीं है । अतः यदि तुम्हारी अनुमति हो तो मैं इस समय यहाँ से चलूँ ।

सा तु आनन्द-परवशा जडीकृतेव चित्रार्पितेव मन्त्र-कीलितेव मायामोहितेव विक्रीतचित्तेव हारित-हृदयेव मथित-मानसेव च त्रिविध-भाव भङ्ग तरङ्गिताभ्यां नयनाभ्यां निपुण-मीक्षमाणा, अविरल गलन्नयन जल-धारया भसित-सम्मर्दमिव क्षालयन्ती, मन्दं मन्दं मुहूर्त्तमालप्य तं विससर्ज्ज । स च ततः प्रचलितो बहुभिः साश्चर्य्यं सानन्दं च दरीदृश्यमानो मोमोद्यमानः सत्कारीक्रियमाणश्च यथोचित तांस्तान्प्रणमन्, आलिङ्गंश्च, मारुति-मन्दिरमासाद्य सरोमाञ्चं सगद्गदं सानन्दञ्च, हनूमन्मूर्तिं दर्शं दर्शं स्तावं स्तावं पातं पातं नामं नामञ्च परमं मोद सन्दोमवाप ।

आनन्दपरवशा = हर्षाधीना । मन्त्रैः, कीलितेव = यन्त्रितेव । मायामोहितेव = इन्द्रजालमूढेव । हारितहृदयेव = चोरितमानसेव । मथितमानसेव = विलोडितस्वान्तेव । अविरलम् = सततम्, गलन्त्या नयनजलधारया । भसितसम्मर्दम् = भूतिसम्मिश्रणम् । क्षालयन्ती = धावयन्ती । विससर्ज = तत्याज । गन्तुमनुमोदितवतीति यावत् । मोमोद्यमानः = प्रशस्यमानः । सत्कारीक्रियमाणः = सत्कारगोचरतामानीयमानः । दर्शं दर्शम् = दृष्ट्वा दृष्ट्वा । स्तावं स्तावम् = स्तुत्वा स्तुत्वा । पातं पातम् = पतित्वा पतित्वा । नामं नामम् = नमस्कृत्य नमस्कृत्य । णमुल् सर्वत्र । मोद-

तदनन्तर आनन्द परवश होने के कारण जड़ीभूत सी, चित्रार्पित सी, मन्त्र स्तब्ध सी, मायामोहित सी, अपने चित्त को बेच देनेवाली सी, चुरा लिये गये हृदयवाली-सी एवम् उन्मथित मानसवाली-सी उस सौवर्णी ने सतत बहनेवाली अश्रुधारा से मानो अपने शरीर के भस्म लेप को ही धुलाती हुई थोड़ी देर तक रघुवीरसिंह के साथ वार्तालाप कर उसे विदा कर दिया। वहां से प्रस्थित रघुवीरसिंह ने अपने बहुत से चकित एवम् आनन्दित प्रेक्षकों, आनन्दकों तथा सत्कारकों का यथोचित अभिवादन तथा आलिङ्गन करता हुआ हनुमानजी के मन्दिर को प्राप्त कर रोमाञ्च, गद्गद तथा आनन्द से सम्पन्न होकर हनूमान्जी की मूर्त्ति के बारम्बार दर्शन, स्तवन, चरण-निपतन तथा प्रणमन से परमानन्द सन्दोह का अनुभव किया। मन्दिर में

वत्पूजकेन साशीराशि समाश्लिष्टः, प्राप्त प्रसाद-मालः, सम्पादित-सिन्दूर-तिलक भालः, क्रियासमभिहारेण प्रणम्य, किञ्चित् समालप्य च देवशर्म्मणो मठं च प्रविश्य, 'दासोऽयं रघुवीरसिंहः प्रणमति' इति साष्टाङ्गं प्रणनाम।

देवशर्म्मा तु चिर समयानन्तरं तादृशं स्वर वचनञ्चाऽऽकर्ण्य, पादयोः पतितां तादृशीं मूर्तिञ्चावलोक्य चकित, क्षणं जड इव स्तब्ध. परस्तादोत्थाय, उपनेत्रं श्मश्रुकूर्चं च प्रक्षाल्य, पवन्तीभिर्वाष्प धारा-भिस्तमासिच्य, आनन्दाश्रुतेरिव वात्सल्य-रजताङ्कुरैरिव प्रेम-पीयूष-

सन्दोहम्=प्रसन्नताधमूहम्। साशीराशि=सानेकाशीर्वादम्। समाश्लिष्टः = समालिङ्गित.। प्राप्तप्रसादमालः = लब्धहनूमदर्पितस्रक्कः। सम्पादितसिन्दूरतिलकभालः = मुदितनागकेशरतिलकमस्तकः। मठम् = छात्रादिनिलयम्। प्रथमान्त एवम्भूतोऽमरः। साष्टाङ्गम् = समस्तशरीर-पातम्। प्रणामस्यैमान्यष्टावङ्गानि। "उरसा शिरसा दृष्ट्या मनसा वचसा तथा। पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः॥"

स्तब्धः = निश्चेष्टः। वाष्पधाराभिः = अश्रप्रवाहैः। तम् = रघुवी-रम्। श्वेतरोमाण्युत्प्रेक्षते-आनन्दाश्रुतेरिव = हर्षवाष्पकुलक्यैरिव। वात्स-

हनूमान्जी के पूजक द्वारा आशीर्वाददानपूर्वक आलिङ्गन एवम् प्रसाद के रूप में हनूमान्जी के चरणों पर अर्पित माला के प्रदान के पश्चात् ललाट में सिन्दूर की टीका लगा दिये जाने पर रघुवीरसिंह भूयोभूय हनूमान्जी तथा उनके पुजारी को प्रणाम तथा पुजारीजी से कुछ बातचीत कर देवशर्माजी के मठ में प्रविष्ट हो गया और "आपका सेवक रघुवीरसिंह आपको प्रणाम कर रहा है" यह कहकर देवशर्माजी को उसने साष्टाङ्ग प्रणाम किया।

चिरकाल के पश्चात् उस प्रकार के स्वर तथा वचन के श्रवण एवम् अपने चरणों पर पड़ी उस मूर्ति के अवलोकन से चकित देवशर्माजी तो क्षण भर के लिये जड़पदार्थ की तरह स्तब्ध ही रहे। बाद में खड़े होकर प्रवाहित होनेवाली अश्रुधारा से अपने चश्मे तथा दाढ़ी-मूँछ का प्रक्षालन करते हुए स्वचरणपतित रघुवीरसिंह को भी स्नान कराकर वात्सल्य के

धारोद्गारैरिव निःसरद्भिः कष्टकण्टकैरिव च समुदश्चितैः श्वेत-रोमभिर्व्याप्त, कलित-द्विगुण-कम्पाभ्यां कराभ्यां कथमपि तमुत्थाप्य, वलित-वली पलितेऽस्थि-चर्ममात्रे वक्षसि गाढमालिलिङ्ग। सोऽपि च देवशर्म्म-प्रेम-पूर-द्विगुणोद्दश्चित-बाष्पो निःशब्दमेव क्षणं रुदित्वा, शनैः शनैर्भग्नेन स्वरेण स्वीयमितिवृत्तं सूचयित्वा, ततस्ततः 'सपदि गन्तव्यमिति, महाराष्ट्र-चक्रवर्त्ती अद्यैवाऽऽयास्यति' इति च निवेद्य, तदनुमतिमासाद्य, नत्वा, निवृत्य, तुरग-निगालमास्फाल्य, सोत्काल-

ल्यम् = लघौ स्नेह, एव रजत तदङ्कुरैरिव = तत्प्ररोहैरिव। प्रेमपीयूषधारोद्गारैरिव = अनुरागामृतप्रवाहोद्भूतिभिरिव। नि सरद्भिः=बहिर्भवद्भिः। कष्टानि = दु खानि, एव कण्टकाः, तै। समुदश्चितैः = समुत्थितैः। व्याप्त = वलयित। कलित. = धारित, द्विगुणः, कम्प = वेपन याभ्या ताभ्याम्। वलितवलीपलिते = प्राप्तवार्धक्यश्वेतकेशे। अस्थिचर्ममात्रे = कीकसत्वङ्मात्रावशिष्टे। वक्षसि = उरसि। देवशर्मप्रेमपूरेण, द्विगुणोद्वेञ्चितम् = द्विगुणोच्छलितम्, बाष्प यस्य सः। भग्नेन = त्रुटितेन। इतिवृत्तम् = पूर्वतनमितिहासम्। अनुमतिम् = आदेशम्। तुरगनिगालम् =

रजतमय अङ्कुर एवम् प्रेम-पीयूष के धारा-प्रवाह के समान अभ्युदित तथा कष्टात्मक काँटों की तरह खड़े उजले रोएँ से व्याप्त शरीरवाले देवशर्माजी ने उस अवसर पर द्विगुण कम्पित होनेवाले अपने हाथों से जिस किसी प्रकार रघुवीरसिंह को उठाकर वृद्धावस्था के आगमन के कारण पके बाल से युक्त अपनी केवल अस्थिचर्मावशेष छातीसे आलिङ्गित किया। देवशर्माजी के प्रेम-प्रवाह से द्विगुण अश्रुप्रवाह करता हुआ रघुवीरसिंह भी क्षणभर मौन होकर ही रोता रहा। तत्पश्चात् शनैः शनैः अवरुद्ध स्वर से देवशर्माजी को अपनी सारी कहानी सुनाकर "महाराष्ट्रराज आज ही आनेवाले हैं, अतः शीघ्र वहाँ चलना चाहिये" इस प्रकार शर्माजी से निवेदन करने के पश्चात् उनकी अनुमति प्राप्त कर, उन्हें प्रणाम कर रघुवीरसिंह वहाँ से लौट गया और

मारुह्य, अभीषूनाक्षिप्य रेचितकेनाश्वं चालयन्, पलाशिनां मण्डलेषु निलीनः।

तत्र कुटीरे ब्रह्मचारि-गुरु-रूपो जटिलो वीरेन्द्रसिंहस्तु अद्य रजन्यां स्वप्ने 'कस्मिंश्चिद् युद्धे रघुवीरसिंहो वीरगतिं गतः'—इत्य पश्यदिति सचीत्कारमुत्थितः पार्श्वस्थदृष्टो रुदन् यथावृत्तमकथयत्। 'यः स्वापेष्वेवं दृश्यते, स दीर्घायुर्भवति पुरुषायुषं जीवति' इति क्रियासमभिहारेण तैः सान्त्वयमानोऽपि शोकविमोकं नाकार्षीद्।

अथ वीरक्षत्रियोऽपि वृद्धः—इति चिरानुभूत-सुत-वियोग-दुःखः इति च लिखतेऽमौ वीरेन्द्रसिंहः—इति सर्वथा सान्त्वयितव्यः सुखयि-

---

अश्वगलोद्देशम्। सोत्फालम् = सकूर्दनम्। अभीषून् = रश्मीन्। अश्वा-कर्षणरज्जुमिति यावत्। पलाशिनाम्=द्रुमाणाम्। निलीनः=अदृश्यतांगतः।

जटिल = जटावान्, ब्रह्मचारी। वीरगतिम् = सम्मुखमरणम्। यथावृत्तम् = यथाजातम्। स्वापेषु = शयनेषु। पुरुषायुषम् = शत वर्षाणि, पञ्चविंशत्युत्तराणीति चापरे। शोकस्य विमोकम् = त्यागम्।

चिरानुभूतसुतवियोगदुःखः=दीर्घकालाभ्यस्तपुत्रविरहखेदः। सान्त्व-

---

अपने घोड़े का गरदन थपथपाकर, कूदकर उसपर चढ़ गया और लगाम खींचकर दुलकी चाल में घोड़े को हाँकता हुआ वृक्षपुञ्ज में विलीन हो गया।

किन्तु अपने कुटीर में ब्रह्मचारिगुरु के स्वरूप में निवास करनेवाले वीरेन्द्रसिंह पूर्वरात्रि में "किसी युद्ध में रघुवीर सिंह ने वीरगति प्राप्त कर ली" इस प्रकार का स्वप्न देखने के कारण चीत्कारपूर्वक उठकर अपने समीप में वर्त्तमान व्यक्तियों को रो-रोकर सारा वृत्तान्त सुना चुके थे। "जिसके विषय में इस प्रकार के स्वप्न देखे जाते हैं वह दीर्घायु होता है और सौ-सवासौ वर्षोंतक अवश्य जीता है" इस प्रकार से अपने मित्रों द्वारा बारम्बार सान्त्वना दिये जाने पर भी वीरेन्द्रसिंह शोकमुक्त नहीं हो रहे थे।

तत्पश्चात् "वीर क्षत्रिय होने पर भी ये अब वृद्ध हो चुके हैं और पुत्र वियोग की असह्य वेदना की कटु अनुभूति भी इन्हें चिरकाल से करनी पड़ी

तव्यश्चायमिति, सर्वे ऊर्जस्वलैरुदारैर्वागासारैस्तच्छोकाग्निं मन्दं चक्रुः।

तावत्प्रविश्यैकेन ब्रह्मचारि-बटुना स्वसमान-वयसमपरमेकं बटुमिङ्गितेनाऽऽहूय बहिर्नीत्वा निर्दिश्य कथितम्—"पश्य पश्य, कृष्ण कर्णम्, चञ्चच्चन्द्र-वर्चसम्, उन्नत-ग्रीवम्, मेचक-कच-प्रचय-वीजित-निगालम्, धूम्र-लाङ्गूलोद्धूनन-विहित-चामर-चालन-चातुर्यम्, चर्वणावशिष्टैः प्रत्यर्थि-यशोभिरिव फेनैरा-

---

यितव्यः=शाम लम्भयितव्यः। ऊर्जस्वलैः = बलशालिभिः। वागासारैः = वाणीधारासम्पातैः, तस्य शोक एवाग्निस्तम्। रूपकम्। मन्दम् = क्षीणम्।

स्वसमानवयसम् = स्वतुल्यावस्थाकम्। इङ्गितेन = चेष्टया। निर्दिश्य = प्रदर्श्य। चञ्चच्चन्द्रवर्चसम् = चमत्कुर्वद्द्विजपतितेजस्कम्। उन्नतग्रीवम् = उत्कन्धरम्। मेचकेन = कृष्णवर्णेन, कचप्रचयेन = केशव्रातेन, वीजितः, निगालः = गलोद्देशो यस्य तम्। धूम्रलाङ्गूलस्य = कृष्णपुच्छस्य, उद्धूननेन=सञ्चालनेन। विहितम्=प्रकटीकृतम्, चामरचालनचातुर्यं येन तम्। चर्वणावशिष्टैः=निगरणशेषभूतैः। प्रत्यर्थिय-

---

है; अतः इन्हें किसी प्रकार सान्त्वना देनी चाहिये तथा प्रसन्न करना चाहिये" इस भावना से उनके मित्रों ने अपने ओजस्वी तथा उदार वचनों से किसी तरह वीरेन्द्रसिंह की शोकाग्नि को कुछ शान्त किया।

उसी समय वहाँ प्रवेश कर एक बटुक ब्रह्मचारी ने अपने समवयस्क अन्य ब्रह्मचारी को बाहर बुलाकर (उधर आते हुये रघुवीरसिंह की ओर) सङ्केत करता हुआ कहा—"देखो देखो, काले कानोंवाले, चन्द्रमा की चन्द्रिका का अनुकरण करनेवाले, उन्नत गरदन से सम्पन्न, साँवले बालों के समूह से अपने गरदन में हवा लगानेवाले, अपनी श्यामवर्ण की पूँछ के डुलाने में चामर डुलाने की चातुरी को प्रकट करनेवाले और चबाने से अवशिष्ट शत्रुकीर्तिकल्प फेन-से अपने मुँह के अधोभाग को व्याप्त करनेवाले

लिप्त-सृक्किणीकम्, तुरगममुं चालयन्, कोऽसौ धन्यः कुटीरमिवोद्दिश्योपत्यकां परिक्रम्य इव आयाति? अनुकरोत्येतस्य आकृती रघुवीरसिंहम्, हयाऽऽरोह-भङ्गी चैषा नान्यस्य सम्भोभवीति"।

अथ सोऽपि गाढं निरीक्ष्य प्रावोचत्—यद्यपि चिरात् प्रनष्टो रघुवीरः कथमकस्मादेवामुना वेषेण समागच्छेदिति संशेते हृदयम्; तथाऽपि चक्षुषी कथं न विश्वसेयम्? ध्रुवं रघुवीर एवासौ। अथान्यमपि दर्शयामि—इत्युक्त्वा, अन्तः प्रविश्य, द्वित्रानिङ्गितैराकार्य दर्शयाम्बभूव।

तावद् विद्युद्वेगेन नेदीयान् संवृत्तोऽयमश्व, सर्वे च 'निश्चितमसौ

---

शोभिरिव=यशःकीर्तिभिरिव। फेनैः=डिण्डीरैः। आलिप्तसृक्किणीकम्=व्याप्तोष्ठप्रान्तभागम्। उद्दिश्येव=लक्ष्यीकृत्येव। उपत्यकाम्=पर्वतासन्नभूमिम्। अनुकरोति=विडम्बयति। हयारोहभङ्गी=अश्वारोहणशैली। सम्भोभवीति=अतितरां सम्भवति।

प्रनष्टः=अदृष्टिगतः। संशेते=सन्देहं करोति। चक्षुषी=नेत्रे। अन्यम्=इतरम्। आकार्य=आहूय।

---

घोड़े को हाँकता हुआ उपत्यका के परिभ्रमण से परावृत्त होकर प्राय इस आश्रम की ओर ही आनेवाला यह कौन-सा धन्य व्यक्ति है? इसकी आकृति तो रघुवीरसिंह की जैसी लग रही है और इस तरह की अश्वारोहण-कला भी तो रघुवीरसिंह को छोड़कर अन्य व्यक्ति में होना अत्यन्त असम्भव है।"

उसकी बात सुनकर दूसरे ब्रह्मचारी ने भी अच्छी तरह उस अश्वारोही को देखकर कहा—यद्यपि बहुत दिनों से विलुप्त रघुवीरसिंह एकाएक इस वेश में यहाँ कैसे आ जायेंगे—इस प्रकार का सन्देह मेरे हृदय में है तथापि अपनी आँखों पर तो विश्वास करना ही है। निश्चित ही ये रघुवीरसिंह हैं। आओ, अन्य लोगों को भी दिखलायें—यह कहकर कुटी में प्रवेश कर दो-तीन अन्य व्यक्तियों को भी इशारे से बाहर बुलाकर उन दोनों को इन्हें आते हुए रघुवीर के दर्शन कराये।

तबतक तो बिजली की तरह तेज चलनेवाला रघुवीरसिंह का घोड़ा पास

रघुवीरसिंहः'—इति स्पष्टं व्याजह्रुः।

ततः केचित् "सोऽयं सोऽयम्" केचिद्—"दिष्ट्या जीवति"; केचिद्—"अहो! आनन्दः"; केचिद्—"कथं न स्यादीदृशी प्रसूतिः क्षत्रिय धौरेयाणाम्!" केचिद्—"समाकर्णि मया पूर्वमेव यत्तोषितप्रभुः समायाति रघुवीरः" इति; केचिद्—"सत्यं खलु भविष्यद्वचनं देवशर्म्मणः"; केचिद्—"फलमिदं वीरेन्द्रसिंह-महाव्रतस्य"; केचिद्—"विजृम्भित एष सौवर्ण्यास्तपसां परिणामः"; केचिच्च—"उच्यतामुच्यतां वीरो वीरेन्द्रसिंह"—इति परस्परमूचुः। तावत्झटिति प्रविश्य "जीवति रघुवीरसिंहः, समायातो रघुवीरसिंहः, एष बहिरुपस्थितो रघुवीरसिंहः, दृश्यतां रघुवीरसिंहः लभ्यतां

---

विद्युद्वेगेन=चपलाजवेन। नेदीयाम्=अतिनिकटस्थितः। व्याजह्रुः=कथयाञ्चक्रुः।

प्रसूतिः=सन्ततिः। क्षत्रियधौरेयाणाम्=बाहुजश्रेष्ठानाम्। समाकर्णि=श्रुतम्। विजृम्भितः=समेधितः। परिणामः=फलम्।

---

आ चुका। तब सबने "ये तो रघुवीर सिंह ही हैं" इस प्रकार स्पष्टरूप में कहा।

तदनन्तर कुछ लोग "वही हैं, वही हैं", कुछ लोग "अहो! कितना आनन्द है", "क्षत्रियश्रेष्ठ की सन्तति इस प्रकार प्रशस्त क्यों न हो", कुछ लोग "मैं तो पहले ही सुन चुका था कि महाराज को प्रसन्न कर रघुवीरसिंह आ रहे हैं", कुछ लोग "देवशर्माजी की भविष्यवाणी सत्य निकली", कुछ लोग "वीरेन्द्रसिंह की कठोर तपस्या का ही यह उत्तम परिणाम है", कुछ लोग "यह तो सौवर्णी के तप के फल की समृद्धि है" और कुछ लोग "जाओ, जाओ, वीरेन्द्रसिंह से जाकर कहो" इस प्रकार परस्पर बातचीत करने लगे। तबतक कुटी में प्रवेश कर "रघुवीरसिंह जिन्दे हैं, रघुवीरसिंह आ चुके, रघुवीरसिंह बाहर खड़े हैं, चलिए रघुवीरसिंह को देखिये, अब अपने रघुवीरसिंह को लीजिये" इस प्रकार बारबार कहनेवाले ब्रह्मचारियों

रघुवीरसिंहः"–इति क्रियासमभिहारेण वदतां वटूनां मुखमवलोकयन्, परिवृत्त-दृष्टिः, विस्मृतात्मा, व्यामुग्ध इव क्षणं स्तब्ध एव समतिष्ठत वीरेन्द्रसिंहः। अथ तैरुत्थाप्यमानः किञ्चिद्विश्वस्य बहिरायातः। तावद् रघुवीरसिंहागमन-कोलाहलेन व्याप्तमभूत् कुटीर-द्वारम्।

रघुवीरोऽपि दूरादेव हस्तमुद्यम्य अङ्गुल्या स्वं दर्शयतो वेगेन निविशमानान् पुनर्बहिरागच्छतः स्वात्मीयान् कथं कथमपि बहिरुपयान्तं बाष्प-धाराऽऽसारैः स्नातं पितरञ्च पश्यन्; अश्रुकलाऽऽकुलित-लोचनः क्षणेन तुरङ्गमं कुटीरद्वारमानयत्। कदाऽसावत्र समायातः? कदाऽश्वपृष्ठादुत्प्लुतः? कदा वा तातस्य

झटिति = त्वरितम्। परिवृत्तदृष्टिः = अन्यतः प्रक्षिप्तचक्षुः। व्यामुग्ध इव = व्यामूढ इव। विश्वस्य = विश्वासमाधाय।

उद्यम्य = उत्थाप्य। निविशमानान् = प्रविशतः। स्वात्मीयान् = स्वबन्धुजनान्। उपयान्तम् = समागच्छन्तम्। बाष्पधारासारैः = अश्रुवेगवर्षैः। स्नातम् = निषिक्तम्। तुरङ्गमम = हयम्। उत्प्लुतः =

के मुख का अवलोकन करते हुए प्रत्यावर्तित दृष्टिवाले वीरेन्द्रसिंह अपनी भी सुध भूलकर निश्चेष्ट व्यक्ति की तरह क्षणभर तो स्तब्ध ही रह गये। तदनन्तर उन ब्रह्मचारियों द्वारा उठाये जाने पर उनकी बातों पर कुछ विश्वास कर बाहर निकले। उस समय रघुवीरसिंह के शुभागमन के उपलक्ष्य में किये जानेवाले कोलाहल से कुटीर द्वार गूँज रहा था।

तबतक दूर से ही अपने हाथ उठाकर अपनी ओर अङ्गुल्यानिर्देश करते हुए अत्यन्त शीघ्रता से कुटी में प्रवेश-परावर्तन करनेवाले अपने बन्धुओं और जिस किसी प्रकार बाहर निकलते हुए तथा अश्रुधारा प्रवाह से स्नान करते हुए अपने पिताजी को देखता हुआ आँसूभरी आँखोंवाला रघुवीरसिंह भी अपने घोड़े को कुटीर के दरवाजे तक ले आया। वह कब कुटीर द्वार पर प्रस्तुत हो गया, कब वह घोड़े से उतर गया और कब उसने अपने

चरणयोः साष्टाङ्गं पतितः ?—इति न लक्षितः केनापि। तयोर्मेलनावलोकन-चकित इव महापरिणाहो गतसन्नाहो विगलत्स्वेदप्रवाहो वाहोऽपि दीर्घं निश्वसन् स्वतन्त्रोऽपि परतन्त्र इवैकतरतस्थौ। वीरसिंहस्तु स्वरोदनेन तमपि स्फुटं रोदयन्, उत्थाप्य गाढमालिलिङ्ग। योऽयमस्मिन् समये परितः समभूत् प्रेम-पूर-प्रवाहः; स कथमिव वर्णयितुं शक्यः स्यादस्मादृशैः ? यतो यैरनुभूतस्तैरप्यात्मा विस्मृत इति तैरप्यशक्य एव व्याख्यातुम्।

अथ मुहूर्त्तानन्तरं सर्वेऽपि कुटीरान्तः प्रविष्टाः, कटेषु चोपविष्टाः।

---

उत्कूर्दितः। पतितः=प्रणतः। न लक्षित =नावलोकितः। महापरिणाहः= अतिविशालः, अत्र बहुव्रीहिः। गतसन्नाहः=त्यक्तोद्यमः। विगलत्स्वेदप्रवाहः = निष्क्रामद्घर्मबिन्दुपूरः। वाहः = अश्वः। स्वतन्त्रोऽपि = अयन्त्रितोऽपि। परतन्त्र इव = अस्वाधीन इव। तमपि = रघुवीरमपि। स्फुटम् = प्रत्यक्षम्। प्रेमपूरप्रवाहः = अनुरागवारिनिर्झरणम्। अनुभूतः = अनुभवगोचरीकृतः। आत्मा = स्वम्। विस्मृतः = अनवधारितः। अशक्यः = अनर्हः। व्याख्यातुम् = कथयितुम्।

---

पिताजी को साष्टाङ्ग अभिवादन किया—इन बातों का परिज्ञान किसी भी व्यक्ति को नहीं हो सका। विशालकाय, परित्यक्तोद्यम एवम् पसीने की धारा बहानेवाला घोड़ा भी लम्बी साँस भरता हुआ स्वतन्त्र होकर भी परतन्त्र की तरह एक ओर खड़ा हो गया मानो पिता-पुत्र के मिलन के दृश्य को देखने से वह चकित हो गया हो। वीरेन्द्रसिंह ने तो अपने क्रन्दन से रघुवीरसिंह को भी अत्यधिक रुलाते हुए अपने चरणों पर से उसे उठाकर गले लगा लिया। उस समय वहाँ सर्वतः प्रेम का जिस प्रकार का प्रवाह प्रवाहित हुआ उसका वर्णन हम जैसे व्यक्तियों द्वारा कैसे किया जा सकता, क्योंकि अपनी सुध भूल जाने के कारण उस प्रेम-प्रवाह का अनुभव करनेवाले भी उसका वर्णन नहीं कर सकते।

कुछ समय के बाद सब कुटी में घुस गए और वहाँ चटाई पर बैठ गए।

बटुनैकेन निरभीपूकृत्य घोटको द्रुमशाखायां बद्ध, अपरेण च सरोवरस्यापरतटे निकुञ्जे स्थितो गणेशशास्त्री सूचित । सोऽपि च हर्ष-वर्ष-परवश, कचित् कुशान् कचित्पात्रं कचिदुत्तरीयं कचिन्‍ माला पातयन्, स्वयमपि निपतन्निव धावमान कुटीरं प्रविष्टः ।

रघुवीरस्तु दृष्ट्वैवैनमुत्थाय साष्टाङ्गं चरणयोः पतितः । सोऽपि च वाष्प-पूर-स्नावित-नयनः, वैक्लव्य-द्विगुणीकृत-सहज-कम्पः कथं कथमप्युत्थाप्य वीर-बालकमेनं पौनःपुन्येन दक्षतो वामतश्च गाढमालिलिङ्ग । मुहूर्तं यावत् पारस्परिक-प्रेम पूर-प्रवाहाऽऽवर्तगर्त-

कटेषु = कुशासनेषु "चटाई" इति भाषा । निरभीपूकृत्य = निष्प्रग्रहीकृत्य । द्रुमशाखायाम् = वृक्षावयवे । निकुञ्जे = वाटिकायाम् । हर्षवर्षपरवशः = आनन्दवृष्ट्यधीनः । निपतन्निव = स्खलन्निव । धावमानः = त्वरया चलन् ।

एनम् = गणेशशास्त्रिणम् । अन्वादेशत्वादेनादेशः । वाष्पपूरेण स्नाविते = स्नपिते, नयने यस्य सः । वैक्लव्येन = विक्लवतया, द्विगुणीकृत, सहजः = स्वाभाविकः, कम्पो यस्य सः । पारस्परिकप्रेमपूरप्रवाहस्य =

एक ब्रह्मचारी ने लगाम खोल कर घोड़े को एक वृक्ष की शाखा में बान्ध दिया और एक दूसरे बटुक ने गणेश शास्त्री जी को रघुवीर सिंह जी के लौट आजाने की सूचना दी । सूचना पाते ही कुशा, अपने पात्र, द्वितीय वस्त्र तथा माला को जहाँ तहाँ गिराते हुए तथा स्वयम् भी गिरते हुए गणेशशास्त्री जी भी दौड़ कर वहाँ आ पहुँचे ।

गणेश शास्त्री जी को देखते ही रघुवीर सिंह ने उठ कर उन्हें साष्टाङ्ग प्रणाम किया । अश्रु प्रवाह से परिपूर्ण नेत्र वाले तथा विकलता ( वृद्धता ) के कारण द्विगुणित कम्पित होने वाले गणेश शास्त्री ने भी किसी प्रकार स्वचरण निपतित उस वीर बालक को उठा कर उसके दक्षिण तथा वाम भागों में पुनः पुनः गाढ़ालिङ्गन किया । एक मुहूर्त के लिये तो वहाँ वाणी प्रचरित नहीं हो सकी प्राय इसी लिये कि वाणी के मन में इस प्रकार

परिपतन-भीतेव न कुतोऽपि प्रचचार वाणी।

ततो रघुवीर एव धैर्य्यमवलम्ब्य, पटान्तेन चक्षुषी परिमृज्य, वीराऽऽसनेन पातित जानुद्वयमुपविश्य, उदारया वाचा एवमाललाप-

तात! न वचनीयं किमप्यावयोर्व्यतीत-व्याकुलता-विषये, सोढमस्माभिः प्राक्तन-कर्मणां फलम्। कर्ण-परम्परया सर्वं श्रुतवानस्मि भवतस्तत्रभवतः पुरोहितस्य च वृत्तान्तम्। चिरायात्रैव वसतामप्यस्माकं नाभूत् पारस्परिक-साक्षात्कारः। नेदिष्ठानामपि परस्पर-दिदृक्षा-क्षाम हृदयानामपि अपरिचितवतां चित्तानि चिरमाक्रान्त-

---

आन्योन्यानुरागोच्छल-जलधारायाः, आवर्त्ताः=अम्भसां भ्रमा एव, गर्त्ताः=गम्भीरस्थानानि, तेषु, परिपतनभीतेव = मज्जनत्रस्तेव प्रचचार = निश्चचार। वाणी = भारती। किंचित्काल मौनिनावेव स्थिताविति यावत्।

पटान्तेन = वसनप्रान्तेन। परिमृज्य = संशोध्य।

सोढम् = समनुभूतम्। कर्णपरम्परया = कर्णाकर्णिकया। पारस्परिकसाक्षात्कारः = आन्योन्यप्रत्यक्षीभवनम्। नेदिष्ठानाम् = अतिनिकटे

---

का भय हो रहा था कि वह उस प्रेम प्रवाहस्थ जलभँवर के मध्य में कहीं न गिर जाये।

तत् पश्चात् धैर्य धारण कर, कपड़े के खूँट से आँसू पोंछ कर वीरासन मुद्रा में बैठ कर रघुवीर सिंह ने ही अपने उदार शब्दों में इस प्रकार कहा—

तात! हम लोगों की बीती हुई व्याकुलता के विषय में कुछ नहीं कहना है। हम लोगों ने अपने पूर्वानुष्ठित कर्म का फलोपभोग किया। कर्णपरम्परा से मैं आपके तथा सम्मान्य पुरोहित महाशय के भी सारा वृत्तान्त सुन चुका हूँ। चिरकाल तक मेरे यहीं रहने पर भी हम लोगों का परस्पर साक्षात्कार नहीं पाया। हम लोगों के परस्पर समीपस्थ तथा परस्पर देखने (मिलने) की इच्छा से खिन्न हृदय वाले होने पर भी परस्पर परिचय के अभाव में हम लोगों का चित्त चिरकाल चिन्ताक्रान्त रहा।

चिन्तान्यासन्। सुखमेधतां परस्मिन्नपि लोके क्रूरसिंहः, यस्य पौरुषेण मिलिता वयम्!

नूनं भोक्तव्यं भोगेनैव समाप्नोति तद्‌दुःखमिदं घनीभूय प्रकटित-परिचयानां युष्माकम्, तिरोहित-परिचयस्य च मम शिरस्यापतितमनुभूतं चासहायेन हृदय-हतकेन। परमधुना गतास्ता विद्रावित निद्रास्तन्द्रा-दरिद्रा महायाम-यामिन्यो यामिन्यः।

---

स्थितानाम्। परस्परम्=इतरेतरम्, दिदृक्षया = द्रष्टुमिच्छया, क्षामम् = दुर्बलम्, हृदयं येषां तेषाम्। अपरिचिन्वताम् = परिचयमप्राप्नुवताम्। आक्रान्तचिन्तानि = चिन्ताव्याप्तानि। सुखम् = आनन्दम्। क्रियाविशेषणम्। एधताम् = वर्द्धताम्। परस्मिन् = स्वर्गादिके। पौरुषेण = पुरुषार्थेन।

नूनम् = निश्चितम्। भोक्तव्यम् = सहनीयम्। भोगेनैव = सुखदुःखसाक्षात्कारेणैव। घनीभूय = सान्द्रीभूय। प्रकटितपरिचयानाम्=प्रकाशितसत्त्वानाम्। असहायेन = एकाकिना। विद्राविताः = दूरीकृताः, निद्रा याभिस्ताः। तन्द्रादरिद्राः = निद्रापूर्वावस्थयाऽपि शून्याः। महा-

---

क्रूर सिंह परलोक में भी सुखपूर्वक बढ़ता रहे जिसके पौरुष के प्रभाव से ही हम लोगों का सम्मिलन हो सका है।

यतः भोक्तव्य कर्म का क्षय भोग से ही होता है अतः एव यह विपत्ति परस्पर परिचित आपलोगों के माथे पर भी उमड़ पड़ी थी और अपरिचित मेरे माथे पर भी और इस अभागे हृदय को उसकी कटु अनुभूति भी करनी पड़ी। परन्तु आज निद्रा एवं तन्द्रा से भी सर्वथा शून्य और लम्बे-लम्बे प्रहरों वाली रात्रियों का अन्त हो चुका। मेरे सौभाग्य से आप लोग भी सकुशल हैं। आप लोगों की तपस्या के प्रभाव से मैं भी पुनः महाराज का प्रेमपात्र बना गया हूँ। अब इससे बढ़कर मेरा कुशल क्या हो सकता है!

मम भाग्यैः कुशलिनो भवन्तः। भवतां सपोवलेनाहमपि पुनर्म्महाराजस्य तोषभाजनं संवृत्तोऽस्मीति किमतः परं स्यान्मे कुशलम्? । यवनराज-निगृहीतोऽपि भारतस्य भाग्येन कुशलेन प्रतिनिवृत्तो महाराष्ट्र-मेदिनी-मण्डलाऽऽखण्डलः। तन्मङ्गलमयेऽस्मिन् समये नोदासितव्यं भवद्भिः।

सार-गर्भामुपदेश-पूर्णां व्याकुलता-विरहितां धैर्य्य-धुरीणां कोमलाममलां वाचममूमाकर्ण्य सर्वेऽपि साधुवाद-पराधीनाः परमानन्द-सन्दोह-समुद्वेल्लद्वाष्प-बिन्दु-व्रजेनाऽऽत्मानं क्षालयाम्बभूवुः। ततो मुहूर्त्तमभूवन् तेषामालापा बहुविधाः। येषु पदे पदे कण्ठरोधः, पदे पदे बाष्प-धाराः, पदे पदे रोमाञ्चः, पदे पदे स्वर-

यामयामिन्यः = बृहत्तरनिशाहयुतप्रहरयुताः। यामिन्यः = निशीथिन्यः।
तोषभाजनम् = प्रसन्नतापात्रम्।
नोदासितव्यम् = नोदासीनैर्भाव्यम्।
सारगर्भाम् = सतत्त्वाम्। धैर्यधुरीणाम् = धीरताभारधारिणीम्।
कोमलाम् = मृद्वीम्। अमलाम् = निर्दूषणाम्। परमानन्दसन्दोहेन = अत्युत्कटहर्षसमूहेन, समुद्वेल्लता = समुच्छलता, बाष्पबिन्दुव्रजेन = अश्रु-

यवनराज द्वारा कैद कर लिए जाने पर भी भारत देश के सौभाग्य से महाराष्ट्र भूमण्डल के आखण्डल (इन्द्र) सकुशल यहाँ लौट आये हैं। अतः इस मङ्गल समय अवसर पर आप लोगों को उदासीन नहीं होना चाहिये।

रघुवीर सिंह की सारगर्भित, उपदेशपूर्ण, व्याकुलता रहित, धैर्य-सम्पन्न, कोमल तथा निर्मल वाणी सुन कर उसके साधुवाद में परवश सब लोगों ने परमानन्द सदोह से प्रवाहित होने वाले अश्रुबिन्दु समूह से अपने शरीर को प्रक्षालित कर लिया। तत्पश्चात् कुछ समय तक उन सबका परस्पर विविध वार्तालाप हुआ। जिस आलाप क्रम में पद-पद में कण्ठावरोध, पद-पद में अश्रु धारा, पद-पद में रोमाञ्च, पद-पद में दीर्घ श्वास, पद पद

भङ्गः, पदे पदे दीर्घनिश्वासः, पदे पदे वेपथुः, पदे पदे च वैकल्यम्। कस्तानालापान् अनुवदितुं पारयेत्? को वा तान् कल्पित-कम्पया अविरल गलत्-साञ्जन-वारि-धारया चटुलित-चञ्चु-पुटया, लेखन्या लिखितुमभिमन्येत?

अथ वीरेन्द्रसिंहं सम्बोध्य गणेशशास्त्रिणा कथितम्—

वीरवर! फलितं भवतस्तपोभिः, तदधुना यथाविधि व्रतं समाप्य ब्रह्मचारिवेषं विहाय पुनः राजवेषमासादयतु भवान्। तावत्तत्कुटीरनिवासिभिः सर्वैरपि बटुभिरेवमेवमिति यौगपद्येनोक्त्वा "साध्यतां साध्यताम्" इति गणेशशास्त्रिणा समाज्ञप्तैरुत्थाप्य, तदुक्त-प्रकारेण सामग्री साधनमारब्धम्।

---

कणगणेन। क्षालयाम्बभूवुः = धावयामासुः।

यौगपद्येन = समकालम्। साध्यताम् = सम्पाद्यताम्। समाज्ञप्तैः = समादिष्टैः। सामग्रीसाधनम् = वस्तुव्रजसम्पादनम्।

---

में कम्पन और पद पद में वैकल्य हुये थे उसका वर्णन करने में कौन समर्थ हो सकता है। और कौन सा व्यक्ति कम्पित होने वाली, सतत अञ्जन पूर्ण वारिधारा बहाने वाली तथा थरथराती चञ्चुपुट वाली लेखनी से उसे लिख ही सकता है।

तदनन्तर वीरेन्द्र सिंह को सम्बोधित कर गणेश शास्त्री जी ने कहा—

वीरवर! आपके तप सफल हो गये। अतः अब आप अपने व्रत की विधि पूर्वक समाप्ति कर ब्रह्मचारि वेश का परित्याग करें और क्षत्रिय का वेष धारण करें। तदनन्तर उस कुटीर में निवास करने वाले सब ब्रह्मचारी एक ही साथ "जी हाँ, जी हाँ" इस प्रकार का शब्दोच्चारण कर "तैयारी कीजिए, तैयारी कीजिए" इस प्रकार की गणेश शास्त्री की आज्ञा पाकर उन्हीं के द्वारा निर्दिष्ट रीति से सामग्री जुटाने में लग गये।

तावद्वायुवेगेन समुपाविष्टत तत्र कश्चन अश्वारोहः। तं च स्वेद-स्वेद-दुर्दिन-स्नातं त्वरित-श्वास-प्रश्वास तादृशेनैव सैन्धवेन प्रापितमालोक्य यावत्किमिति-किमित्यापृष्टमखिलैः तावत् स समुवाच-'श्रुतं वीर-रघुवीरसिंहः समायात'-इति।

तदाकर्ण्य सपदि रघुवीरसिंहेनोक्तम्—आम्, एषोऽस्मि, कः कुशल-वृत्तान्तः?

स उवाच—भगवतो महाराष्ट्र-राजमाता भवन्तमत्राऽऽगतं श्रुतवतीति गलज्जलाभ्यां नयनाभ्यां भवतः पन्थानमीक्षते।

श्रुत्वैवैतत्प्रणम्य पितरं पुरोहितञ्च रघुवीरः समुत्थाय निजमश्वमारूढः।

---

तादृशेनैव = स्वेदस्नातेन त्वरितश्वासेन च। प्रापितम्=लम्भितम्। अखिलैः = सकलैः।

गलज्जलाभ्याम् = निपतद्वारिभ्याम्।

---

उसी बीच वायु की तरह द्रुत गति से वहाँ एक अश्वारोही आ पहुँचा। परिश्रम जन्य स्वेदात्मक दुर्दिन (अतिवृष्टि) से स्नान किए हुए, शीघ्र श्वास-प्रश्वास लेते हुये तथा उसी प्रकार के ( परिश्रमजन्य दुर्दिन से स्नान किये हुये एवम् शीघ्र श्वास-प्रश्वास लेने वाले ) अश्व द्वारा वहाँ लाये गये उस अश्वारोही से जब तक लोग "क्या बात है ? क्या बात है ?" यह पूछने ही वाले थे तब तक उसने स्वयम् कहा—मैंने सुना है कि वीर रघुवीर सिंह आ गये हैं !

उसकी बात सुन कर रघुवीर सिंह ने तत्क्षण ही कहा—हाँ हाँ, मैं आ गया। कहिए क्या समाचार है ?

अश्वारोही ने उत्तर दिया—आपके यहाँ लौट आने की बात सुन कर सम्माननीया महाराष्ट्र राजमाता अश्रु प्रवाह करती आँखों से आपका रास्ता देख रही हैं।

उक्त बात सुनते ही रघुवीर सिंह अपने पिता तथा पुरोहित को प्रणाम कर अपने घोड़े पर सवार हो गया।

स च सादी स्वेङ्गितमनुसृत्य, केनापि बटुना समानीतमपरमश्वमारुह्य, एतमार्द्रपृष्ठीकरणाय तेषां समर्प्य, रघुवीरमनुचचाल। पश्यत्स्वेव च सर्वेषु, तौ खुराग्र शारद-घन-पटलमिव रेणुका-राशिमुद्गिरन्तौ, प्रलम्ब-पुच्छौ, आयत-ग्रीवौ, समीरण ससरण-सस्तब्ध-कण्ठकेशौ, सप्तसप्ति-सप्तिदर्पं दूरीकर्तुमिव विद्रुतौ, अङ्गार-परिपूर्णामिव भुवमुत्फालमुत्फाल पलमेकं स्पृशन्तौ, वाजिनौ चाल

स्वेङ्गितम् = स्वचेष्टितम्। अनुसृत्य = विचार्य स्वीकृत्य च। एतम् = आगमन एव कृत श्रमम्। आर्द्रपृष्ठीकरणाय = क्लिन्नपृष्ठशान्त्यादनाय। अनुचचाल = अनुससार। शारदघनपटलमिव = शरन्मेघसमूहमिव। रेणुकाराशिम् = धूलिनिकरम्। उद्गिरन्तौ = उद्वमन्तौ। समीरवत् = वायुवत्, ससरणेन = वेगगमनेन, सस्तब्धाः कण्ठकेशाः, ययोस्तौ। सप्तसप्तिः = सूर्यः, तस्य सप्तीनाम् = अश्वानाम्, दर्पम् = अभिमानम्। विद्रुतौ = पलायितौ। अङ्गारेण = वह्निखण्डेन, परिपूर्णामिव = परितो व्याप्तामिव। उत्फालमुत्फालम् – कूर्दित्वा कूर्दित्वा। पलम् = दण्डषष्टि

वह घुड़सवार भी अपने इङ्गित के अनुसार किसी ब्रह्मचारी द्वारा लाए गए अन्य अश्व पर आरूढ हो कर तथा अपने पूर्व अश्व को विश्राम देने के लिये उन ब्रह्मचारियों के हाथों समर्पित कर रघुवीर सिंह के पीछे चला। सबके देखते देखते ही वे दोनों शरत्कालीन मेघपटल की तरह धूलिपटल को अपने खुरों के अग्र भाग से उड़ाते हुये, लम्बी पूँछ वाले विशाल गरदन वाले, वायुवत् द्रुतगमनशील होने के कारण गतिहीन कण्ठप्रदेशस्थ केशवाले (यदि वेग में कमी तथा तारतम्य होता है तो चलते समय वायु के आघात में तारतम्य हो जाता है और इसलिये बाल फरफराते रहते हैं, परन्तु वेग में एकरूपता होने पर वायु के आघात में भी एकरूपता रहती है और इसलिये उस दशा में वायु के आघात से पीछे को ओर झुके बाल गतिशून्य अर्थात् कम्पनशून्य प्रतीत होते हैं), सूर्य के घोड़ों के मानमर्दन के लिये दौड़ते हुए तथा पृथिवी को अङ्गारपूर्ण-सा मानकर कूद-कूदकर पलमात्र

यन्तौ सर्जाऽर्जुन-भूर्ज-खर्जूर-वने निलिल्याते।

गणेशशास्त्री तु सहर्षवर्षं वीरमाशीराशिभिरभिनन्द्य, विधि-पूर्वं व्रतोत्सर्गं कर्म निर्वर्त्य, चिर-प्रवृद्धान् रूक्षान् केशान् वाप-यित्वा उद्वर्त्य, अभ्यञ्ज्य, स्नापयित्वा, नवाम्बराणि परिधाप्य, देवान् ब्राह्मणान् प्रणमय्य महोत्सवमकारयत्।

तावदवितर्कितसमागमः समुपाविशदेको जयपुरनगरात् सादी। स च जयपुराधीश्वर-श्रीजयसिंह-महाराजार्पित पत्रमेकं वीरेन्द्रसिंहायार्पयत्। स च सुवर्ण-वर्णाङ्कितं विविध-वर्ण-वर्ण-नीय कुसुम-माला-चित्र-विचित्र प्रावरणमपसार्य्य, तादृक्षैरेव

भागम्। 'कालाध्वनोरि'ति द्वितीया, निलिल्याते = लीनौ बभूवतुः।

व्रतोत्सर्गम् = व्रतसमाप्तौ क्रियमाण कर्म। निर्वर्त्य = कारयित्वा। रूक्षान् = अचिक्कणान्, तैलाद्यसंसर्गित्वात्। वापयित्वा = कर्तयित्वा। उद्वर्त्य = उद्वर्तनमनुलिप्य। अभ्यञ्ज्य = तैलं समर्द्य। नवाम्बराणि = नूतनवासांसि।

अवितर्कितसमागमः = अचिन्तितागमनः। समुपाविशत = समुपावि-शत्। सुवर्णवर्णाङ्कितम् = हैरण्यवर्णभूषितम्। विविधवर्णवर्णनीयेन = अनेकरङ्गरञ्जितेन, कुसुममालाचित्रेण, विचित्रम् = नानारूपम्।

के लिये उस पर पैर रखनेवाले घोड़ों को हाँकते हुए सर्ज, अर्जुन, भूर्ज तथा खजूर के वन में विलीन हो गये।

इधर गणेशशास्त्रीजी ने हर्षप्रवाह के साथ वीरेन्द्रसिंह का आशीर्वाद से अभिनन्दन कर विधिपूर्वक व्रतसमाप्तिकालिक कृत्य कराकर, चिरकाल से बढ़े रूखे बाल कटाकर, उबटन तथा तेल लगवाकर, स्नान कराकर, नये वस्त्र पहनवाकर एवं देवों तथा ब्राह्मणों को प्रणाम कराकर बहुत बड़ा उत्सव मनवाया।

उसी बीच जयपुर से एक घुड़सवार वहाँ आ पहुँचा जिसके आने के बारे में किसी ने पहले सोचा भी नहीं था। उसने जयपुरमहाराज जयसिंह

जाम्बूनदाक्षरैर्व्याप्तं पत्रं निस्सार्य पठनाय गणेश-हस्ते आर्पयत्। स तु निपुणमवलोक्यैवमपठत्—

"स्वस्ति श्रीदिगन्त-दन्त-दन्तुरित-कीर्ति-कौमुदी-धवलित-वसुधातल-राजपुत्रदेश-चूडामणीभूत-जयपुरप्रदेश- सामन्त-मण्डली मस्तक-मण्डन-मण्डित-पादारविन्दो जयपुराधीश साशीराशि सूचयति श्रीवीरेन्द्रसिंह यद्—

भवाननुक्त्वैवास्मान् कुतोऽपि प्रस्थितः, अन्वेषणैरपि च न लब्ध —इति चिरमन्वभूम चिन्ताकलापम्। इतस्तु भवत कुशल-

प्रावरणम् = पत्राच्छादनकम्। "लिफाफा" इति हिन्दी। जाम्बूनदाक्षरैः = सुवर्णवर्णैः। व्याप्तम् = युतम्। आर्पयत् = अदात्।

स्वस्ति = कल्याणम्। स्वस्तिश्रीत्यारभ्य पत्रलेखनशैली प्राचनी। दिगन्तानाम् - हरिदन्तरालानाम्, दन्तैः = दशनैः, तदुपलक्षितैर्मुखैरिति यावत्, दन्तुरितया=गर्भीकृतया,व्याप्तयेत्यर्थः,कीर्तिकौमुद्या=यशश्चन्द्रिकया, धवलितम् = श्वेतितम्, वसुधातलं यस्य, तादृशो यो राजपुत्रदेश = राजपुत्रायतप्रदेश, तच्चूडामणीभूतः = तच्छेखररत्नीभूत., यो जयपुर-प्रदेशः, तस्य सामन्तमण्डलीनाम् = माण्डलिकौघानाम्, मस्तक-मण्डनै = शिरोभूषणै मण्डितम् = भूषितम्, पादारविन्द यस्यैवम्भूतः, साशीराशि = अनेकाशीर्वादपुरस्सरम्। क्रियावि० सूचयति = बोधयति।

अनुक्त्वैव = अकथयित्वैव। चिन्ताकलापम् = चिन्तनव्रातम्। अव-

द्वारा भेजा गया एक पत्र वीरेन्द्रसिंह के हाथ में दिया। सुनहले अक्षरों से अङ्कित रङ्गबिरङ्गे पुष्पमाला चित्रादि से विभूषित लिफाफे को फाड़कर सुनहले अक्षरों से ही व्याप्त पत्र को उससे निकालकर वीरेन्द्रसिंह ने पढ़ने के लिये गणेशशास्त्री के हाथ में दे दिया। अच्छी तरह उस पत्र को देखकर गणेशशास्त्री ने उसे पढ़ा—

"स्वस्ति श्री दिग्दिगन्त में व्याप्त कीर्ति कौमुदी से वसुधातल को उज्ज्वल बनानेवाले, राजपुताने के शिरोमणि जयपुर प्रदेश के सामन्तों की मण्डली के मस्तकों के मुकुटों से विभूषित पादारविन्दवाले जयपुर महाराज आशीर्वादपूर्वक वीरेन्द्रसिंह को सूचित कर रहे हैं आप जो हम से कुछ कहे बिना

मवगत्य प्रसीदामः। मन्महे कुशली कुमाररामसिंहोऽप्युपलब्धः। इतस्त्वखिलाऽपि भवतः सम्पत् सुरक्षिताऽस्ति, नियत-व्यय-माहात्म्यात् कोषोऽपि सुप्रवृद्धोऽस्ति। शीर्णानि जीर्णान्यपि च भवतो निवास-भवनानि नूतनीकृतानि सन्ति। तत् समागम्यताम्। चिर प्रवृद्ध-तृष्णा सुखाक्रियतां स्वप्रजा। सपदस्माभिरश्वमेधयज्ञ-महोत्सवः करिष्यते।

सर्वेऽप्यस्मद्बन्धुजना समयेऽस्मिन् समुपस्थास्यन्ते। आशास्महे सकुमारो भवानप्यागत्य सर्वान् बन्धूनानन्दयिष्यति, स्वयञ्च महोत्सव साक्षात्कारेणातुलं मोदमासादयिष्यति।

---

गत्य = विज्ञाय। उपलब्धः = मिलितः। नियतस्य = निश्चितस्य व्ययस्य। माहात्म्यात् = कौशलात्। कोष = निधिः। शीर्णानि = विश्रृङ्खलितावयवानि। जीर्णानि = पुरातनानि, चिरप्रवृद्धतृष्णा = चिराय समेधिता स्पृहा यस्याः सा। "तृष्णे स्पृहा पिपासे द्वे" इत्यमरः। सुखाक्रियताम् = सानन्दा विधीयताम्। "सुखप्रियादानुलोम्ये" इति डाच्।

---

ही यहाँ से कहीं चले गये और खोज कराने पर भी मिले नहीं इससे हम लोग चिरकाल से चिन्तित थे। अब आपका कुशल जानकर हम लोग बहुत प्रसन्न हुए हैं। समझते हैं कि सकुशल कुमार रामसिंह भी मिल चुका है। आपकी सारी सम्पत्ति यहाँ सुरक्षित है एव नियमित व्यय के प्रभाव से कोश भी बहुत बढ चुका है। आपके जीर्ण शीर्ण वास-भवन भी नये बना दिये जा चुके हैं। अत अब आप यहाँ आ जायें। चिरकाल से प्रजा में आपके दर्शन की तृष्णा को शान्त कर अपनी प्रजा को सुखी बनायें। शीघ्र ही हम लोग अश्वमेध यज्ञ के अनुष्ठान महोत्सव का प्रारम्भ करनेवाले हैं।

इस शुभावसर पर हमारे सभी बन्धु-बान्धव उपस्थित होंगे। हम लोग आशा करते हैं कि आप भी कुमार रामसिंह के साथ यहाँ उपस्थित होकर अपने बन्धुओं को आनन्दित करेंगे तथा स्वयम् भी इस महोत्सव के अवलोकन से अत्यन्त प्रमोद का अनुभव करेंगे।

कुमार-रामसिंहस्य सुक्षत्रियोचितं पराक्रमं सौशील्यञ्चावलोक्य तुष्यामस्तमाम् । एतस्मै सुबहुल-भूभाग-वितरण-पुरस्सरं मण्डलेश्वरता पर्य्यवसायि राजपदमर्प्पयामः, तत्सूचकमिदं सविवरणमपरमाज्ञापत्रमेतेन सहचरितमस्ति । एतदपि स्वीकृत्य सकुमारस्याऽऽगमनेन भूषणीयोऽयं देशः"—इति ।

तदाकर्ण्य सर्वेऽप्यत्यन्तं जहृषुः । तदपरमपि राजमुद्राङ्कितं प्रसार्य्य 'एवमेवम्' इति श्रावितम् । तदाकर्ण्य चाखिलाः-"अहो ! औदार्य्यं महाराजजयसिंहस्य ! अहो ! वैचित्री दैवघटनायाः !! युक्तमिदं यथोचितमिदं रामसिंहाचारस्य !! प्रत्यक्षाण्येतानि फलानि वीरेन्द्रसिंहस्य नैष्ठिकतपसाम् !!"—इति सामोदं व्याजहुः ।

पराक्रमम् = बलम् । सौशील्यम् = स्वभावम् । तुष्यामस्तमाम् = अतितरां प्रसीदामः । मण्डलेश्वरतायाम् = माण्डलिकतायाम् । पर्य्यवसायि = परिणतम् । राजपदम् = राजा इति उपाधिम् । सविवरणम् = सविशकलनम् । एतत् = आज्ञापत्रम् । भूषणीयः = मण्डयितव्यः ।
औदार्यम् = विशालहृदयता । वैचित्री = विचित्रता ।

कुमार रामसिंह के सुक्षत्रियानुरूप पराक्रम तथा विनय को देखकर हम लोग अत्यन्त प्रसन्नता का अनुभव कर रहे हैं । हम कुमार रामसिंह को बहुत विशाल भूभाग देने के साथ-साथ मण्डलेश्वर के पद पर भी नियुक्त कर रहे हैं और इस नियुक्ति का प्रमापक विवरण सहित यह दूसरा नियुक्ति पत्र भी साथ लगा हुआ है । इस नियुक्ति का भी स्वीकार तथा सकुमार इस देश में अपने शुभागमन से इस देश को आप विभूषित करें ।"

उस पत्र को सुनकर सब अत्यन्त प्रसन्न हो उठे । तत्पश्चात् राजा का मुहर लगा नियुक्तिपत्र भी सबको पढ़कर सुनाया गया । उस पत्र को सुनकर भी सब लोग "अहो ! महाराज जयसिंह की कैसी उदारता है । अहो ! दैव की घटना की कैसी विचित्रता है । रामसिंह के व्यवहार के लिये यह उपहार उचित ही है । वीरेन्द्रसिंह को नियमपूर्ण तपश्चर्या के ये प्रत्यक्ष फल हैं ।" इस प्रकार सानन्द कहने लगे ।

गणेशशास्त्री तु—"अश्वमुन्मोचय, अत्रैव निवस दिनमेकम्, श्वः प्राप्तपत्रोत्तरः स्वदेशं प्रस्थास्यसे"—इति सादिनमुदीर्य्य प्रस्तुताभिर्व्यञ्जन-सामग्रीभिर्ब्राह्मणान् भोजयितुमुदस्थात्।

अथापराह्णे प्रताप-दुर्गाद् गव्यूति द्वयं यावत् सुगन्धित-सलिलैरासिक्तो मार्गः। अभितः पन्थानं रम्भा स्तम्भाः सम्भाविताः। कुङ्कुम चर्चिता अम्भ पूर्णाः कुम्भाः स्थापिताः। अशोक-किसलय-माला आलम्बिताः। काश्मीर राग-रञ्जिता ध्वजा आरोपिताः। इतः पश्चाच्च सन्तस्थे शोणित-शीर्षण्य-शीर्षाणां सधनुर्बाणानां कलित-वारबाणानां कावचिकानां पङ्क्तिः।

ततः पश्चाच्चापरोऽवतस्थे व्यूढ-कङ्कटानामास्फोटित घोटक-

---

उभयतः पन्थानम् = मार्गस्य समन्तात्। "अभितः परितः" इत्यादिना द्वितीया। संभाविताः = स्थापिताः। कुङ्कुमचर्चिताः = नागकेशरसम्मर्दिताः। काश्मीररागेण = केशररङ्गेण, रञ्जिताः। शोणितशीर्षण्यशीर्षाणाम् = रक्तवर्णशिरस्त्रमस्तकानाम्। कलितवारबाणानाम् = धारितकञ्चुकानाम्। कावचिकानाम् = वर्मधारिसैनिकानाम्। पङ्क्ति = श्रेणी।

व्यूढकङ्कटानाम् = धारितकवचानाम्। "उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्" इत्यमर। आस्फोटित घोटक सटानाम् = उत्साहवर्द्ध-

---

गणेशशास्त्री जी तो "घोड़ा खोलो, एक दिन यहीं रुक जाओ, कल पत्र का उत्तर लेकर यहाँ से अपने देश को लौट जाना" यह बात उस पत्रवाहक घुड़सवार से कहकर प्रस्तुत खाद्य पदार्थों से ब्राह्मणों को खिलाने के लिये उठ चले।

तत्पश्चात् अपराह्णकाल में प्रतापदुर्ग से लेकर चार कोशों की दूरी तक का राजमार्ग सुगन्धित जल सींच दिया गया। राजमार्ग के दोनों ओर केले के खम्भ खड़े कर दिये गये। कुङ्कुमचर्चित जलपूर्ण कलश रखे गये। अशोक पल्लवों का समूह लटका दिया गया। केसरिया रङ्ग में रङ्गी ध्वजायें खड़ी कर दी गईं। उनके पीछे लाल रङ्ग की पगड़ीवाले धनुषबाणयुक्त कञ्चुक सम्पन्न कवचधारी सैनिकों की पङ्क्ति खड़ी कर दी गई। उसके भी पीछे

सटानां मौर्वी-घात-सङ्घट्ट-किण-विकट-मणिबन्ध-संसर्पि-हाटक-कटकानां घोर-घन-विपाटकानां प्रत्यर्थिकूर्च्चोत्पाटकानां सादिभटानां श्रेणी । प्रतिघोटक-विंशतिकान्तराले च विविध-मण्डन-मण्डित-शुण्डादण्डाः मौक्तिक-स्तबक-चोचुम्ब्यमान-दान-वारिधाराऽऽसार-क्षालित-कपोलाः वमथु परिषिक्त-पार्श्व-परिवर्ति-तुरङ्गाऽऽरोहाङ्ग-निचोलाः नीलाद्रि सानु-मञ्जुला कुञ्जरा उपस्थापिताः; यान् कुसुम-निचयाऽऽकीर्ण-पात्र हस्ताः बहवो ब्राह्मणबटवः समारूढा ।

नाय विधोधित हयकेशराणाम् । मौर्व्याः = ज्यायाः, घातसङ्घट्टेन = ताडन-सघर्षेण य किणः = व्रण , तेन विकटे = निम्नोन्नते, मणिबन्धे = करमे, ससर्पीणि, हाटककटकानि = सुवर्णवलयानि येषा तेषाम् । घोरघनविपाटकानाम् = सान्द्रमेघभेदयानाम् । विविधमण्डनैः मण्डिता , शुण्डादण्डा येषा ते । मौक्तिकस्तबकैः=मणिगुच्छैः, चोचुम्ब्यमानाया=भृश स्पृश्यमानाया, दानवारिधाराया =मदजलप्रवाहस्य, आसारैः, क्षालिताः कपोला येषा ते । वमथुपरिषिक्ता = करशीकरसिक्ताः; "वमथुः करशीकरः" इत्यमरः । पार्श्वपरिवर्त्तिनाम् = समीपस्थानाम्, तुरङ्गारोहाणाम् = सादिनाम्, अङ्गनिचोलाः = शरीरकञ्चुकानि यैस्ते । नीलाद्रिसानु-मञ्जुलाः = नीलगिरि-शृङ्गसुन्दराः । कुञ्जराः = करिणः । कुसुमनिचयैः, आकीर्णानि = व्याप्तानि, पात्राणि, हस्ते येषा तादृशाः । ब्राह्मणबटव =

कवच धारण करनेवाले, घोड़ों के केशर का आस्फोटन करनेवाले, धनुष की प्रत्यञ्चा के आघात से उत्पन्न घट्ठों से भयङ्कर एवम् सुवर्णमय कङ्गनों से सुशोभित कलाइयोंवाले, घनी घनघटा को विदीर्ण कर देनेवाले और शत्रुओं की दाढ़ी उपाड़ने में निपुण घुड़सवारों की कतार खड़ी हुई थी। प्रत्येक बीस घोड़े के बीच विविध आभूषणों से अलङ्कृत सूँड़वाले, मस्तकस्थित गज-मुक्ताओं के स्तवक से अत्यन्त चुम्बित होनेवाले मद जलप्रवाह से प्रक्षालित कपोलोंवाले, सूँड़ से फेंके गये जलकणों द्वारा पार्श्वस्थित अश्वारोहियों के शरीर कञ्चुकों को सिक्त कर देनेवाले, नीलगिरि के शृङ्ग के समान सुन्दर गजराज खड़े कर दिये गये थे, जिनपर फूलभरे पात्रों को हाथ में लिये

प्रतिगज-द्वयानन्तरं च दौन्दुभिक वैणविक-वैणिक मार्दङ्गिक-मौरजिक-
पाणिघैरारूढा भेरी भाराक्रान्ता अपरे द्विरदा विन्यस्ता ।

७ अथ वारुणी ससर्गाधिक शोणे लज्जयेव पाश्चात्य पर्वतपङ्क्ति-
जवनिकाऽन्तर्निर्लीने चण्डमरीचिमण्डले, चिर-कर-स्पर्शोदीर्ण-
स्वेद-स्नात-वदनेषु पटान्त सङ्घर्षाधिक-ताम्र कान्तिषु वीरेषु, पर-

---

विप्रब्रह्मचारिण । दौन्दुभिकाः = दुन्दुभिवादनशीला., वैणविका =
वेणुवादनशीला, वैणिका = वीणावादनशीलाः, मार्दङ्गिका. = मृदङ्ग-
वादनशीलाः, मौरजिकाः = मुरजवादनशीला., पाणि घ्नन्तीति पाणिघा =
पाणिताडकाः, परस्परद्वन्द्व , ते । भेरीभारेण = दुन्दुभिभारेण, आक्रान्ताः=
नम्रतामिव गताः । द्विरदा = हस्तिनः ।

वारुणीससर्गेण = पश्चिमासम्पर्केण, अधिकशोणे = अतिरक्ते ।
लज्जयेव = त्रपयेवेत्युत्प्रेक्षा । वारुणी- (सुरा) ससर्गात् त्रपा । पाश्चात्यप-
र्वतपङ्क्तिरेव = पश्चिमस्थितगिरिश्रेण्येव, जवनिका = प्रतिसीरा, तस्याः,
अन्तः = अन्तराले । निर्लीने = अन्तर्हिते । चण्डमरीचिमण्डले =
भास्करबिम्बे । चिरकरस्पर्शेन = दीर्घकालकिरणसंसर्गेण, उदीर्णैः = उद्गतैः,
स्वेदैः = घर्मजलकणैः, स्नातवदनेषु = क्षालिताननेषु । पटान्तसङ्घर्षण =
वसनकोणसम्मर्दन, अधिकताम्रकान्तिषु = अतितरां शोणच्छविषु ।

---

ब्राह्मण बटुक चढ हुए थे । प्रत्येक दो गजराजों के बीच दुन्दुभीवादक,
वंशीवादक, वीणावादक, मृदंगवादक, मुरजवादक तथा ताली बजानेवालों
द्वारा आरूढ भेरी के भार से लदे अन्य गजराज भी विन्यस्त थे ।

७ तदनन्तर जब वारुणी (पश्चिम दिशा, पक्षमें–सुरामें) के सम्पर्कसे अत्यन्त
रक्त और (वारुणी=सुरा के पान की) लज्जा से ही मानो पश्चिम दिग्वस्थित
पर्वतश्रेणीरूप परदे के भीतर सूर्यमण्डल विलीन हो चुका था, जब वीरों की
मण्डली चिरकाल से सूर्यकिरण के सम्पर्क से टपकते पसीने से धुले मुखवाले
तथा वस्त्र के किनारे से बारबार पसीना पोंछने के कारण अधिक ताम्रवर्ण हो
चुके थे और सैकड़ों वाद्ययन्त्रों के वादन से उत्पन्न तारध्वनियों से दिग्दिगन्त

इशत वादित्र वादनोद्भूत महाध्वनि बधिरीकृतेषु दिगन्तरालेषु सकलै-रुद्ग्रीवैर्विस्मृतात्मभिर्निर्निमेष नयनैर्निपीयमान सहस्र गुण-यन् महाराष्ट्र वीराणामुत्साहम्, पुनरुज्जीवयन् चिर विरह वि धुरामात्ममात्र शरण जन गात्र यष्टिम्, दुर्दिन सशोषित भारत सौभाग्यस्य पुनरभिवर्षणेन हर्षमयमपर दुर्दिन विरचयन्, दिशोऽपि हासयन्, पृथिवीमपि पुलकयन्, आकाशमपि विकाशयन्, जग त्प्राणमपि प्राणयन्, द्रुम सन्दोहमप्यानन्दयन्, ब्रह्मानन्द-सोद-

---

वीरेषु = भटेषु। परश्शतानाम् = असङ्ख्यातानाम्, वादित्रा णाम् = वाद्यानाम् वादनात्, उद्भूतैः = सञ्जातैः महाध्वनिभिः, बधिरीकृतेषु। दिगन्तरालेषु = हरिदभ्यन्तरेषु। उद्ग्रीवैः = उत्कन्धरैः। निपीयमान = चक्षुर्गोचरीक्रियमाण.। पुनरुज्जीवयन् = मुहुरुत्प्राणयन्। आत्ममात्रशरणानाम् = स्वैकाश्रितानाम्, जनानाम्, गात्रयष्टिम् = यष्टिसदृश कृश शरीरम्। दुर्दिनेन = दुस्समयेन सशोषितस्य, भारतसौभाग्य = हैन्दवैश्वर्यस्य। पुन. = मुहु। अभिवर्षणेन = वृष्ट्या। दुर्दिनम् = मेघच्छन्नदिनम्। सततहर्षपूर्णम्। विरचयन् = सम्पादयन्। हासयन् = निर्मलीकुर्वन्। पुलकयन् = रोमाञ्चयन्। विकाशयन् = दीपयन्। जगत्प्राणम् = समीरणम्। प्राणयन् = समीरयन्। द्रुमसन्दोहम् = वृक्षव्रजम्। आनन्दयन् =

---

गूँज रहा था उस समय अपनी सुध भूलकर गले उठाकर देखनेवाले महाराष्ट्र-देशवासियोंके निमेषपात रहित नयनोंका विषय बने हुये,मराठे वीरोंके उत्साह को हजारगुना बढ़ाते हुए, अपने ऐकान्तिक आश्रित व्यक्तियों के चिरविरह खिन्न शरीरों को पुनरुज्जीवित करते हुए, दु समय दुर्दिन से अभिभूत भारत-देश सौभाग्य के पुनर्वर्षण द्वारा हर्षमय दुर्दिनान्तर का सङ्घटन करते हुए, दिशाओं को भी हँसाते हुए, पृथिवी को भी पुलकित करते हुए, आकाश को भी विकसित करते हुए, जग प्राण वायु को भी अनुप्राणित करते हुए, वृक्ष समूह को भी प्रसन्न बनाते हुए, ब्रह्मानन्द सहोदर से, सुषुप्त्यवस्था के अनु

र्य्यस्येव, सुषुप्ति-स्वादन-स्पर्द्धिन इव, साहित्य-रस-रसन समुत्थितस्येव, कस्यचिल्लोकोत्तर-महानन्दस्य निरुपम परम परमप्रवाह पूर-परम्पराभि- प्रजा- प्लावयन्, आशीर्भिरभिनन्द्यमानः, कुसुमैराकीर्य्यमाण, जयध्वनिभिरुन्मुखीक्रियमाणः, स्तूयमानः, गीयमानः वर्ण्यमानश्च सत्पथेऽस्मिन् न्यविशत महाराष्ट्र-चक्रवर्ती।

अग्रतोऽस्याश्वं नर्त्तयन्त्रः प्रचलिता- शतशोऽश्वारोहा वीराः। ततश्च विकोश कृपाण-पाणयः सहस्रशः पादातिका। ततोऽपि भुशुण्डी-कराणा वीर-वराणां पङ्क्ति-परम्परा, ततोऽपि बाहुमूलाऽऽ-

हर्षयन्। ब्रह्मानन्दस्य, सोदर्यस्येव = समस्येव, अभिन्नस्येवेति यावत्। एवमादिपूत्प्रेक्षा। सुषुप्तेः = तृतीयावस्थायाः, प्रपञ्चावबोधशून्यतात्मिकाया, स्वादनेन = रसनेन, स्पर्धिन इव = प्रतिद्वद्विन इव। साहित्यरसस्य, रसनेन = आस्वादनेन, समुत्थितस्येव = समुद्भूतस्येव। लोकोत्तरस्य = लौकिकानन्दव्यतिरेकिण, महानन्दस्य = निरुपमहर्षस्य। निरुपमः = उपमारहितः, परा, मा = शोभा यस्मिन्नेवम्भूत परमप्रवाहपूरः = अत्युत्कृष्टधारापूर, तत्परम्पराभिः = तच्छ्रेणीभिः। प्लावयन् = मज्जयन्। स्तूयमानः = स्तुतिगोचरीक्रियमाण-। न्यविशत = प्रविष्टः। "नेर्विशः" इत्यात्मनेपदम्।

अग्रतः = पुरतः। विकोशकृपाणपाणयः = नग्नासिहस्ताः। पादातिकाः = पदातयः। भुशुण्डीकराणाम् = "बन्दूक" हस्तानाम्। बाहु-

भव के प्रतिस्पर्धी जैसे तथा साहित्य रसास्वादन से उद्भूत से एक लोकोत्तर महानन्द के निरुपम तथा सर्वातिशायी प्रवाहों से अपनी प्रजा को डुबोते हुए, श्रेष्ठ व्यक्तियों द्वारा आशीर्वाद से अभिनन्दित होते हुए, पुष्पवृष्टि से व्याप्त, जयध्वनि से उन्मुखीकृत, स्तुतियों का विषय बनते हुए, गीयमान यश के आश्रय होते हुए तथा वर्णन का विषय बनते हुए महाराष्ट्रचक्रवर्ती ने उस मार्ग में प्रवेश किया।

महाराष्ट्रराज के आगे अपने-अपने घोड़े को नचाते हुए सैकड़ों अश्वारोही वीर चल रहे थे। उनके पीछे खुले तलवारोंवाले हजारों

रोपित-भल्लिका-मतल्लिकानां मल्लतल्लजानामावलिपटलम् । तत. पश्चाच भूषण-सुरेश्वर-माल्यश्रीक-स्तन्यजीव-आन्यजीव गौरसिंह-श्यामसिंह-रघुवीरसिंहादिभि परिवृत, भारत भूमण्डलभागधेयम्. दाक्षिणात्य-वसुमती-वासव, वनीपकीकृतावनी-यवनी-समुदाय, धर्म धुरीणः, योध-बोध-पारीणः, महाराष्ट्र-मेदिनी-परिवृढो महाराज-शिवराजः।

हर्षवैव तारस्वरेण 'विजयतां महाराज' इत्याम्रेडयन्तो गगन विलोडयामासुरखिलाः। अभित पन्थान गजानारूढा विप्र

मूले, आरोपिता, भल्लिकामतल्लिका = प्रशस्ता कुन्ता यैस्तेषाम्। मल्लतल्लजानाम् = प्रशस्तभटानाम्। "प्रशंसावचनैश्च" इति मतल्लिका-तल्लजशब्दयो परनिपात । आवलिपटलम् = पङ्क्तिसमूहः । परिवृतः = परिलक्षितः। दाक्षिणात्यवसुमत्या, वासवः = इन्द्रः। वनीपकीकृतः = याचकीकृतः, "वनीपको याचनको मार्गणः" इत्यमरः, अवन्याः = पृथिव्याः, यवनीसमुदायः, येन सः । तत्पतीनां विध्वंसितत्वाद्याचनातिरिक्ता तासां जीविकैव नास्तीति भावः। धर्मधुरीणः = सनातनधर्मभारधारी। बोधे = परिज्ञाने। पारीण = पारगः।

पैदल वीर थे। उनके पीछे बन्दूकधारी वीरों की परम्परा थी और उसके भी पीछे कन्धे पर बड़े-बड़े बल्लम लिये योद्धाओं की मण्डली थी। उसके पीछे भूषण कवि, सुरेश्वर, माल्यश्रीक, स्तन्यजीव, आन्यजीव, गौरसिंह, श्यामसिंह तथा रघुवीरसिंह आदि के बीच भारतभूमि के सौभाग्य, दक्षिण देश की वसुधा के इन्द्र अवनीतल के यवनीसमूह को भिक्षुक या याचक बनानेवाले, धर्मधुरन्धर तथा युद्धविद्यानिपुण महाराष्ट्र की पृथिवी के अधिपति महाराज शिवाजी थे।

उन्हें देखते ही सब प्रेक्षकों द्वारा की गई उनकी विजयध्वनि से आकाश गूंज उठा। मार्ग दोनों तरफ गजारूढ़ ब्राह्मण बटुकों ने मकरन्द बिन्दुसन्दोह

वटवश्च मकरन्द–बिन्दु–सन्दोह–तुन्दिलानि महासौरभ–समाकृष्ट–परस्कोटि–रोलम्ब–कदम्बानि मोहित–सकल–जन–मनांसि सुमानि ववृषुः। वाद्य–नाद–प्रतिध्वनि व्याजेन विबुधा अपि वसुधाधिप-मेनं दिव्य-वाद्य-वादनैरिवाभिनन्दु। महासन्नाह–विविध–वाह–प्रवाहैः सञ्चङ्क्रम्यमाणा मोदेनेव चकम्पे वसुन्धरा। कुसुम-मरन्द-बिन्दुभिः स्नातः पुलकमिव समाससाद समीरणः। जयध्वनि–सन्तान–वितानैरोत–प्रोतः स्वयं जयशब्द-कोटिभिरिवाऽऽजुहाव

मकरन्दबिन्दूनाम् = पुष्परसपृषताम्, सन्दोहेन, तुन्दिलानि = भरितानि। महासौरभेण = अतिसौगन्ध्येन, समाकृष्टानि, परस्कोटीनि, रोलम्बकदम्बानि = द्विरेफव्राताः, यैस्तानि। परस्कोटि—इत्यत्र पारस्करादित्वात् प्राप्तसुट पदान्तत्वाभावात् विसर्गमध्यपाठः क्वापि विदुषा चिन्त्यः। मोहितसकलजनमनांसि=प्रसन्नीकृतनिखिलमानवस्वान्तानि। बहुव्रीहिः। सुमानि = प्रसूनानि। वाद्यनादानाम्, प्रतिध्वनेः = प्रतिनादस्य, व्याजेन = छद्मना। विबुधाः = देवाः। दिव्यवाद्यवादनैरिव = स्वर्गीय-मृदङ्गादिनादनैरिव उत्प्रेक्षा। महासन्नाहानाम्, विविधानाम्, वाहा-नाम् = घोटकानाम्, प्रवाहैः = यूथैः। सञ्चङ्क्रम्यमाणा = अतिवरा गम्यमाना। मोदेनेव = हर्षेणेव। कुसुममरन्दबिन्दुभिः = पुष्परस-पृषद्भिः। स्नातः = मिश्रः। पुलकम् = रोमाञ्चम्। ओतप्रोतः = विद्धा-नुविद्धः। आजुहाव = आकारयामास। सविकासः = विशालः।

से परिपुष्ट, उत्कट सुगन्धि से करोड़ों से भी अधिक भ्रमरों को आकृष्ट करने वाले तथा सज्जनों के मन को प्रमुदित करने वाले फूलों की वर्षा की। वाद्यन्त्रों की मधुरध्वनि की प्रतिध्वनि के छल से देवताओं ने भी मानों दिव्य वाद्यन्त्रों के मधुर वादन से ही उनका अभिवादन किया। विशाल एवम् विविध अश्वों के समूह के प्रचलन से वसुधा भी मानों हर्ष से ही कम्पित हो रही थी। पुष्पपराग की बिन्दुओं से मिश्रित वायु ने भी मानों रोमाञ्च प्राप्त कर लिया था। विजयध्वनि के प्रवाह के विस्तार से ओतप्रोत

सविकास आकाशः।

एवं क्रमेण सर्वानानन्दयन्, कुसुम-निचय भराक्रान्तमात्मानं मुहुर्मुहुरङ्ग स्फुरणैः सुमन-पातनैर्लघूकुर्वन्, अखर्वगन्धर्वखुराघातैर्धूलीभूयोद्गतया भुवाऽप्यालिङ्गयमानः,स्वदृग्द्वयोद्गतया आनन्द-सन्दोह-बाष्प-धारया अभिषिच्यमानः, सादी प्रतापदुर्गमाससाद देव ।

तत्र च परितः सर्वान् गण्ड शैलान् तरु-स्कन्धान् उन्नतभू भागान् दुर्ग प्रान्त-परिसर्युपत्यका दुर्गभित्तीश्च स्वावलोकनामोद

---

आकाशः = नभः। "पुस्याकाशविहायसी" इत्यमरः।

कुसुमनिचयभराक्रान्तम्=पुष्पसमूहभाराच्छन्नम् । अङ्गस्फुरणै = शरीरचालनै । सुमनसां = कुसुमानां स्वसमर्पितानाम्, पातनै = निरसनै लघूकुर्वन् = निर्भारीकुर्वन्। अखर्वाणाम्=अत्युन्नतानाम्, गन्धर्वाणाम् = हयानाम्, खुराघातै = शफसम्मर्दे, धूलीभूय = पांसुभूय । उद्गतया = उत्थितया। भुवाऽपि = पृथिव्याऽपि। आलिङ्गयमानः = आश्लिष्यः माण । अभिषिच्यमान = स्नाप्यमानः सन्। सादी=अश्वारोह, आससाद=प्राप।

गण्डशैलान् = स्थूलशैलावयवान् । स्वावलोकनामोदेन=स्वदर्शन

---

विशाल आकाश भी ऐसा लग रहा था मानों वह भी जय शब्दों से महाराष्ट्रराज का आवाहन कर रहा था।

उक्त रीति से सबको आनन्दित करते हुए, पुष्पसमूह के भार से लदे अपने शरीर को बारम्बार अङ्गों के कम्पन द्वारा पुष्पों के निपातन से हल्का बनाते हुए, अत्यन्त उन्नत अश्वों के खुराघात से धूलि बन कर उड़ती हुई पृथिवी द्वारा आलिङ्गित होते हुए तथा अपनी आँखों से प्रवाहित होती हुई अश्रुधारा से अभिषिक्त होते हुए अश्वारूढ महाराष्ट्रराज प्रताप दुर्ग के पास पहुँचे।

उस स्थान की सब तरफ उनके (महाराज के) अवलोकन से हुए आनन्दसन्दोह से परतन्त्र जन समुदाय से व्याप्त गण्डशैलों (भूकम्प या आँधी से नीचे गिराई गई बड़ी चट्टानों), वृक्ष की शाखाओं की सन्धियों

परवज्जन-समाकीर्णानेव समद्राक्षीत् ।

अथ तांस्तान् स्वदृक्पातेनैव सम्मान्य, सपल्लव-कलश-हस्तान् आशी-राशीन् गिरतो विप्रवरान् प्रणमन्नश्वादुदवीवरन्महाराजः। तत्रोपस्थितेष्वात्मीयेषु कांश्चिदालिङ्ग्य, कांश्चित् प्रणम्य, कांश्चिद् यथायोग्यमाशिष उक्त्वा, कांश्चिच्च कराग्रेण कराग्र एव गृहीत्वा, अपरान् कुशल प्रश्नैः सोत्साह-निरीक्षणैः स्नेह-वचनैश्च सन्तर्प्य, जननी स्मरणोद्भूतोद्भूत वाष्प-धारा-व्याकुल-लोचन-द्वयः पदे पदे

---

प्रसन्नतया, परवन्तः=पराधीनाः, ये जनाः, तैः । समाकीर्णान्=व्याप्तान् ।

सम्मान्य = सत्कृत्य । सपल्लवाः=सकिसलयाः, कलशाः=जलभरिता घटाः, हस्ते येषां तान् । गिरतः = कथयतः । प्रणमन् = नमस्कुर्वन् । उदवीवरत् = निम्नदेशे समागतः । वस्तुतस्त्ववातीतरदिति शोभनतर-मौदार्यविवक्षायाम् । यथायोग्यम् = यथानुरूपम् । कराग्रेण कराग्रे गृहीत्वेति साम्प्रतिकपाश्चात्यदेशीयनमनप्रकारः । जननीस्मरणात्=मात्राध्यानात्, उद्भूतोद्भूता = उन्नतीभूता, विपुलीभूतेति यावद्, या वाष्पधारा=

---

ऊँचे भूभागों, दुर्गपरिवर्ती उपत्यकाओं तथा दुर्ग की दीवारों को उन्होंने देखा ।

तत्पश्चात् उन व्यक्तियों को (उन पर) अपने दृष्टिपात से ही सम्मानित कर पल्लवयुक्त कलशों को हाथ में लिए आशीर्वाद प्रदान करने वाले ब्राह्मणों का अभिवादन करते हुए महाराज घोड़े से नीचे उतरे । उस स्थान पर उपस्थित आत्मीय व्यक्तियों में कुछ मित्रों का आलिङ्गन कर, कुछ गरीय व्यक्तियों का अभिवादन कर, कुछ कनीय व्यक्तियों को आशीर्वाद देकर, कुछ समवयस्क बन्धुओं से हाथ मिला कर तथा अन्य व्यक्तियों को कुशल प्रश्न, उत्साहपूर्ण निरीक्षण तथा प्रेमपूर्ण वचनों से सन्तुष्ट कर अपनी जननी के स्मरण से उमड़नेवाली अश्रुधारा से व्याकुल नेत्रद्वय वाले महाराज ने

प्रस्खलतेव प्रेमपरवता वपुषा सपदि दुर्गान्तः प्रविवेश।

× × ×

अन्येद्युः प्रातरेव कृत-सन्ध्यावन्दनादि-नित्यक्रियः, महाराजाऽऽगमन-महोत्सव-पराधीनानेक-सहस्र – सोपायन-प्रजा – परिवृत-प्रघाणस्य महाप्रासादस्य चन्द्रशालायामुपविष्टः, गौरसिंहमाऽऽहूय, सुरेश्वर-माल्यश्रीकादिभिः परिवृतः, स्वेङ्गितानुसारं स्तन्यजीवेनाऽऽनीतं पटखण्ड-परिवेष्टितं किञ्चन पत्रपटलं स्वनिकटे संस्थाप्यैवमालपत्।

---

अश्रुप्रवाहः, तया व्याकुलं लोचनद्वयं यस्य सः। प्रस्खलतेव = निपततेव, प्रेमपरवता = अनुरागाधीनेन।

× × ×

अन्येद्युः = परस्मिन् दिवसे। महाराजागमनमहोत्सवपराधीनाभिः = महाराजप्राप्तिप्रचुरहर्षवशाभि, अनेकसहस्राभिः = असङ्ख्याताभिः, सोपायनाभिः = देयवस्तुहस्ताभिः, परिवृतः = समाच्छन्नः, प्रघाणः = अलिन्दः, यस्य तादृशस्य। चन्द्रशालायाम् = शिरोगृहे। उपविष्टः = आसीनः। स्वेङ्गितानुसारम् = स्वचेष्टितानुकूल्म्। पत्रपटलम् = पत्रसमूहम्।

---

प्रेमपरवशता के कारण पद-पद में लड़खड़ाते शरीर से शीघ्र ही दुर्ग में प्रवेश किया।

× × ×

दूसरे दिन प्रातःकाल में ही सन्ध्यावन्दनादि नित्यकृत्य को सम्पन्न कर के उनके ( महाराज के ) आगमन महोत्सव में विवश अनेक सहस्र उपहार-समर्पक प्रजाओं से भरे चबूतरे वाले महान् प्रासाद की चन्द्रशाला (चौबारा) में बैठे, सुरेश्वर तथा माल्यश्रीक आदि से घिरे हुये महाराज गौरसिंह को बुलवा कर स्तन्यजीव द्वारा लाये गये कपड़े के टुकड़े में लपेटे हुये पत्रों को अपने पास रख कर बात करने लगे।

शिवराजः—प्रिय ! गौरसिंह ! चिरान्मां तोषयसि, प्राणानगणयन् मां प्राणयसि, सांसारिक-सुखानि असंस्मरन् सङ्कटकष्टानि सहसे इति असाधारणवन्धुं त्वां महाराष्ट्र-मण्डले मण्डलेश्वर-पद-दानेन सत्कर्तुं मे महानुत्साहः। तद् गृहाणेदमधिकार-पत्रम्, भुङ्क्ष्व भागमेकं महाराष्ट्र-भुवः।

गौरसिंहः—[ पत्रम् स्पृष्ट्वा, प्रणम्य ] महाराज ! श्रीमान् यवनोद्दण्ड-शुण्डादण्ड-गण्डि-मण्डलं प्रविश्यापि केसरीव कुशलेन निर्गत्य महाराष्ट्र-राजसिंहासनमाक्रम्य भारताभिजन-प्रजाः प्रजा इव पातुमारब्धवानिति किमितोऽप्यधिकं विश्वस्मिन्नपि विश्वस्मिन् अस्माना-

तोषयसि = प्रसादयसि। प्राणयसि = जीवनयसि। असंस्मरन् = अचिन्तयन्। सङ्कटकष्टानि = सङ्ग्रामदुःखानि। भागम् = अंशम्।

यवना एव, उद्दण्डाः = उच्छृङ्खलाः, शुण्डादण्डगण्डिनः = करिणः, तेषां मण्डलम् = समूहम्। शुण्डादण्डदेनाति हस्तिस्वार्थप्रवीतो गण्डिनर्थं-न्तानुधावन समदकपोलस्थलत्त्वात्कत्वेन सार्थक्यमाभनतीति विदुषा सन्धिः। केसरीव = मृगेन्द्र इव, भारताभिजनप्रजाः = हैन्दवमूलनिवासिप्रजाः। पातुम् = रक्षितुम्। विश्वस्मिन् = समस्ते। विश्वस्मिन् = संसारे। संसार-

शिवराज—प्रिय गौर सिंह ! तुम चिरकाल से मुझे प्रसन्न करते आ रहे हो, अपने प्राण की भी उपेक्षा कर मुझे जिलाते आ रहे हो और सांसारिक सुखों को भूल कर युद्धोचित दुःख का सहन कर रहे हो। अतः अपने असाधारण बन्धु तुम्हें महाराष्ट्र मण्डल में मण्डलेश्वर के पद पर नियुक्त कर तुम्हें सम्मानित करने का उत्साह मेरे मन में है। अत एव तुम यह अधिकार पत्र ले लो और महाराष्ट्र मण्डल की वसुधा के एक अंश का उपभोग करो।

गौरसिंह—[ पत्र छू कर प्रणाम कर ] महाराज ! श्रीमान् यवनरूपी उद्दण्ड गजराजों की मण्डली में प्रवेश करने के बाद भी सिंह की तरह उससे बाहर निकल कर महाराष्ट्र देश के राजसिंहासन पर बैठ कर भारत देश-वासी जनता को अपनी सन्तति की तरह पालन करने लग गए हैं। अब

नन्दयितुमुपलभ्येत ? क्षम्यताम् ! अनुचरतां विहाय सामन्त-सिंहासन-मधिरोढुं लज्जते मे हृदयम्।

शिवराज—गौरसिंह ! सुविस्तीर्णमधुना महाराष्ट्र-राज्यम् ! तन्महाभारोऽयं विभज्य युष्माभिरपि बिभ्रियेत चेत् शासनं सुकरं संवृत्येत। कथं भवादृशेषु नीतिकुशलेषूपकारिषु सहचरेषु वर्त्त-मानेष्वपि अहमेव दक्षिण-भारताभिजन-भरण-भाराकुलो वर्त्तेय ? तन् सर्वथा भवतः स्वीकरणीयमिदम्, नात्र नकारोपन्यासो भवतो युक्तः—इति तद्धस्ते आज्ञापत्रमार्पयत्।

---

क्वाचिविश्वशब्दस्यापि सर्वार्थकत्वेन सर्वनामत्वमिति समाश्रित्येदम्। अनुचर-ताम् = भृत्यताम्। सामन्तसिंहासनम् = मण्डलेश्वरार्हं पीठम्।

बिभ्रियेत = धार्येत। शासनम् = रक्षणम्। संवृत्येत = सम्पद्येत। नीतिकुशलेषु = राजनीतिपण्डितेषु। दक्षिणभारताभिजनानाम्, भरण-भारेण = रक्षणभरेण, आकुल = व्यग्रः, नकारोपन्यासः = निषेधोक्तिः।

---

इस समस्त विश्व में इससे बढ़ कर आनन्द दायक विषय क्या हो सकता है ! क्षमा करें। आपकी सेवा को छोड़ कर मण्डलेश्वर के सिंहासन पर बैठने में मेरा हृदय लज्जा का अनुभव कर रहा है।

शिवराज—गौर सिंह ! अब महाराष्ट्र राज्य बहुत विस्तृत हो गया है। अतः यदि इस महाभार को विभक्त कर तुम लोग भी थोड़ा-थोड़ा भार ढोने लग जाओगे तो मेरे लिए शासन कार्य में थोड़ी सुविधा हो जायगी। तुम जैसे नीतिनिपुण उपकारक सहचरों के वर्तमान रहने पर भी समस्त दक्षिण भारत के भरण पोषणात्मक भार से मैं ही कैसे व्याकुल होता रहूँ ! अतः यह नियुक्ति तुम्हारे लिये सर्वथा स्वीकर्तव्य है, इसमें नकारात्मक उत्तर देना तुम्हारे लिए उचित नहीं है—यह कह कर महाराज ने गौर सिंह के हाथ वह आज्ञा पत्र दे दिया।

गौरसिंहः—[ पत्र गृहीत्वा प्रणम्य ] महाराज ! निदेशः सर्वथा वहनीय ।

शिवराजः—[ सौवर्णमुष्णीषं कृपाणञ्चार्पयित्वा ] धारयेमं मण्डलेश्वरमात्र-धार्य्यमुष्णीषम्, इद चानेन वैरि-व्रात-विमर्दनेन चन्द्रहासेन प्रकृतीः ।

गौरसिंहः—[ उष्णीषं शिरसि धारयित्वा, कृपाणं कटि-प्रदेशे बद्ध्वा प्रणनाम ] ।

शिवराज —[ रघुवीरमभिमुखीभूय ] वत्स रघुवीर ! स्मारं स्मारं तव परं पराक्रमम्, परां भक्तिम्, परं सौजन्यम्, परां स्वच्छताम्, परमुत्साहम्, परां वीरताम, परं सौहार्दम्, पराञ्च दृढप्रतिज्ञताम्, महापरिणाहमिव सम्पद्यते मे हृदयम् । बहुवारमहं

---

वैरिव्रातविमर्दनेन = शत्रुसमूहकर्त्तनेन । प्रकृतीः = प्रजाः ।

परम् = उत्कृष्टम् । दृढप्रतिज्ञताम् = सत्यसन्धताम् । महापरिणाहमिव = अतिविशालमिव । बहुव्रीहिः । प्रत्यर्थिनाम् = शत्रूणाम्, खड्गैः,

---

गौरसिंह—[ हाथ में पत्र लेकर प्रणाम कर ] महाराज ! आपका निर्देश सर्वथा पालनीय है ही ।

शिवराज—[ सोने की पगड़ी तथा खड्ग देकर ] लो, मण्डलेश्वर मात्र द्वारा धारण करने योग्य पगड़ी लो और शत्रुदल सहारी इस खड्ग से प्रजा की रक्षा भी करो ।

गौरसिंह ने [ पगड़ी को माथे पर डाल कर और खड्ग को कमर में बाँध कर महाराज को प्रणाम किया ]

शिवराज—[ रघुवीर सिंह की ओर देख कर ] बेटा रघुवीर ! तुम्हारे परम पराक्रम, परा भक्ति, अत्यन्त सौजन्य, अत्यन्त स्वच्छता, परम उत्साह, बड़ी वीरता, सुदृढ़ सौहार्द और परम दृढ़ प्रतिज्ञा का स्मरण कर मेरा हृदय विशाल-सा हो जाता है । शत्रु के खड्ग का लक्ष्य बनते बनते मैं अनेक बार तुम से बचाया गया हूँ । यदि तुमने मेरी रक्षा नहीं की होती तो

प्रत्यर्थि-खड्गालीढप्रायो भवता रक्षितोऽस्मि, भवान् मां नाऽरक्षिष्यत् चेच्छास्तिखानं नाजेष्यम्। भवानेव साहाय्यं न व्यधास्यच्चेद् • यवन कारागारान्धकूपान्न निरयास्यम्। रुद्रमण्डल विजयस्य च भवानेव...[ इत्यर्धोक्तौ निश्वस्य भग्नेन स्वरेण पुनर्वक्तुमारभत ] हाः! परस्ताद् यदाचरितं विलुप्तमतिना मया तत्संस्मृत्यापि विदीर्य्यते मे हृदयम्।

रघुवीरसिंहः—भगवन्! शान्तं पापम्, आसीत् तन्मम जन्मान्तरीण-पाप्मनां फलम्।

शिवराजः—यो हि बहुवारं प्राणानरक्षत्; तस्य प्रत्युपकारः प्राणैरपि विधातुमशक्य। यतः प्राणाः वारमेकमेव पार्य्यन्ते त्यक्तुम्, न तु पौनःपुन्येन। तत् सर्वथा तव ऋणी संवृत्तोऽस्मि।

---

आलीढप्रायः = आहतप्राय.। अरक्षिष्यत्=रक्षा व्यधास्यत्। अजेष्यम् = जयं प्राप्स्यम्। भविष्यति हेतुहेतुमद्भावे लृङ्। यवनकारागारमेव अन्धकूप.=तमोमयगर्तः,तस्मात्। निरयास्यम्=बहिर्निरगमिष्यम्। विलुप्तमतिना= विनष्टबुद्धिना। जन्मान्तरीणपाप्मनाम् = इतरजन्मसञ्चितपापानाम्।

---

मैं शाइस्ता खाँ को नहीं जीत पाता। यदि तुम्हारी सहायता न मिली होती तो मैं यवनों के कारागार रूप अन्धकूप से नहीं निकल पाता। रुद्रमण्डल की विजय का भी तुम ही"" [ इतना कहते-कहते उनका स्वर-भङ्ग हो गया। तत्पश्चात् गरम साँस लेकर टूटे स्वर में ही ] हाय! पीछे मति के विलुप्त हो जाने के कारण मैंने जो किया उसके स्मरण से भी मेरा हृदय विदीर्ण होने लग जाता है।

रघुवीरसिंह—भगवन्! आप शान्त हों ( ऐसा न कहें )। यह तो मेरे पूर्व जन्म सञ्चित पापों का फल था।

शिवराज—जिसने अनेक बार मेरे प्राण बचाए उसका प्रत्युपकार अपने प्राण के अर्पण से भी मैं नहीं कर सकता, क्योंकि प्राणत्याग तो एक ही बार किया जा सकता है, बारम्बार नहीं। अतः मैं सब प्रकार

तथाऽपि यथा मम निखिला आज्ञाः समपालयः, तथाऽनुपेक्षणी यमदोऽपि वचः—यदूरीकुरु महाराष्ट्रराजस्य मण्डलेश्वरताम्। दुर्लभो हि त्वादृशो महाराष्ट्रदेशबन्धुः।

रघुवीरसिंहः—[ प्रणम्य ] महाराज ! विनष्टमातृकोऽहमत्र भवत एवाऽऽश्रयेण वर्द्धितो भवच्चरणसेवन-पुण्यैरेव च चिर-प्रनष्ट तात-चरणमप्यलभे—इति ममैव न लक्ष्यते कश्चनाऽऽनृण्योपायः।

शिवराजः—वीर ! ऋतेऽनुचरेभ्यो राज्यकार्यं न सिद्ध्यतीति न तद्रक्षा राज्ञां निरभिसन्धिरनुग्रहः, अनुचरश्च चेत्स्वसमर्पित-कार्य्यातिरेकेण स्वामिनमनुचरेत्, तत् स एवाधमर्णं विदधाति

---

आज्ञाः = आदेशान्। समपालयः = पालितवानसि। अदः = इदम्।

विनष्टमातृकः = मृतजननीक। अलभे = प्रापम्। आश्रयेण = आधारेण। चिरप्रनष्टम् = दीर्घकालादृश्यपाक्तम्। आनृण्यस्य = ऋणशोधनस्य, उपाय = यत्नः। निरभिसन्धिः = निष्कारणक। अनुग्रह = कृपा। स्वसमर्पितकार्यस्य, अतिरेकेण = आधिक्येन।

---

से तुम्हारा अधमर्ण हूँ। तथापि जिस प्रकार मेरी सब आज्ञाओं का तुमने पालन किया है उसी प्रकार मेरी यह बात भी मान लो—तुम महाराष्ट्रराज्य की मण्डलेश्वरता स्वीकार कर लो, क्योंकि महाराष्ट्र देश का तुम-सा बन्धु दुर्लभ है।

रघुवीर सिंह—[ प्रणाम कर ] महाराज ! अधमर्णता तो मेरी अपरिहार्य है, क्योंकि मातृहीन मैं आपकी शरण में पला हूँ और आपके चरणों की सेवा से उत्पन्न पुण्य के कारण ही अपने चिर विलुप्त पिता जी को भी प्राप्त कर सका हूँ।

शिवराज—वीर ! अनुचरों के बिना राज्य का कार्य सम्पन्न नहीं हो सकता है। अतः अनुचरों की रक्षा का अर्थ राजाओं का अकारण अनुग्रह नहीं है। अतः यदि कोई अनुचर अपने नियत कर्तव्य से अतिरिक्त

धनिनम्। अथ वा किमप्यस्तु गृहाणेदमधिकारपत्रम्, यथा न स्यान्मम रिक्तं वचः।

रघुवीरसिंहः—[ करौ सम्पुटीकृत्योत्थाय ] देव! साधारणोऽय मनुचर, राजसिंहासनाक्रमण च महतां कार्य्यम्, तत्क्षम्यताम्, अपरः कश्चन निर्धार्य्यताम्!

शिवराजः—आ! किमुक्तम्? असाधारण पौरुष दर्शयन् असाधारण-कृतज्ञतां प्रकाशयन्नपि साधारण इति ब्रूषे! जयपुराधीशानामसाधारणे वंशे तव जन्म। वचनधन पौरुषभूषणो राजर्षिकल्पः श्रीमानसाधारणो वीरो वीरेन्द्रसिंहस्ते पिता, तत् ततोऽप्यधिकगुण॰ को नामोपलभ्येत सामन्तसिंहासन-योग्य?—

अधमर्णम् = ऋणगृहीतारम्। धनिनम् = सिवज्ञन्तम्, स्वामिनम्, औपचारिकोऽय प्रयोग। रिक्तम् = शून्यम्।

राजसिंहासनस्य, आक्रमणम्=अधिरोहणम्। निर्धार्य्यताम्-निश्चीयताम्। असाधारणम्=अनन्यादृशम्, पौरुषम्=पुरुषार्थम्, असाधारणः-श्रेष्ठः।

अन्य कार्यों से स्वामी का अनुचरण करता है तो अपने स्वामी को ही वह अधमर्ण बना देता है। अथवा, जो कुछ भी हो, तुम यह अधिकार पत्र तो ले ही लो जिससे मेरी वाणी व्यर्थ न हो।

रघुवीर सिंह—[ हाथ जोड़ कर उठकर ] देव! यह एक साधारण अनुचर है और राजसिंहासन पर बैठना महापुरुषों का कार्य है। अतः क्षमा करें, अन्य कोई इस कार्य के लिये निश्चित किया जाय।

शिवराज—आ! क्या कह रहे हो! असाधारण पौरुष का प्रदर्शन एवम् असाधारण कृतज्ञता का प्रकाशन के पश्चात् भी अपने को साधारण व्यक्ति कह रहे हो? जयपुराधीश के असाधारण वंश में तुम्हारा जन्म हुआ है, अपनी वाणी को ही सर्वस्व मानने वाले, पौरुष को ही अपना भूषण समझने वाले राजर्षिकल्प श्रीमान् असाधारण वीर वीरेन्द्र सिंह जी तुम्हारे पिता हैं। फिर तुमसे अधिक गुणवान् कौन मिल सकता है जिसमें मण्डलेश्वर के पद पर प्रतिष्ठित होने की योग्यता हो? अत शीघ्र यह

इति सपदि गृहाणेदमधिकारपत्रम्! [ इत्युत्थाय सम्पुटीभूतं तस्य कराग्रं स्वहस्तेन प्रसार्य्याधिकारपत्रमर्पयामास ]

रघुवीरसिंह.—[ प्रणमन् ] सर्वथाऽप्यादेशवशवर्त्तोऽयं जन! [ इत्यग्रहीत् ]

शिवराज.—[ सौवर्णमुष्णीषं कृपाणञ्चार्पयित्वा ] उष्णीषमिदं मण्डलेश्वरता-परिचायकं धार्य्यताम्! असिना चानेन सशात्रुशातनं प्रजा पाल्यन्ताम्!!

रघुवीरसिंह उष्णीषं शिरसि खड्गञ्च कटिप्रदेशे विन्यस्य, प्रणतिमकार्षीत्।

तावत्प्रतीहारेण प्रविश्य "देव! देवशर्म्मा पण्डितो द्वारि तिष्ठति" इति न्यवेदि। 'आम्! प्रवेशय प्रवेशय' इत्युक्तश्च देव-

सम्पुटीभूतम् = मुकुलितम्। प्रसार्य = उन्मेष्य।
सशात्रुशातनम् = शत्रुध्वंसनम्। पाल्यन्ताम् = रक्ष्यन्ताम्।

अधिकार पत्र स्वीकृत करो [ यह कह कर शिवाजी खड़े हो गये और रघुवीर सिंह का सम्पुटित हाथ स्वयम् फैला कर उसमें अधिकार पत्र रख दिया ]।

रघुवीर सिंह—[ प्रणाम करते हुए ] यह सेवक सर्वदा आपके आदेश का वशवद है [ यह कह कर अधिकार पत्र ले लिया ]।

शिवराज—[ सोने की पगड़ी तथा कृपाण देकर ] मण्डलेश्वर के परिचायक यह पगड़ी पहन लो और इस कृपाण से शत्रुओं का विदलन करते हुए प्रजा का पालन करो।

रघुवीरसिंह ने मस्तक पर पगड़ी रखकर और खड्ग को कमर में बाँधकर महाराज को प्रणाम किया।

उसी समय द्वारपाल ने वहाँ आकर निवेदन किया—"देव! पण्डित देवशर्माजी दरवाजे पर खड़े हैं।" "अच्छा तो उन्हें शीघ्र लिवा आओ" इस प्रकार की महाराज की अनुमति पाकर द्वारपाल ने पाँच-छः शिष्यों से

शर्म्माणं सपञ्चप-शिष्यं प्रावेशयत्। तमालोक्यैवोत्थाय सपादस्पर्शं प्रणनाम महाराष्ट्रराजः। स च गलदानन्द-सलिलाऽऽप्लुताभ्यां नयनाभ्यां लिहन्निव कम्पमानेन करेण स्पृशन्, भग्नेन स्वरेणाऽऽशिषोऽवादीत्। यथानिर्दिष्टमासनञ्चाध्युवास।

महाराष्ट्रराजस्तु करौ सम्पुटीकृत्य प्रावोचत्—विद्वद्वर! अगाध-सम्बाधे पतितो यदेष जनः कुशलेन परावृत्तः, स एष केवलं भवत एवाऽऽशीराशीनां परिणामः। भवतैव दैवज्ञवानेष देशः—इति गृह्यतां काचिदेषाऽल्पिष्ठा सेवा—इति दीनार-सहस्र-परिपूरितं सुवर्ण-पात्रं समार्पयत्।

देवशर्म्मा तु बहुश आशीराशिभिरभियोज्य प्राब्रूत यद्—"देव!

सपञ्चपशिष्यम् = पञ्चभिः षड्भिर्वा शिष्यैः सहितम्। गलता = निष्पतता, आनन्दसलिलेन = हर्षवारिणा, आप्लुताभ्याम् = व्याप्ताभ्याम्। लिहन्निव = आस्वादयन्निव। अध्युवास = अधितस्थौ, उपविष्टः।

अगाधे = गम्भीरे, सम्बाधे = पीडने। दैवज्ञवान् = ज्यौतिषिकयुत.। अल्पिष्ठा = न्यूनतमा। दीनाराणाम् = सुवर्णमुद्राणाम्, सहस्रेण, परिपूरितम् = भरितम्। सुवर्णपात्रम् = चामीकरभाजनम्।

समन्वित देवशर्माजी को वहाँ लिवा लाया। उन्हें देखते ही उठकर पैर पकड़कर महाराष्ट्रराज ने प्रणाम किया। देवशर्माजी ने भी अश्रुपूर्ण नयनों से उनका आस्वादन-सा करते हुए कम्पनयुक्त हाथ से उनका स्पर्श कर भग्नस्वर से उन्हें आशीर्वाद दिया और यथानिर्दिष्ट आसन पर बैठ गये।

तदनन्तर हाथों को सम्पुटित कर महाराष्ट्रराज ने पूछा—"विद्वद्वर! भयङ्कर विपत्ति में डूबने के बाद भी जो यह व्यक्ति कुशलपूर्वक यहाँ लौट आ सका है वह केवल आपके आशीर्वादों का ही परिणाम है। आपही से यह महाराष्ट्रदेश ज्यौतिषी सम्पन्न है। अतः आप इस तुच्छ सेवा को स्वीकृत करें"—यह कहकर महाराज ने एक सहस्र सुवर्ण मुद्राओं से परिपूर्ण सुवर्ण पात्र उनके हाथ में समर्पित कर दिया।

देवशर्माजी ने अनेक आशीर्वादों से महाराज का अभिनन्दन कर

न हि युष्मादृशा धर्म्म-धूर्वहा कदर्य्यैरवरोद्धु शक्यन्ते। भगवता चक्रपाणिनाऽनवरतं रक्ष्यमाणस्य जयलाभवतो विघ्नानामेव भवन्ति विघ्ना, आपदामेव भवन्त्यापदः!

महाराज! चिराय वेद-प्रतिपाद्यमाद्यं भारताभिजन-धर्म्मं रक्ष, प्रजाः पालय, महाराष्ट्रञ्च महाराष्ट्र-देशस्य सनाथय।"

महाराष्ट्रराज —भवदृशानां तपोधनानामाशिष एव सकलमङ्गलमूलम्! सर्वदा सनाथनीयोऽयं जन आज्ञादानैः।

देवशर्म्मा—देव! इमा एवाऽऽशिषः, इमा एव चाऽऽज्ञाः, न मे काचन चिन्ता ऋत एकस्याः।

महाराष्ट्रराज —का सा?

---

धर्मधूर्वहाः = सनातनभारवोढारः। कदर्य्यैः = नीचैः। चक्रपाणिना = वासुदेवेन। अनवरतम् = सततम्। जयलाभवतः = विजयप्राप्तियुतस्य। विघ्नानाम् = प्रत्यूहानाम्। आपदाम् = विपत्तीनाम्। वेदप्रतिपाद्यम् = श्रुतिमात्रनिवेद्यमानम्। "चोदनालक्षणोऽर्थो धर्मः" इति हि सिद्धान्तः। चोदना च विधिः। तथा च, भवति वेदैकप्रतिपाद्यत्वं धर्मस्य। आद्यम् = सनातनं धर्मम्। अयमेव धर्मः सकलस्य मूलमस्येति तत्त्वम्। महाराष्ट्रम् = महाराज्यम्।

---

कहा—"देव! आप जैसे धर्मधुरीणों का अवरोध क्षुद्रों द्वारा नहीं किया जा सकता। भगवान् श्रीकृष्ण द्वारा अनवरत रक्षित होनेवाले और इसलिये जय तथा लाभ (अथवा जय के लाभ) से सम्पन्न सत्पुरुष की बाधाओं की ही बाधायें होती हैं तथा आपत्तियों की ही आपत्तियाँ।

महाराज! चिरकाल तक आप भारतवासियों के वेदप्रतिपाद्य सनातन धर्म की रक्षा करें, प्रजा का पालन करें तथा महाराष्ट्रदेश के महान् साम्राज्य का सनाथित करें"।

महाराष्ट्रराज—आप जैसे तपोधनों का आशीर्वाद ही सकल मङ्गलों का मूल है! इस सेवक को सर्वदा अपनी आज्ञा देकर सनाथित करते रहें।

देवशर्मा—देव! ये ही मेरे आशीर्वाद भी है और ये ही मेरी आज्ञायें भी। एक अबला को छोड़कर अन्य किसी के विषय में मुझे किसी प्रकार की चिन्ता नहीं है।

महाराष्ट्रराज—वह कौन सी अबला है?

देवशर्मा—देव ! बाल्यात्परं वयो जुषते सौवर्णी । भाग्यैरेव तस्यास्तत्पितृ-सम्मतो वीरेन्द्रसिंह-पुत्र कुमाररामसिंहो विविधा आपदः सोढ्वा समुपलब्धः । भाग्यैरेव चापरिचिन्वती, अजानानाऽपि, चैनमेव सा वृतवती । व्यत्येति चैष समय उद्वाहस्य । तत्-

महाराष्ट्रराजः—[ अर्द्धोक्तावेव ] आम् ! स्मर्य्यते, ममैव व्यामूढस्यापराधात् साऽपि भगवती चिरं सोढवती दुःखानि । एष आयुष्मान् कुमाररामसिंहः, एष च सौवर्णी-भ्राता गौरसिंहः, उभावप्येतावद्यावधि महाराष्ट्र-देशस्य मण्डलेश्वरौ राजानौ, आशीर्भिर्भावनीयावेतौ ।

देवशर्मा—[ प्रणमन्तौ तौ सशिरःस्पर्शमाशीर्भिरभ्ययाजयत् ]

जुषते = सेवते । तत्पितृ, सम्मतः = इष्ट । सोढ्वा = अनुभूय । समुपलब्ध = सम्प्राप्तः, अपरिचिन्वती = अनिश्चिन्वाना । अजानाना = अविदन्ती । वृतवती = स्वीकृतवती । व्यत्येति = अतिक्रामति ।

व्यामूढस्य = विक्षिप्तचित्तस्य । भावनीयौ = अभिनन्दनीयौ ।

देवशर्मा—देव ! सौवर्णी अब युवती हो चुकी है । सौभाग्य से ही उसके वर के रूप में उसके पिता के सम्मत वीरेन्द्रसिंह के सुपुत्र कुमार रामसिंह विविध आपत्तियों को झेलकर सम्प्रति सुलभ हो गया है । भाग्य से ही रामसिंह के परिचय तथा परिज्ञान से रहित होकर भी सौवर्णी ने उन्हें ही अपने वर के रूप में मनोनीत कर रखा है । अब विवाह का समय बीता जा रहा है । अतः

महाराष्ट्रराज—[ *आधे कहते कहते ही* ]*जी हाँ, मैं भी स्मरण कर रहा हूँ ।* मुझ व्यामूढ के अपराध से ही भगवती सौवर्णी को भी इतना दुःख भोगना पड़ा है । यह है आयुष्मान कुमार रामसिंह और यही है सौवर्णी का भाई गौरसिंह । आज से ये दोनों महाराष्ट्रदेश के मण्डलेश्वर हो चुके हैं, अतः आप इन दोनों को अपने आशीर्वाद से सनाथित करें ।

देवशर्मा—[ प्रणाम करने वाले उन दोनों को शिरस्पर्शपूर्वक आशीर्वादों से अनुगृहीत किया । ]

महाराष्ट्रराजः—तत् सर्वेऽपि सोत्कण्ठा वयं परिणय-महोत्सवमेतं सम्पादयितुम्, तद् निश्चीयतां स्थिरीक्रियताञ्च कश्चन सकल-मङ्गलमयः समयः।

देवशर्म्मा—[ श्वेतोष्णीष वेष्टनान्तःस्थित तिथिपत्र निस्सार्य्य, कक्ष-गुटिकात उपनयन बहिष्कृत्य, चक्षुषोः सन्धाय, आलोच्य च ] कुमार-रामसिंह! किन्ते जन्मनाम?

रघुवीरसिंहः—आर्य! मोहनसिंहः—इति।

महाराष्ट्रराजः—इति! [ स्मित्वा ] अत एव गुणैरखिलान् मोहयसि।

देवशर्म्मा—अस्ति ते सिंहराशिः!

सर्वे—कथं न स्यात् सिंहविक्रमस्य सिंहराशिः?

देवशर्म्मा—महाराज! इतः पञ्चमेऽहनि सुदिनं सुलग्नञ्चास्ति।

---

तिथिपत्रम् = पञ्चाङ्गम्। कक्षगुटिकातः = बाहुमूलस्थपोट्टलिकायाः। उपनयनम् = उपनेत्रम्। सन्धाय = धारयित्वा। आलोच्य = विचार्य। उक्तवस्तूना तत्तत्स्थानेषु निधानं प्राचीनपद्धतिः।

सिंहविक्रमस्य = मृगेन्द्रपराक्रमस्य।

---

महाराष्ट्रराज—अतः हम सभी इस विवाह महोत्सव को सम्पन्न करने के लिये उत्सुक हैं, इसलिये कोई सर्वविध मङ्गलमय समय निश्चित एवं स्थिर किया जाय।

देवशर्मा—[ उजले पगड़ी के वेष्टन से पञ्चाङ्ग निकालकर काँख में लटकती थैली से चश्मा निकालकर पहन लिया और विचारकर ] कुमार-रामसिंह! तुम्हारा मौलिक नाम क्या है?

रघुवीरसिंह—आर्य! मेरा नाम मोहनसिंह है।

महाराष्ट्रराज—मोहनसिंह तुम्हारा नाम है। [मुसकुराते हुए] इसीलिये तो अपने गुणों से तुम सबको मोह लिया करते हो।

देवशर्मा—तुम्हारी राशि तो सिंह है।

सब—सिंह सदृश पराक्रमी व्यक्ति की राशि सिंह क्यों न हो!

देवशर्मा—महाराज! पाचवें दिन बड़े ही अच्छे दिन तथा लग्न हैं। इसके

इतः परमावर्षसमाप्ति न लक्ष्यत ईदृशोऽभ्यर्हितः समयः।

महाराजः—साधु, साधु, स्वीकृतमस्माभिः! स्वयमहमुपस्थास्ये विवाह एतस्मिन्।

प्रतीहारः—[ झटिति प्रविश्य, करौ सम्पुटीकृत्य ] महाराज! उदयपुरात्पत्रमानीय द्वित्राः सादिनः समुपस्थिताः।

महा०—[ माल्यश्रीकमवलोक्य ] साध्यताम्!

माल्य०—यदाज्ञाप्यते! [ इति निष्क्रम्य सुवर्णमुद्राङ्कितपत्रहस्तः पुनः प्रविश्य च ] पत्रमिदमुदयपुराधीशस्य।

महा०—अहो! आनन्द! पठ्यताम्!!

माल्य०—[ प्रसार्य्य वारमेकं मनस्येव पठित्वा ] महाराज! परम-प्रीति-पूर-पूर्णो भर्ता भारताभिजनानाम्, भाग्यं भारतस्य, तत्रभवा

आवर्षसमाप्ति = हायनावसानपर्यन्तम्। लक्ष्यते = दृश्यते। अभ्यर्हितः = श्रेष्ठः।

उपस्थास्ये = उपस्थितो भविष्यामि।

साध्यताम् = गम्यताम्। गत्वा पत्रमानीयतामिति तात्पर्यम्।

परमेण, प्रीतिपूरेण, पूर्णः = समाक्रान्तः। भर्त्ता। भाग्यम् = मूर्तिमद्भागधेयम्। क्षेमम् = भवन्तम्।

बाद वर्षसमाप्ति तक इस प्रकार का अनुकूल समय देखनेमें नहीं आ रहा है।

महाराज—ठीक है, ठीक है, हम लोगों की स्वीकृति है। इस विवाह में मैं स्वयम् उपस्थित होऊँगा।

द्वारपाल—[ शीघ्रता से प्रवेश कर अञ्जलिबद्ध होकर ] महाराज! उदयपुर से पत्र के साथ दो तीन अश्वारोही प्रस्तुत हैं।

महा०—[ माल्यश्रीक की ओर देखकर ] ठीक है, जाओ, ले आओ।

माल्य०—जैसी श्रीमान् की आज्ञा हो। [ यह कहकर बाहर निकलकर सुवर्ण मुद्राङ्कित पत्र लेकर पुनः प्रवेश कर ] यह पत्र उदयपुराधीश्वर का है।

महा०—अहो! आनन्द है! पढ़ो।

माल्य०—[ पत्र खोलकर एकबार मन ही मन पढ़कर ] महाराज! श्रीमान् को सम्बोधित कर परम प्रेमप्रवाह से परिपूर्ण, भारतवासियों के भर्त्ता,

नुदयपुराधीश्वरो देवं सम्बोध्यैवं लिखति—

महा०—आम् ! अवदधामि, पठ्यतां पठ्यताम् !

माल्य०—देव ! श्रूयताम्—

"स्वस्ति श्रीसकल-वसुमती-वलय-देदीप्यमान – धैर्य - वीर्य-गाम्भीर्य – प्रभावेषु, स्वच्छन्दोच्छृङ्खलोच्छलन्म्लेच्छ – मण्डल मूर्छा-दीक्षा-दक्षेषु, रणाङ्गणागणित-प्राणेषु वैरि-व्रात-घात-कृपा-कृपण-कृपाण- धारावलीढ- भारत-प्रत्न- सपत्न- व्यम- ग्रीवाग्र- विगलत्-कवोष्ण-शोण-शोणित-शोण-चन्दन-द्रव- चर्चित- भूभागेषु,

श्रिया = लक्ष्म्या शोभया च सहिताया, सकलायाः = समग्रायाः, वसुमत्या = वसुन्धराया, वलये, देदीप्यमानाः = जाज्वल्यमाना, धैर्यवीर्य-गाम्भीर्यप्रभावा, येषां तेषु। स्वच्छन्दानाम् = स्वतन्त्राणाम्, उच्छृङ्खलानाम् = उद्दण्डानाम्, उच्छलताम् = उत्कूर्दताम्, म्लेच्छानाम् = यवनानाम्, मण्डलस्य = समूहस्य, मूर्च्छादीक्षायाम् = विक्षिप्तताकरण-नियमे, दक्षेषु = निपुणेषु। रणाङ्गणे, अगणिताः, प्राणाः = असवो यैस्तेषु। वैरिव्रातघाते = शत्रुसमूहहनने, कृपाकृपणः = दयादरिद्र, यः कृपाणः = महासि, तस्य धारया, अवलीढानाम् = आस्वादितानाम्, भारतस्य, प्रत्नसपत्नानाम् = पुरातनशत्रूणाम्, व्यमेभ्यः = विकटेभ्यः, ग्रीवाग्रेभ्यः = कन्धराग्रेभ्यः, विगलत् = निःसरत्, यत् कवोष्णम् = ईषदुष्णम्, शोणम् = रक्तवर्णम्, शोणितम् = रुधिरम्, तदेव शोणचन्दनद्रवः = रक्तचन्दनरसः, तेन चर्चिताः = अनुलिप्ताः, भूभागा यैस्तेषु। स्वातन्त्र्यम् =

भारत देश के मान्य आदरणीय उदयपुर महाराज लिखते हैं—

महा०—हाँ, मैं सावधान हूँ। पढ़ो, पढ़ो।

माल्य०—देव ! सुनें—

"स्वस्ति समस्त वसुधा के मण्डल में देदीप्यमान धैर्य, वीर्य तथा गाम्भीर्य से सम्पन्न, स्वतन्त्र, उद्दण्ड तथा कूदफान करनेवाले म्लेच्छों की मण्डली को मूर्छा की दीक्षा देने में दक्ष, रणाङ्गण में अपने प्राण की गणना नहीं करनेवाले, शत्रुसमूह के विध्वंस में निर्दय कृपाणों की धारा से आक्रान्त भारतदेश के पुराने शत्रुओं की ( छिन्न होने के कारण ) विकट

स्वातन्त्र्य-पीयूष प्रवाह-रञ्जित-महाराष्ट्र-प्रदेशेषु, क्षत्रिय भूपानुरूपाऽऽचार प्रचुरीकृताऽऽस्माकीनाभिमानेषु, परमस्नेह भाजनेषु महाराष्ट्रचक्र-चक्रवर्त्तिषु, श्रीशिवराज वीर वरेषु, यथोचिताचारपुरस्सरं, स्वाभिप्रायं प्रकटयति यवन वन दाव दहन., करप्रदता कलङ्क पङ्कानङ्कित-वशावतंस., वीर मित्रम्, वीर पुत्र, वीर बन्धु, वीरता सिन्धु, वीरता धन, वीरतामात्र विश्रान्त-कुलाभिमान, मानोन्नत, नत शरण, रण यज्ञ दीक्षा दीक्षित, मेद पाट क्षितीश्वरो देव।

स्वातन्त्र्यमेव पीयूषम् =सुधा, तस्य प्रवाहेण, रञ्जिता॰, महाराष्ट्रदेशप्रदेशा, यैस्तेषु। क्षत्रियभूपानुरूपाणाम्=बाहुजनरेशयोग्यानाम्, आचाराणाम्=व्यवहाराणाम्, प्रचारेण, प्रचुरीकृत =वृद्धिं नीत, आस्माकीन॰ अभिमान॰, यैस्तेषु। परमस्नेहभाजनेषु = विपुलप्रेमपात्रेषु। महाराष्ट्रमेव चक्रम् = राज्यम्, तच्चक्रवर्तिषु = तत्स्वतन्त्रनरेशेषु। स्वाभिप्रायम् = स्वविचारम्। यवना एव वनानि = काननानि, तेषां दावदहन –वनाग्नि। करप्रदताकलङ्कपङ्केन = राजस्वार्पणदुर्यश कर्दमेन, अनङ्कितस्य = अलाञ्छितस्य, वंशस्य = अन्वयस्य, अवतंस॰ = भूषणीभूत। वीरतामात्रे विश्रान्त॰ कुलाभिमानो यस्य स॰। मानेन, उन्नत = श्रेष्ठ॰। नतानाम् = नम्राणाम्, शरण॰ = रक्षक। रणयज्ञदीक्षया, दीक्षित = सञ्जातदीक्ष। सर्वदा रणपरायण इत्यर्थ। मेद पाटस्य = मेवाड़स्य, क्षितीश्वर॰ = भूमिपति.।

ग्रीवाओं के अग्रभाग से प्रवाहित होनेवाले कुछ गरम तथा लाल रक्तस्वरूप चन्दनरस से भूमण्डल को चर्चित करनेवाले, स्वातन्त्र्यामृत के प्रवाह से महाराष्ट्रदेश को प्रसन्न करनेवाले क्षत्रियराजोचित व्यवहार से हम लोगों के सम्मान को भी सवर्द्धित करनेवाले परमप्रेमपात्र महाराष्ट्र चक्रवर्ती वीर शिवाजी के प्रति उचित आचार प्रदर्शनपूर्वक यवन वन के दावानल, यवनों को कर देने के कलङ्क से अपने कुल को कलङ्कित नहीं होने देनेवाले, वीरों के मित्र, वीर-पुत्र, वीरबन्धु, वीरता को ही अपना सर्वस्व समझनेवाले, वीरता मात्र में अपने कुल के सम्मान को प्रतिष्ठित समझनेवाले, मान से उन्नत, प्रणतपाल, रणात्मक यज्ञ की दीक्षा में दीक्षित मेवाड़देश की वसुधा के महाराज अपना आशय प्रकट कर रहे हैं—

"तत्रभवतो म्लेच्छोच्छेदन-महाव्रत-श्रवण रोमाञ्चित गात्रा अपि जयपुरेश्वर-जयसिंह-वाक्-प्रलोभ-क्षोभित-हृदयस्य दिल्ली-कर-प्रदता-स्वीकाराऽऽकर्णनेनातितरां क्षुभितहृदया वयमास्म। तत्रापि च "शत्रु-नगरीं प्राविशद् भवान्" इति वृत्तान्तश्चिरमखेदयदस्मान्। ततोऽपि चाश्रावि करालः कर्णशूल इव रोधोदन्त।

ह्यस्तु भवत कुशलाय भगवतीं बहुशो निवेद्य सुप्ते मयि, स्वप्ने प्रत्यक्षीभूता सिंह-वाहिनी बाहु-सहस्रेण गगन व्याप्य पुर समुपतस्थे। ततश्चाह प्रलम्ब सावर्त-लाङ्गूलम्, विद्युद्विनिन्दक च्छटा-

म्लेच्छोच्छेदनमेव = यवनहननमेव महाव्रतम्, तस्य श्रवणेन = आकर्णनेन। रोमाञ्चितगात्राः=पुलकितशरीरा। जयपुरेश्वरस्य, जयसिंहस्य वाक्यप्रलोभेन, क्षोभित हृदय यस्य तादृशस्य भवतः। दिल्लीकरप्रदता-स्वीकारस्य, आकर्णनेन = श्रवणेन। अतितराम् = अत्यन्तम्। आस्म = अभूम। प्राविशद् = गतवान्। करालः = कठिनः। कर्णशूल इव = श्रोत्रपीडेव। रोधोदन्तः = बन्धनवृत्तान्तः।

ह्य० = विगतेऽव्यवहितपूर्वदिने। सिंहवाहिनी = मृगेन्द्रगमना, दुर्गा। प्रलम्बम्=दीर्घम्, सावर्तम्=वलयितम्, लाङ्गूलम्=पुच्छं यस्य तम्। विद्यु-

आपके द्वारा किये गये म्लेच्छ विध्वसनात्मक महान् व्रत के श्रवण से रोमाञ्चित हो कर भी जयपुर महाराज जयसिंह के वाक्प्रलोभन से क्षोभित हृदय वाले आपकी दिल्लीश्वर को कर देने में स्वीकृति सुन कर हम लोगों का हृदय बहुत ही क्षुब्ध हो गया है। "आप शत्रु की राजधानी गये थे" इस वृत्तान्त से तो हम लोगों का हृदय और भी खिन्न हो गया। और वहाँ भी आपको कैद कर लिया गया था—यह बात तो सुनने में विकराल श्रवण-शूल की तरह लगी।

कल जब मैं आपके कुशल के लिये भगवती से बहुत प्रार्थना कर सो गया तब स्वप्न में बाहुसहस्र से सारे गगनतल को व्याप्त कर सिंहवाहिनी भगवती दुर्गा मेरे समक्ष प्रत्यक्ष रूप में प्रस्तुत हो गई। तदनन्तर लम्बी

पटल-परिव्याप्त-सटा-घटाऽऽलिङ्गित-कण्ठम् , खर नखराग्र सम्पात-सावटीकृत-भूभागम् , जाज्वल्यमान-लौह-गोलक-युगलावगूरण-गरिम-गुरु-नयन-गोलकम् , शूलि-शूलाग्र-महिमोन्मूलन-दशन-दीप्ति – दूरीकृतान्धकार – प्रचारम् , पृष्ठ – संस्पृष्ट – देवी – दिव्य-दुकूलम् , परिपन्थि – प्रतिकूल शार्दूलम् , तलाग्र - विलसन्मा-णिक्य-मणि-मर्दन-शोणित-सङ्घात – शोणीकृत-पञ्चानन – पृष्ठ-देशं

---

द्विनिन्दकेन = चपलातिरस्कारिणा, छटापटलेन = प्रभासमूहेन, परिव्याप्ता नाम्=समलङ्कृतानाम्, सटानाम् = केसराणाम् , घटया = तत्या, आलिङ्गितः कण्ठो यस्य तम् । खराणाम् = तीक्ष्णानाम् , नखराग्राणाम् , सम्पातेन, सावटीकृतः = सगर्तीकृत , भूभागो येन तम् । जाज्वल्यमानस्य = देदीप्यमानस्य, लौहगोलकयुगलस्य, अवगूरणगरिम्णा = आघूर्णनगौरवेण, गुरु = महत्, नयनगोलक यस्य तम् । शूलिशूलाग्रस्य = शिवत्रिशूलप्रान्तस्य, महिम्नाम् = प्रभावाणाम् , उन्मूलना = उच्चकाः, ये दशनाः = दन्ता , तेषा दीप्त्या, दूरीकृतः, अन्धकारप्रचारो येन तम् । संस्पृष्टम् = सक्तम् , देव्या , दिव्य दुकूलं यस्य तम् । परिपन्थिप्रतिकूलम् = शत्रुविरुद्धम् । शार्दूलम् = मृगेन्द्रम् । तलाग्रे विलसताम् = चरणनिम्नांशे शोभमानानाम् , माणिक्यमणीनाम् = रक्तमणीनाम् , मर्दनेन = सङ्घर्षेण, यः शोणितसङ्घातः = रुधिरसमूह , तेन शोणीकृत- = रक्तीकृत

---

एवं वर्तुलित पूँछ वाले, बिजली की चमक को भी तिरस्कृत कर देने वाली छटाओं से परिव्याप्त केशरों से सुशोभित कण्ठ वाले, नखों के तीक्ष्ण अग्रभाग की खरोंच से जमीन में गर्त्त बनाने वाले, लोहे के जाज्वल्यमान दो गोलों के समान घुड़कने के प्रभाव से भयङ्कर दो आँखों वाले, भगवान् शङ्कर के त्रिशूल के नोक की महिमा को उन्मूलन कर देने वाले दाँतों की दीप्ति से अन्धकार को दूर कर देने वाले, देवी दुर्गा के वस्त्र के सम्पर्क

पाद-युगलम् , वाल-भास्कर - कर - निकरैरेव ग्रथितमिव स्वप्रभा-प्रवाह-व्याप्ताम्बरमम्बरम् , हरित शोणितार्जुन-हारिद्रयाद्यनेक-विध-चारुचक्याऽऽक्षिप्ताक्षि-मणिमयालङ्कार-निचयम् , असि-शक्त्यृष्टि-शूल – चाप – द्रुघण – परिघ – सर्वौघ-तोमर-कुठार – पारश्वधादि-विविधाऽऽयुध - मुष्टिपीडन - पराधीन – मुष्टिकं भुज – मण्डलम् ;

पञ्चाननस्य पृष्ठदेशो येन तादृशम् । पादयुगलम् = चरणद्वयम् । देव्यामा-पादमामस्तकञ्च वर्णयति दृष्टिपथगाम् । बालभास्करनिकरैरेव = नवो-दितप्रभाकरदीधितिव्रातैरेव । ग्रथितमिव = अनुस्यूतमिव । स्वप्रवाहेण व्याप्तम् = लसितम् , अम्बरम् = गगनतलम् , येन तादृशम् । अम्बरम् = वसनम् । हरित = पालाशवर्ण , शोणितः = लोहित , अर्जुनः = श्वेत , हारिद्रय म् = पीतवर्णः. इत्यादि, अनेकविधम् = विविधप्रकारम् । यत् चारुचक्यम् = चमत्कृतिः, तेन, आक्षिप्तानि अक्षीणि, यैरेवम्भूता-नाम् , मणिमयानाम् , अलङ्काराणाम् = आभूषणानाम् , निचया यस्मिन् तादृशम् । भुजमण्डलविशेषणम् । असयादीनाम् , विविधानाम् , आयुधानाम् मुष्टिपीडने = अग्रभागग्रहणे, मुष्टिः = "मूठ" इति हिन्दी । पराधीना-मुष्टिका यस्य तादृशम् । भुजानाम् = अष्टादशसङ्ख्याकानां , बाहूनाम् , मण्डलम् = समूहम् । "अष्टादशभुजा पूज्या सा सहस्रभुजा सती" इति रहस्यवचनेन महालक्ष्म्या अष्टादशभुजत्वोक्तेः तस्या एव राज्ञा पूजाविषय-

से सुशोभित पृष्ठ वाले एवम् शत्रुसंहारक ( देवी के वाहन ) सिंह को, तलवे में सुशोभित होने वाले माणिक्यमणि के मर्दन से उद्भूत रक्त प्रवाह से वाहन सिंह के पीठ को भी रक्त बना देने वाले ( उस देवी के ) चरण-युगल को; बाल सूर्य के किरण निकर से ही जड़ित से तथा अपनी प्रभा के प्रवाह से आकाश को भी भासित कर देने वाले ( देवी के ) वस्त्र को, हरे, लाल, उजले, पीले आदि अनेक प्रकार के रङ्गों की चमक से दृष्टि को आकृष्ट करने वाले मणिमय अलङ्कारों से विभूषित तथा खड्ग, शक्ति, ऋष्टि ( बर्छी ), शूल, धनुष-बाण, गदा, मुद्गर, सर्वौघ, तोमर, कुठार तथा फरसे आदि विविध आयुधों की मूँठ पकड़ने में व्यस्त मुष्टि वाली (देवी की)

ताम्बूल-राग-रक्तोष्ठं शोणापाङ्ग-लोचन-युगलं पूर्वाचल-चूडा-चुम्बि-चन्द्र-चन्द्रिका-चयेनेव रचित मुनिजनमनोमन्दिरं मन्मथ-मथन-नयन-मिलिन्द-विश्रामैक-कोकनद वदनमण्डलञ्च पश्यन्) विस्मृतात्मा क्षण बद्धकरसम्पुटस्तूष्णीक एव तस्थिवान्।

किञ्चित्क्षणानन्तरञ्च—'अहो ! यस्याश्चरण-रेणु-निकरेणैव

त्वात्। अत एव यालङ्कारणामायुधानाञ्चानेकविधत्व प्रदर्शितमिति यत्किञ्चिदेतत्। ताम्बूलरागेण रक्तौ, ओष्ठौ यस्मिन् तादृशम्। वदनमण्डलविशेषणमिदमग्रेतनानि च। शोणापाङ्गम् = रक्तप्रान्तम्, लोचनयुगल यस्मिन् तत्। पूर्वाचलचूडाचुम्बिनः = उदयगिरिशृङ्गसम्पर्किणः, चन्द्रस्य, चन्द्रिकाणाम् = कौमुदीनाम्, चयेन। रचितम् = निर्मितम्। मुनिजनमनसाम्, मन्दिरम् = देवायतनम्। मन्मथमथनस्य = कामदर्दनस्य, नयनमिलिन्दानाम् = नेत्रभ्रमराणाम्, विश्रामस्य = विश्रान्तेः, एकम् = अद्वितीयम्, कोकनदम् = रक्तकमलम्। वदनमण्डलम् = मुखमण्डलम्। पाणिनीयव्याकरणानुसार 'विश्रम' इत्येव युक्तः प्रयोग इति "विश्राम इति त्वपाणिनीयम्" इति वदता दीक्षितादीनाम्मतम्। तन्मते प्रयोगाणामीदृशानां पाणिनिबोधाविषयाणां माहेश्वरादिव्याकरणेन साधुत्वमिति पूर्वमेव निवेदितम्, वस्तुतस्तु पाणिनिव्याकरणेनाप्यस्य साधुत्वमिति कौमुदीटीकासु निवृतम्।

चरणरेणुनिकरेण = अङ्घ्रिधूलिव्रजेन। "समादाय सृष्टा सृजति

मुजाओंके मडलको तथा ताम्बूल के रंग से रंगे होठों वाले, लाल-लाल आँखों वाले, उदयाचल की चोटी को चूमने वाले चन्द्रमा की चन्द्रिका से निर्मित-सी, मुनिजन के मनोमन्दिर एवं कामदेव विध्वंसक भगवान् शङ्कर के नेत्रात्मक भ्रमरों के विश्राम के लिये आश्रयभूत एकमात्र रक्तकमल स्वरूप (देवी के) मुखमण्डल का अवलोकन करता हुआ मैं अपनी सुध भूल कर क्षण भर तक तो अञ्जलिबद्ध मुद्रा में चुप ही रहा।

कुछ क्षणों के पश्चात् "अहो ! जिस देवी के चरण रेणु के समूह से

शेषस्यापि शिरोधार्य्यं गृहीत-वराहावतारस्य विष्णोरप्युद्धरणीयं गङ्गाधरस्यापि भस्मच्छुरणच्छद्मना सर्वाङ्गसंश्लेषणीयं ब्रह्माण्ड-मण्डलं रचितमस्ति, सेयं भगवती जगदम्बिका समुपस्थिता"—इति सञ्चिन्त्य साष्टाङ्गं प्रणम्य बहुशः स्तुत्वा च समचकथम्—

'मातः ! इतः परं प्रतीक्ष्यते दुर्दशा भारतवर्षस्य, यदा सफलीकरिष्यसीमं बाहु-सहस्र-भारम् ? आः ! पश्यतो पित्रो-

---

पदयामूल् निनकरै' इति देवीस्तवे भगवच्छङ्कराचार्यैरुक्तम्। शेषस्य = अनन्तस्य। शिरसा धार्यम् = वाह्यम्। गृहीतवराहावतारस्य=धारितसूकराकृतेः। विष्णोः = वासुदेवस्य। उद्धरणीयम् = उत्थापनीयम्। गङ्गाधरस्यापि = भूतेशस्यापि। भस्मच्छुरणच्छद्मना = भूतिकल्पनाव्याजेन। सर्वेषु अङ्गेषु संश्लेषणीयम् = समालिङ्गनीयम्। जगदम्बिका = विधिहरीशादीनामप्युत्पादयित्री शिवादिभिन्ना तुरीया काचिच्छक्तिः। तथा चाऽऽचार्यचरणाः—

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम्।
तुरीया काऽपि त्वं निखिलनिगमोद्गीतचरिता
महामाये ! विश्वं भ्रमयसि परब्रह्ममहिषी॥

---

इस ब्रह्माण्डमण्डल की रचना हुई है, जो शेषनाग के लिये भी शिरोधार्य, वराहावतार धारी भगवान् विष्णु के लिये भी उद्धरणीय तथा भस्म रमाने के छल से भगवान शङ्कर के लिये भी सर्वाङ्ग में धारणीय है वही देवी जगदम्बिका मेरे समक्ष प्रस्तुत है' यह सोच कर, उन्हें साष्टाङ्ग प्रणाम कर तथा बहुत प्रकार से उसकी प्रार्थना कर मैंने कहा—

"मातः ! भारत देश को इससे भी अधिक कौन सी दुर्दशा की प्रतीक्षा कर रही हो जब तुम अपनी सहस्र बाहुओं के भार को सफल बनाओगी ?

बाला. करपत्रैः कर्त्यन्ते, रुदतः पत्युः पत्न्यः पात्यन्ते; हाहाकारै-र्गगन-तलमपि विदारयतां भक्तानां भगवन्मन्दिराणि चूर्ण्यन्ते, सोढ-विविध-बाधाना निरपराधानां हीनानां दीनानां रक्तै रक्ता-क्रियते भगवती वसुन्धरा । देवि ! निजतनयेषु समापादिता इमा दुर्दशाः पश्यन्त्यपि न पश्यसि ? रोदसी रोदयद्रोदनमदः शृण्वन्त्यपि न शृणोषि । मातैव समुपेक्षेत चेत् कोऽन्यो रक्षितुमपेक्षेत बालान् ।

योऽसौ दिल्ली-दौर्भाग्य-परिणाम-स्वरूपोऽवरङ्गो मया युद्धे विजिता गृहीतश्चाऽपि च शरणं वाञ्छन् जीवन्नेव परित्यक्तः, स

करपत्रैः = ककचैः । कर्त्यन्ते = छिद्यन्ते । पात्यन्ते = भ्रश्यन्ते प्रातिव्रत्यात् । मिश्रो पत्युः, "षष्ठी चानादरे" इति षष्ठी । चूर्ण्यन्ते=धूलिसा-त्क्रियन्ते । सोढविविधबाधानाम् = अनुभूतानेकपीडानाम् । रक्ताक्रियते= लोहिता सम्पाद्यते । समापादिताः = सम्पादिताः । रोदसी = द्यावापृथि-व्यौ । रोदयत् = क्रन्दयत् रोदनम् । अपेक्षेत = अभिलषेत् ।

दिल्ल्याः, दौर्भाग्यस्य = दुरदृष्टस्य, परिणामस्वरूपः = परिपाक-रूपः । शरणम्, वाञ्छन् = अभिलषन् । मैत्रीम् = सौहार्दम् ।

माता-पिता के देखते ही बच्चे आरे से चीर दिये जा रहे हैं, क्रन्दन करते पतियों के समक्ष पत्नियों के सतीत्व की हत्या की जा रही है, हाहाकार से आकाशमण्डल को भी विदीर्ण कर देने वाले भक्तों के समक्ष भगवान् के मन्दिर चूर-चूर कर दिये जा रहे हैं और विविध विपत्तियों का सहन करने वाले तथा निरपराध दीन हीन जनों के रक्त से यह भगवती वसुन्धरा भी रक्तमय बनाई जा रही है। देवि ! क्या अपने पुत्रों पर आयी इन दुर्दशाओं को देख कर भी देखती नहीं हो ! क्या स्वर्गमर्त्य लोकों को रुलाने वाले इस करुणापूर्ण रोदन को सुन कर भी नहीं सुनती हो ? यदि बच्चों की उपेक्षा उनकी माता हो कर दे तो फिर कौन सा दूसरा व्यक्ति उनकी रक्षा करेगा !

दिल्ली के प्रतिकूल अदृष्ट का परिणामस्वरूप जो औरङ्गजेब युद्ध में मेरे द्वारा जीत लिया गया था और पकड़ लिये जाने के बाद भी शरण

एवासौ मैत्रीं प्रविज्ञाय, अस्मद्बन्धुष्वन्यतमं महाराष्ट्रराजं जयपुरेश्वर-द्वारा स्वालयमानाय्य विश्वास्यापि कारागारनिरुद्धमकरोत् ? सहसे चेदीदृशान् करालानत्याचारान् मुधैव जगज्जननीपदेन विडम्बयसे। यदि नाहं सत्वरं शृणोमि-"शिवराजः कुशलेन महाराष्ट्रदेशं न्यवर्तत"—इति; ततस्तु भवत्या सत्ता-विषयेऽपि शैथिल्यमासादयिष्यति मे विश्वासः"—

इति कथयति मयि गम्भीरेण स्वरेण दुर्गा समगादीत्-"मुक्तो महाराष्ट्रराजश्चतुर्थेऽहनि प्रतापदुर्गं प्रवेक्ष्यति। मा स्म खिद्येथाः! दुराचारा एते न चिरमधिकरिष्यन्ति। कियतैव कालेन करटैः सरटैरेव च व्याप्ता द्रक्ष्यन्त एतेषां प्रासादाः" इत्युक्त्वैवान्तरधाद्

प्रतिज्ञाय = प्रतिश्रुत्य। आनाय्य = प्रापय्य। विश्वास्य = विश्वासमुत्पाद्य। विडम्बयसे = उपहसयसे। सत्तायाः = विद्यमानतायाः, विषये। खिद्येथाः = खेदं भजेथाः। करटैः = काकैः। सरटैः = कृकलासैः। अन्तरधात् = अन्तर्हिता।

की कामना करता हुआ मेरे द्वारा जीवित ही छोड़ दिया गया था उसने ही आज मैत्री की प्रतिज्ञा करने पर भी हमारे बन्धुओं में अन्यतम महाराष्ट्र राज को जयपुरेश्वर द्वारा अपनी राजधानी बुलवा कर और विश्वास भी दिला कर कैद भी कर लिया। देवि ! तुम इतने भयङ्कर अत्याचारों का भी सहन यदि कर ही रही हो तो फिर अपने को व्यर्थ में जगज्जननी कहलवा कर अपना उपहास क्यों करवा रही हो ? "शिवराज कुशलपूर्वक महाराष्ट्र देश लौट आये" यह सवाद यदि मैं शीघ्रातिशीघ्र नहीं सुन लूँगा तो तुम्हारी सत्ता के विषय में भी मेरा विश्वास शिथिल हो जाएगा"—

जब मैंने इतना कहा तब गम्भीर स्वर से भगवती दुर्गा ने उत्तर दिया—"महाराष्ट्रराज मुक्त हो चुके हैं और चौथे दिन अपने प्रताप-दुर्ग में प्रवेश करने वाले हैं। चिन्ता नहीं करो, ये दुराचारी चिरकाल तक राज्य नहीं करेंगे। कुछ ही दिनों में इनके ये राजमहल कौवे तथा छिपकलियों

देवी। प्रबुद्ध एव च पत्रमेतत् प्रहिणोमि, यतः प्रायशो न भवन्ति वितथानि स्वप्न-कथानकानि ईदृशाणि।

इतस्तु साम्रेडमिदमेव कथ्यते-यन्न कदाऽपि कथमपि दिल्ली-कलङ्का इमे विश्वसनीयाः। दृश्यताम्, योऽसौ जयसिंहो भारते स्तम्भभूतो यवनराज्यस्य, यश्च भवादृशानपि यवन-कुल-करि-कदम्ब-केशरिणो हस्तयित्वा दिल्लीमानिन्ये, तस्मिन्नेव दक्षिणदेशे युद्ध-महाम्बुधि-निमग्ने, वारं वारं सक्रन्दनं कुमाररामसिंहेन प्रार्थ्यमानोऽपि सेना-प्रेषणेन सम्राट्पद-विडम्बनोऽसौ रक्षाभिक्षां न प्रादात्, जयपुराधीश्वरस्य विपत्तिमाकलय्य च प्रासीदत्, सोऽसौ स्वप्नेऽपि न सन्धेयः। पुनरेतेन सह योद्धव्यम्। अवहेलितो

प्रहिणोमि=प्रेषयामि। वितथानि=असत्यानि। स्तम्भभूत = आधारभूत.। यवनकुलमेव करिकदम्ब तस्य केशरिणः = मृगेन्द्रान् हस्तयित्वा = वशमानीय। आनिन्ये = आनीतवान्। आकलय्य = निर्धार्य। प्रासीदत् = प्रसन्नता गत। सन्धेय = सन्धातुमर्हः।

से भरे देखे जायेंगे।" यह कह कर ही देवी अन्तर्हित हो गई। जगते ही मैं यह पत्र भेज रहा हूँ, क्योंकि इस तरह की स्वप्नकालिक घटनाएँ प्रायशः मिथ्या नहीं हुआ करती हैं।

अब मैं बारम्बार यही कहना चाहता हूँ कि ये दिल्ली के कलङ्क कदापि विश्वास-पात्र नहीं हैं। देखिए—जो जयसिंह भारतवर्ष में वर्तमान यवन-साम्राज्य के स्तम्भ हैं तथा यवन-कुलरूपी गजों के लिए सिंह आप जैसे व्यक्तियों को भी हस्तगत कर दिल्ली ले आए वही (जय सिंह) जब दक्षिण देश में जाकर युद्धरूपी महासमुद्र में निमग्न हो गए तब कुमार रामसिंह द्वारा बारम्बार क्रन्दनपूर्वक प्रार्थना करने के बाद भी सम्राट् के पद को भी उपहासास्पद बनाने वाले इस दुष्ट ने सेना भेज कर उन्हें (जय सिंह को) रक्षा रूपी भिक्षा नहीं दी और जयपुर महाराज जयसिंह की विपत्ति को जानकर बहुत प्रसन्न हुआ था, उस दुष्ट से स्वप्न में भी सन्धि नहीं करनी

जयपुरेश्वरो नाधुनैतस्य साहाय्यं विधास्यति। मरुधराधीशश्च यवनराजस्यैवाविश्वास्यः। यदितोऽप्येतौ यवनसेनां निजभटैर्द्विगुणयन्तौ प्रचलेताम्, तदितोऽहमेतयो राज्यं भस्मसात् करिष्यामि। अस्माकमपि चिरवैरं जयपुरेण सहेति को न वेत्ति? भवता स्वप्रान्तस्थैरपरैरपि विजयपुराधीश्वरादिभिः सह योक्तव्यम्। भारतवर्षे न कोऽपि शुद्धेन हृदा समाद्रियते एतान् मन्दिर-मर्दनान् यवनहतकान्। अस्मासु भेरीराहत्य ध्वजानुद्धूय युद्धं विदधत्सु च, स्मारं स्मारमेषामत्याचारान् सर्वेऽप्यस्मानेव वलक्षं पक्षमवलम्बिष्यन्ते—न चैषां शरणागत-घातकानां विहित-महापातकानां कुक्कुट-कूट-कवलीकाराऽऽकलित-कलुष-कुटिल-कर्कशाऽऽकार-विकार-

अवहेलितः = तिरस्कृत। अविश्वास्यः = न विश्वासभाजनम्। यवनसेनाम् = म्लेच्छवाहिनीम्। द्विगुणयन्तौ = वर्धयन्तौ। चिरवैरम् = प्राचीन शत्रुत्वम्। युद्धम् = सङ्ग्रामम्। विदधत्सु = कुर्वत्सु। वलक्षम् = शुद्धम्। अवलम्बिष्यन्ते = धारयिष्यन्ति। कुक्कुटकूटकवलीकारेण = चरणायुधौघभक्षणेन। आकलितम् = सञ्चितम्, यत् कलुषम् = पाप्मा, तेन,

चाहिए। उसके साथ पुनः युद्ध करना चाहिए। अपमानित जयपुर महाराज भी अब उस (औरङ्गजेब) की सहायता नहीं करेंगे। मरुदेशाधिपति पर तो यवनराज का ही विश्वास नहीं है। इतना होने पर भी यदि ये दोनों (जयपुरेश्वर तथा मरुदेशाधिपति) अपनी सेना से यवन सेना को द्विगुणित कर (आप से युद्ध के लिए) आगे बढ़ेंगे तो इधर मैं इनके राज्य को भस्मसात् कर डालूँगा। जयपुर के साथ हम लोगों का भी चिरकाल से वैरभाव आ रहा है—यह बात कौन नहीं जानता? आप भी अपने प्रान्त के विजयपुराधीश आदि के साथ सम्बन्ध स्थापित करें। भारतवर्ष में कोई भी व्यक्ति इन मन्दिर-विध्वंसक हत्यारे यवनों को हृदय से नहीं चाहता। जब हम लोग डंका बजाकर ध्वजा फहरा कर युद्ध करने लग जाएँगे तब इन यवनाधमों के अत्याचारों को याद कर सभी भारतदेशवासी हम लोगों के निर्मल पक्ष का ही अवलम्बन करेंगे। न कि इन शरणागत घातक,

प्रकाराणामकीर्ति-सवनानां दुराचार-यवनानाम्' तच्छीघ्रं निष्कृप-कृपाण-धारा-प्रवाहे एव प्रवाहयन्तु भवन्त एतान्।

एतावन्मात्रं पठितवत्येव माल्यश्रीके, परितो "हन्यन्तां हन्यन्तां म्लेच्छाः"—इति महान् समुदस्थात् प्रतिध्वनि-ध्वनन-शतगुणितो ध्वनिः। महाराष्ट्रचक्र-चक्रवर्त्ती च दक्षिण-करपल्लवाग्रेण श्मश्रु-प्रान्तं परिमृशन्, गगने दृष्टिं बद्ध्वा प्रोवाच-"अरे! अरे! यवनाः! सपदि विलयं यात!!"

अथ माल्यश्रीक उवाच—देव! अपरमपि किञ्चिदवशिष्यते पठितुम्।

ततः 'पठ्यतां पठ्यताम्"—इत्याज्ञापयति महाराजे, पुनरारब्धवान् पठितुं यत्—

---

कुटिलाः=वक्राः, कर्कशाः=कठोराः, आकारविकारप्रकाराः, येषां तेषाम्। अकीर्त्ति-सवनानाम्=अयशोयज्ञानाम्।

प्रतिध्वनीनाम्, ध्वननेन=रणनेन, शतगुणितः=अतितरां वृद्धिं नीतः। परिमृशन्=स्पृशन्। विलयम्=विनाशम्।

---

महापातकी, मुर्गी खाने के पाप से उत्पन्न कुटिल तथा कर्कश आकृतियों वाले, अकीर्तिकर तथा दुराचारी यवनों के पक्ष का। अतः शीघ्र ही आप इन यवनाधमों को अपने निर्दय कृपाण के धारा-प्रवाह में प्रवाहित करें।"

माल्यश्रीक द्वारा पत्र का उपर्युक्त अंश पढ़े जाते ही चारों तरफ से "मारिए, मारिए, इन म्लेच्छों को मारिए" इस प्रकार का प्रतिध्वनि से शतगुणित शब्द हुआ। महाराष्ट्रराज ने भी दायें हाथ से मूँछ पर ताव देते हुए ऊपर की ओर दृष्टि डाल कर कहा—"अरे रे यवनाधमों! अभी-अभी विनष्ट हो जाओ!"

तदनन्तर माल्यश्रीक ने कहा—देव! और भी कुछ अंश पढ़ने को अवशिष्ट है।

तत्पश्चात् "पढ़ो, पढ़ो" इस प्रकार महाराज की आज्ञा पाकर माल्यश्रीक अग्रिमांश को पढ़ने लग गया :—

"इति भवतः प्रत्यावर्त्तनस्य हर्ष-वर्ष-पुरस्सरं साशीराशि समापयामि विषयममुम्।

द्वितीयश्चासौ निवेदनीयो वृत्तान्तो यद्—आसीदस्मद्बन्धुः खड्गसिंहः।

इति स्वपितृनामधेय-श्रवणेन सावष्टम्भ सगात्र-स्फुरण चैकाग्रयोर्गौरसिंह श्यामसिंहयोः, पुनरप्यवाऽपठत्—तस्य पुत्रौ गौरसिंह-श्यामसिंहौ, आख्याऽनुकूलाकारौ, आखेट परिभ्रष्टौ, चिरान्वेषणेर-प्यस्माभिरलब्धौ, श्रीमद्दत्तहस्तावलम्बनौ स्त इति श्रूयते। सत्येयं वार्त्ता चेत् सपद्यस्मन्निकटे प्रेषणीयौ, तदीया सर्वाऽपि स्थावर-जङ्गम-सम्पत्तिरस्माभिः सम्यग् रक्षिता वर्द्धिता चास्ति। तावागत्य

सावष्टम्भम् = सस्तम्भनम्। सगात्रस्फुरणम् = सशरीरकम्पम्। एकाग्रयोः = एकचित्तयोः। आख्यानुकूलाकारौ=नामसदृशाकृतिकौ। आखेटे = मृगयायाम्, परिभ्रष्टौ = दूरीभूतौ। स्त = विद्येते। स्थावरा = स्थितिशीला भूम्यादिरूपा, जङ्गमा = गमनशीला गजाश्वादिरूपा; सम्पत्तिः = लक्ष्मी। रक्षिता = पालिता। वर्द्धिता = वृद्धिं नीता।

"इस भावना से आपके सकुशल अपनी राजधानी लौट आने के कारण हुए अपने हर्ष के वर्षण की अभिव्यक्ति करता हुआ आशीर्वादपूर्वक मैं इस विषय का अन्त कर रहा हूँ।

दूसरा निवेदनीय वृत्तान्त यह है कि 'मेरा एक बन्धु खड्ग सिंह था।'

पत्र के इस अंश में अपने पिता का नाम सुनकर स्तब्धता तथा शरीर-कम्पन के साथ गौर सिंह तथा श्याम सिंह के एकाग्र हो जाने पर मालवीक आगे पढ़ने लगा—"उसके दो पुत्र थे गौर सिंह तथा श्याम सिंह जिनकी आकृति उनके नामों के अनुरूप है। आखेट (शिकार) के समय वे दोनों कहीं भटक गए और हम लोगों के चिरकालीन अन्वेषण के बावजूद भी मिल न पाए। सुना जाता है कि ये दोनों आपकी शरण में सम्प्रति हैं। यदि यह बात सत्य है तो आप उन्हें शीघ्रही मेरे पास भेज दें। उनकी सारी चल तथा अचल सम्पत्ति को हम लोगों ने सुरक्षित रखा है तथा

स्वसम्पदं स्वायत्तां कुर्य्यातां चेद् गतैतच्चिन्तश्च सुखेन समुच्छ्वसेयम्। तद्भगिनी कोशला तत्पुरोहितो देवशर्मा च क स्त इति नाधुनाऽपि मम ज्ञान-गोचरतामापन्नम्। परन्तु तत्सत्ता-सम्बन्धेऽपि भवद्राज्य एव पक्षपातो मे हृदयस्य।

समाप्तप्रायेऽप्यस्मिन् पत्रे पुनरेतत्सूचयामि—यद् भाग्यैरेषां भारत-परिपन्थिनां यवनानां न भवति पारस्परिक-प्रीतिरस्माकं भारतीय-क्षत्रियाणाम्। तद् भारताभिजन-भूरि-भाग्य-भवन-भारताभिभावक-भाग्य-पराभवनञ्च सर्वथैक्यमेवाऽऽसादनीयमस्माभिः। पारस्परिक विरोध ज्वरावलीढानि दुर्बलानि भवन्ति बलानि, प्रेम पीयूष धाराऽभ्युक्षितानि च महामहांसि सम्पद्यन्ते

स्वायत्ताम् = स्वाधीनाम्। समुच्छ्वसेयम् = श्वास गृह्णीयाम्। सुखी स्यामिति यावत्। ज्ञानगोचरताम् = ज्ञानविषयताम्। आपन्नम् = आयातम्। तयोः, सत्तायाः = स्थिते, सम्बन्धे = विषये।

पारस्परिकप्रीति = अन्योन्यप्रेमा। भारताभिजनानाम्, भूरिभाग्यस्य महतो भागधेयस्य, भवनम् = सदनम्। भारताभिभावकानाम् = भारतशासनत्वेन ख्यातिं गतानाम्, यवनानाम्, भाग्यस्य, पराभवनम् = तिरस्करणम्। दुर्बलानि = बलशून्यानि। बलानि = सैन्यानि। महा-

(यथासम्भव) उसे बढ़ाया भी है। यदि वे दोनों यहाँ आकर अपनी सम्पत्ति को स्वायत्त कर लेंगे तो उसकी सुरक्षा की चिन्ता से मुक्त होकर मैं चैन की साँस ले सकूँगा। उनकी बहन कौसल्या तथा उनके पुरोहित देवशर्मा भी कहाँ हैं—इसका पता अब तक भी मुझे नहीं मिल पाया है। परन्तु मेरी सम्भावना है कि वे दोनों भी आपके राज्य में ही कहीं होंगे।

इस पत्र के अन्त में मैं पुनः यही कहना चाहता कि इन भारत द्रोही यवनों के सौभाग्य से हम भारतीय क्षत्रियों में परस्पर प्रेम नहीं हो पाता है। अत हम लोगों को आपस में वैसी एकता स्थापित करनी चाहिए जो भारतवासियों के महान् सौभाग्य का भवन (आधार) तथा भारत-द्रोही यवनाधमों के सौभाग्य का पराभवन (विध्वंसक) हो। पारस्परिक विरोध-

तेजांसि—इति किमधिकं वचनीयं स्यान्नीति-निष्णातेषु भवत्सु"—इति।

तदाकर्ण्य महाराष्ट्रराजः प्रावोचत्—

सत्यं दुग्धदग्धो जनस्तक्रमपि व्यजनैर्वीजयित्वा पिबति, व्याविद्धकण्टको न कण्टकाऽऽकुलेन पथा पौनःपुन्येन प्रचरति, तद् यवनैः सह सन्धेर्ज्ञाताऽऽस्वादैः कथं मुहुर्मुहुः संमुह्य सन्धास्यते? धन्यः उदयपुराधीश्वरः! यः स्वयमेव खड्गमात्र-सहायस्य मम सहायः संवृत्तः। "एकमेकश्चैकादश भवन्तीति" प्रसिद्धमाभाणकम्। तदावामधुना द्वौ महासमुद्रौ स्वाश्रितैस्तिमिङ्गिल-

---

महांसि = भूरिधामानि। नीतिनिष्णातेषु = नीतिनिपुणेषु।

दुग्धदग्धः = तप्तेन पयसा ज्वलितमुखः। तक्रम् = उदश्वित्। व्याविद्धकण्टकः = पादे प्रविष्टकण्टकः। ज्ञातास्वादैः = अनुभूतरसैः। संमुह्य = मूढैः भूत्वा। सन्धास्यते = सन्धिर्विधास्यते। खड्गमात्रम्, सहायः = साहाय्यकारी यस्य सः। असहायस्येत्यर्थः। एकसङ्ख्यामुल्लिख्य तद्वामे दक्षे वा पुनस्तस्या एवोल्लेखे भवत्येकादशसङ्ख्या। आभाणकम् = लोकोक्तिः, "कहावत" इति हिन्दी। तिमिङ्गिलपर्यैः = महामत्स्यकवलीकारकैर्भिदैः

---

रूपी ज्वाला से आक्रान्त सेना दुर्बल हो जाती है जब कि प्रेमपीयूष की धारा से सींची सेना दिनानुदिन प्रबल तेजस्वी होती जाती है। आप जैसे नीति-निष्णात महापुरुषों के प्रति मैं अधिक क्या कहूँ!"

उपर्युक्त वचन सुनकर महाराष्ट्रराज ने कहा—

यह सत्य है कि दूध का जला आदमी तक्र भी पंखा झेल कर ही पीता है, जिसके पैर में एक बार काँटा चुभ जाता है वह पुनः काँटेदार रास्ते से नहीं जाता है। अतः यवनों के साथ सन्धि के परिणाम को जानने वालों द्वारा पुनः पुनः मोहित हो कर उनके साथ सन्धि कैसे की जाएगी? उदयपुर महाराज धन्य हैं जो स्वयम् ही खड्गमात्र की सहायता से सम्पन्न मेरा सहायक बन चुके हैं। "एक एक मिलकर ग्यारह हो जाते हैं" यह लोकोक्ति भी प्रसिद्ध है। अतः इस समय स्वाश्रित तिमिङ्गिलसदृश वीरों से परिपूर्ण

प्रायैर्वारिभिरिरौ प्रत्यर्थिन एतान् व्यामोह-प्रवाह-पतितान् गण्डूपद-वृन्दानीवात्स्यावः।

तावदकस्मात् प्रविश्य प्रतीहारः प्रणम्य प्रावोचत्—देव! "सेनापतिर्विजयध्वजः समुपतिष्ठते"—इति। "आम्! प्रवेशय प्रवेशय" इत्युक्तश्च तं प्रावेशयत्।

स च सौवर्ण-प्रान्तारुण-वस्त्राऽऽलिङ्गिताङ्गः कटि-विलम्बि-महाचन्द्रहासः शिरसा भुवं स्पृशन् करौ सम्पुटीकृत्य न्यवेदयद्—

विजयतां विजयतां महाराष्ट्र-चक्र-चक्रवर्ती मण्डलेश्वर-मण्डल-चूडामणि चोचुम्ब्यमान चरणतलो महाराजाधिराजः।

मत्स्यविशेषसदृशौ। व्यामोहस्य = मूर्खतायाः, प्रवाहे = धारायाम्, पतितान् = आगतान्। गण्डूपदवृन्दानीव = किञ्चुलकव्रातानिव। "गण्डूपद. किञ्चुलक" इत्यमरः। "केंचुवा" इति हिन्दी। अत्स्याव. = खादिष्याव।

सौवर्णप्रान्तेन = चामीकरतन्तुरचिताग्रेण, अरुणेन=ईषद्रक्तेन, वस्त्रेण, आलिङ्गिताङ्गः = भूषितशरीरः।

मण्डलेश्वरमण्डलस्य, चूडामणिभिः = शिरोमौक्तिकैः,चोचुम्ब्यमानम्= भृश स्पृश्यमानम्, चरणतल यस्य सः। राजभिः प्रणम्यमान इति भावः।

हम दोनों महासमुद्र अज्ञान प्रवाह में निपतित केंचुए के समान इन शत्रुओं को खा डालेंगे।

उसी समय अकस्मात् प्रविष्ट हो कर द्वारपालने प्रणाम कर कहा—"देव! सेनापति विजयध्वज जी दरवाजे पर उपस्थित हैं।" तदनन्तर "ठीक है, बुलाओ" इस प्रकार महाराज द्वारा आदिष्ट द्वारपाल ने सेनापति को प्रवेश कराया।

सोने के तार जडे किनारे वाले वस्त्र से विभूषित शरीर वाले और कमर में लटकते खड्ग से सुशोभित सेनापति ने जमीन पर शिर रख कर हाथ जोड़ कर महाराज से निवेदन किया—"मण्डलेश्वरों के मण्डल के मुकुटों से पुन पुनः चुम्बित चरण वाले महाराष्ट्र चक्रवर्ती महाराज की विजय हो विजय हो।

देव ! सन्धि-बन्धनाय यान्यस्मद्विजित-दुर्गाणि दिल्लीदूषणाय प्रतिनिवर्त्तितान्यासन्, तानि ह्य एव श्रीचरणानामाज्ञयाऽस्माभि-रक्षितानि। प्रातरेव चाद्य सर्वाण्यपि देवस्य वशंवदानि संवृत्तानि। शत्रुभटाः केचन हता, केचन पलायिताः, केचन गृहीताः, केचन च "त्रायध्वम् . त्रायध्वम्" इति वदन्तः शरणागताः संवृत्ताः।

ततः सर्वे जयध्वनि-प्रतिध्वनिभिः प्रासादमेवाध्वनयन्। महा-राजश्च सौवर्ण-कङ्कण-युगलमस्मै प्रादात्।

तत क्षणं परस्पर विविधानालापान् विधाय, बहुविध-वीर-रस कलित-कविता. पठते कविकुल भूषणाय भूषणाय भूस्वामिता-सूचकमधिकारपत्रं प्रायच्छत्। स च गृहीत्वा पत्रमेतत् साशी-राशि

सन्धिबन्धनाय = मित्रतास्थापनाय। प्रतिनिवर्त्तितानि=प्रतिदत्तानि। अक्षितानि = आक्रान्तानि। वशंवदानि = स्वायत्तानि।

सौवर्णकङ्कणयुगलम् = हैरण्यवलयद्वयम्।

बहुविधाः = अनेकप्रकाराः, वीररसाकलिताः = ओज.पूर्णाः। कविताः = काव्यानि। एतत् = अधिकारबोधक पत्रम्। अन्याः = इतराः।

देव ! सन्धि-स्थापना के लिए हम लोगों द्वारा जीते गये जो दुर्ग दिल्लीनलङ्क को समर्पित कर दिए गये थे उन सब पर हम लोगों ने कल ही श्रीमान् की आज्ञा से आक्रमण कर दिया था और आज प्रात.काल तक वे सब आपके अधीन हो चुके। शत्रु के कुछ वीर मार दिये गये, कुछ भाग गये, कुछ पकड़ लिये गये और कुछ "रक्षा करें, रक्षा करें" कहते हुये शरण में आ पहुँचे हैं।"

यह सुन कर सबों की जयध्वनि की प्रतिध्वनि से वह प्रासाद गूँज उठा एवं महाराज ने सेनापति को पारितोषिक रूप में दो सोने की कङ्गनें दीं।

तदनन्तर थोड़ी देर तक आपस में तरह-तरह की बातचीत कर महाराज ने नाना प्रकार की वीररस की कविताएँ पढने वाले कविकुलभूषण 'भूषण' को कुछ भूभाग के अधिकार का सूचक एक पत्र दिया। पत्र लेकर

पुनरन्या धन्य धन्या मान्या ओजस्वि-पदविन्यासास्तत्क्षण रचिता कविता अपठत्, या श्रुत्वा तत्रत्य-वीराणां दक्षिण-बाहवः प्रास्फुरन्, कृपाणा स्वय कोशात् किञ्चिद् वहिर्निरगच्छन्, लोचनानि च माञ्जिष्ठ-मञ्जिमानमकलयन् ।

तत क्षण निभृत स्थित्वा भूषण प्रशस्य गौरसिंहाभिमुखीभूय महाराज उक्तवान्—

गौर ! श्रुत भवता—यद् उदयपुराधीश्वरेण क्षत्रिय-कुल कमल दिवाकरेण भवन्तमुद्दिश्य लिखितम् ! धन्यो भवान् ! य एव मत्प्रीति-प्रवाह-पात्रमपि पूर्ण प्रताप-पटल-पाटलीकृत-मेद पाटन

ओजस्विनाम् = ओजोगुणपूर्णानाम्, पदानाम्, विन्यासो यासु ताः । प्रास्फुरन् = समचलन् । कृपाणा = असय. । स्वयम् = आत्मनैव । अनिष्कासिता एवेति यावत् । वहिर्निरगच्छन् = बहिर्निष्कान्ता । अतिशयोक्ति । लोचनानि = नयनानि । माञ्जिष्ठमञ्जिमानम् = मञ्जिष्ठ वर्णताम । अकलयन् = अधारयन् ।

निभृतम् = मौनेन ।

मत्प्रीते, प्रवाहस्य, पात्रम् = आधार । पूर्ण-प्रताप-पटलेन = अत्यधिकतेन समूहेन, पाटलीकृत = श्वेतरक्तीकृत, मेद पाटः = मेवार,

भूषण कवि ने महाराज को आशीर्वाद देकर पुन ओजस्वी शब्दों से विन्यस्त उसी क्षण बनाई गई कुछ अच्छी-अच्छी कविताएँ सुनाई जिन्हें सुन कर वहाँ बैठे वीरों की दाहिनी भुजाएँ फरकने लग गईं, उनके कृपाण अपने कोश से स्वय कुछ बाहर निकल गए तथा उनकी आँखे लाल-लाल हो गईं ।

बाद मे थोड़े समय तक मौन रह कर भूषण कवि की प्रशंसा कर महाराष्ट्रराज गौरसिंह की ओर देखते हुये कहा—

गौर ! क्षत्रिय कुलकमल दिवाकर उदयपुरेश्वर ने तुम्हारे बारे में जो पत्र लिखा है उसे तुम सुन चुके । तुम धन्य हो, क्योंकि मेरे प्रीति प्रवाह का पात्र होकर भी अपने पूर्ण प्रताप से मेवाड़ को समुज्ज्वल बनाने वाले,

दुष्टगाण-दुर्घट घटना विघाटनेन प्रत्यर्थि प्राचीर-कपाट विपाटनेन तत्रभवता श्रीमदुदयपुर-परिवृढेनापि सतत स्मर्य्यते। भाग्यवानसि, सम्प्रति सम्पाद्य भगिन्या उद्वाहमहोत्सव वारमेक गत्वा महाराज-मानन्दय, स्वसम्पत्तिमवलोकय। सानुजस्त्व चिरात् कौमार-महाव्रतमेवाङ्गीकृत्य कुलोचिता वीरता धुरां वहसि, तदधुना ससोदर्य्य पदमाधेहि गार्हस्थ्याश्रमे।

अत्रैवसच्छिरो नमयित्वा यावत्किमपि विवक्षते गौरसिंह, तावत् प्रविश्य विप्र-बटुनेकेन साशीर्वचन निवेदित यत्-"सम्पन्नो भगव त्प्रसादीकृतास्वाद्यास्वादन समय"—इति।

येन स.। दुष्टगणस्य, दुर्घटघटनाया. = अनिष्टकारियोजनाया विघा टकेन = विनाशकेन। उदयपुरपरिवृढेन = उदयपुराधीश्वरेण। आनन्दय = हर्षय। कौमारम् = अविवाहितत्वम्, एव महाव्रतम् = कठोर नियमम्। ससोदर्य. = सानुज।

भगवत्प्रसादीकृतस्य = भगवदर्पितस्य, आस्वाद्यस्य = खाद्यस्य, आस्वादनसमय = रसग्रहसमय, भोजनकाल इति यावत्।

दुष्टों के अनिष्ट कृत्यों के विध्वसक तथा शत्रुओं के प्राचीर की किवाड़ी को तोड़ने वाले सम्मान्य उदयपुराधीश्वर भी इस प्रकार तुम्हारी याद कर रहे हैं। तुम सौभाग्यवान् हो, सम्प्रति अपनी बहन का विवाहोत्सव सम्पन्न कर एक बार वहाँ जाकर उदयपुर महाराज को आनन्दित करो और अपनी सम्पत्ति की देख रेख करो। अपने अनुज के साथ चिर काल तक तुमने कौमारमहाव्रत का स्वीकार कर सुक्षत्रिय कुलोचित वीरता के धुरे का वहन किया है। अत अब अपने अनुज के साथ स्वयम् भी गार्हस्थ्याश्रम में प्रवेश करो।

महाराज की वाणी सुन कर शिर झुका कर गौरसिंह कुछ कहना ही चाहता था कि बीच में ही एक ब्राह्मण बटुक ने वहाँ आकर आशीर्वाद पूर्वक कहा—"अब भगवान् के निमित्त निवेदित खाद्य पदार्थ के भक्षण का समय (भोजन का समय) आ चुका।"

ततः "पुनरालपिष्याम"—इत्युक्त्वा महाराज उदस्थात्। सर्वे च यथोचिताऽऽचारपुरस्सर निवृत्ताः।

× × ×

महामङ्गलमय दिनमिद सौवर्णी-विवाहस्य। केन वा वर्णनीया स्याद् नवाधिकृत राज्यस्य राज्ञो गौरसिंहस्य नवाऽऽसादित-प्रासाद-परिष्कार-शोभा ? प्रासादेऽस्मिन् प्रतिद्वार प्रत्यङ्गण प्रतिशाल प्रत्यट्ट प्रतिप्रघणञ्च रम्भा-स्तम्भाः, मङ्गल-कलशा', अशोक-पल्लव-सल्लजावली, प्रतिस्तम्भं परिवेष्टयत्कुसुमित वल्ली-

उदस्थात् = उत्थितोऽभूत्।

× × +

वर्णनीया = कथनीया। नवम्, अधिकृतम् = अधिष्ठितम्, राज्य येन तस्य। नवासादितप्रासादस्य = नवप्राप्तहर्म्यस्य, परिष्कारशोभा = भूषणच्छवि। द्वार प्रतीति प्रतिद्वारम्। प्रत्यङ्गणम् = प्रत्यजिरम्। प्रति प्रघणम् = प्रत्यलिन्दम्। अशोकपल्लवसल्लजानाम् = अशोकप्रवरतकिस लयानाम्, आवली = पङ्क्ति। प्रतिस्तम्भम् = स्तम्भ स्तम्भम्। परिवेष्टयन्त्य० = वलयिता०, कुसुमिता = पुष्पिताः। वल्लीमतल्लिकाः = प्रशस्ता

तत्पश्चात् "फिर बातें करेंगे" यह कह कर शिवाजी यथोचित आचार का निर्वाह करते हुये वहाँ से चल पडे।

× × ×

यह सौवर्णी के विवाहोत्सव का महामङ्गलमय दिन था। कुछ ही दिन पूर्व राज्याधिकार को प्राप्त करने वाले राजा गौरसिंह के नवप्राप्त प्रासाद के परिष्कार की शोभा का वर्णन कौन कर सकता है ? उस प्रासाद के प्रत्येक द्वार पर प्रत्येक प्राङ्गण में, प्रत्येक मीनार पर तथा प्रत्येक ड्योढ़ी (भवन के द्वार के सामने बनी) मङ्गल-कलश, अशोक के रमणीय पल्लवों से सुशोभित हो रहे थे, प्रत्येक स्तम्भ कुसुमित लताओं से परिवेष्टित था, प्रत्येक कलश

मतल्लिकाः, प्रतिकक्षं कुङ्कुम-कस्तूरी-चन्दन-चर्चा मचर्चिकाः, प्रतिगवाक्षं यक्षकर्दम-वृकधूप-घनसारधूप-धूमोद्भूत-घन-घनाघनोद्धाः, प्रतिकुञ्जं माङ्गलिक-मण्डन-प्रकाराः, प्रतिचन्द्रशालञ्च दोधूयमाना ध्वजाः परितो मङ्गलमिव वर्षन्ति स्म। परितः सुदूर-पर्य्यन्तं केतक-सौरभ-सुरभीकृतैरम्भोभिः परिपिक्ताः पन्थानः खेचराणामपि घ्राणास्तर्पयन्ति स्म।

व्रतवय। कुङ्कुम-कस्तूरी-चन्दनानाम् = काश्मीर-केसर-मृगमद-पाटीराणाम्, चर्चामचर्चिकाः = मनोहराणि रूपाणि। मचर्चिकाशब्दः प्रशस्तवाचकः। प्रतिगवाक्षम् = प्रतिवातायनम्। यक्षकर्दमः = एकीकृतं कर्पूरादि। तदुक्तं व्याडिना—

कर्पूरागुरुकस्तूरीकक्कोलघुसृणानि च।
एकीकृतमिदं सर्वं यक्षकर्दम उच्यते॥

वृकधूपः = दशाङ्गधूप, घनसारधूपः = कर्पूरधूप, एतेषां धूमैः, उद्भूताः = उत्थिताः, घनाः = सान्द्राः, ये घनाघनोद्धाः = प्रशस्ता वर्षुकवारिदाः। "प्रकाण्डमुद्धतल्लजौ" इत्यमरः। प्रतिकुञ्जम् = प्रतिलतादिपिहितोदरम्। माङ्गलिकानाम् = मङ्गलप्रयोजनानाम्, मण्डनानाम् = अलङ्करणानाम्, प्रकाराः = भेदाः। प्रतिचन्द्रशालम् = प्रतिशिरोगृहम्। दोधूयमानाः = भृशं कम्पमानाः। वर्षन्ति स्मेदेति क्रियोत्प्रेक्षा। केतकसौरभेण = केतकसुगन्धिना, "केवड़े के जल से" इति हिन्दी, सुरभीकृतैः = सुगन्धितामापादितैः, परिपिक्ताः = सर्वत आर्द्रीकृताः। खेचराणामपि = आकाशगामिनामपि। भूचारिणां तु कथैव का। घ्राणान् = नासिकाः।

कुङ्कुम कस्तूरी तथा चन्दन से चर्चित था, प्रत्येक खिड़की यक्षकर्दम (कपूर, अगर, कस्तूरी आदि का मिश्रित चूर्ण) मिश्रित धूप, तथा कर्पूर के धूप से निरस्त धूमावली से निर्मित घन घनपटल से विभूषित थी; प्रत्येक कुञ्ज मंगलकारक अलङ्करण साधनों से सजाया था और प्रत्येक चन्द्रशाला (चौपारा) पर उड़ती हुई ध्वजाएँ मानो मंगल की ही वर्षा कर रही थीं। सर्वतः अत्यन्त दूर तक केवड़े के सौरभ से मिश्रित जल से सींचे हुए राजमार्ग गगनचरों की नासिकाओं को भी तृप्त कर रहे थे।

अभितो मार्गञ्च रम्भास्रक्-पल्लव-तोरण-पताका-कलशादीनां श्रेणी श्रेयांसि वितरणयति । दुन्दुभि-पणवाऽऽनक-मर्दल-झर्झर-डिण्डिम-पटहादि-वाद्यानां सप्रसादा नादाश्च दिवं स्पृशन्ति । सुहासिनीनां सुवासिनीनां कलित-ललित काकलीभिर्गीतानि गीतानि पुंस्कोकिलानपि कलकूजनं शिक्षयन्ति । पीतारुण कौसुम्भ पट्टोष्णीषोत्तरीय-कञ्चुकाः कुङ्कुमतिलकाः क्रमुक-कुसुम-कुङ्कुमाक्षताम्बर - नारिकेलादि - महामाङ्गलिक-प्राभृत-हस्ताः सहस्रशो नागरिका यातायातैः पद्वीराकुलयन्ति ।

अभितः=उभयतः। श्रेयांसि । वितरणयति = ददाति । सप्रसादाः = मनोहर्षकाः श्रव्याः । नादाः = ध्वनयः । दिवम् = नभः । स्पृशन्ति = व्याप्नुवन्ति । सुहासिनीनाम् = शोभनहास्यवतीनाम् । सुवासिनीनाम् = सौभाग्यवतीनाम् । कलितललितकाकलीभिः = धारितशोभनसूक्ष्मस्वरैः । उद्गीतानि = उच्चारितानि । पुंस्कोकिलान् = पिकान् । कलकूजनम् = मधुररणनम् । शिक्षयन्ति = पाठयन्ति । आसां गीतध्वनिः कोकिलध्वनेरपि मधुर इति तात्पर्यम् । पीतारुणकौसुम्भानि, पट्टानि = कौशेयानि, उष्णीषोत्तरीयकञ्चुकानि येषां ते । क्रमुकम् = पूगी, कुसुमम्=पुष्पम्, कुङ्कुमम् = केशरम्, अक्षताः = तण्डुलाः, अम्बरम् = एतेनैव प्रसिद्ध सुगन्धद्रव्य बहुमूल्यम्, नारिकेलम्=लाङ्गलीफलम्, इत्यादीनि, महामाङ्गलिकानि=अतिशयमङ्गलबोधकानि, उपायनानि=उपहाराः, हस्ते येषां ते । पद्वीः=सरणीः ।

मार्ग की दोनों तरफ कदलीस्तम्भ, माला, तोरण ( महराब ), पताका तथा कलश आदि की श्रेणी मंगल का प्रसार कर रही थी। दुन्दुभी, पणव, नगाड़े, मृदंग, मजीरे, डिण्डिम तथा ढोल आदि के मनोहर शब्द से आकाश गूँज रहा था। हँसती हुई सुवासिनियों द्वारा मन्दमधुर स्वर से गाये जाने वाले गीत कोकिलों को भी कलकूजन की शिक्षा दे रहे थे ( अर्थात् तिरस्कृत कर रहे थे )। पीले, लाल तथा केशरिया रंग के रेशमी वस्त्र, पगड़ी तथा कञ्चुक से सज्जित, कुङ्कुम का तिलक लगाये हुये एवम् सुपारी, फूल, कुङ्कुम, अक्षत, वस्त्र तथा नारिकेल आदि अत्यन्त मंगलमय

समयेऽस्मिन् महाराष्ट्रराजः स्वयमुपतिष्ठते गौरसिंहप्रासादे प्राप्त-राज्यस्य सोदर्य्या-पाणिपीडन-महोत्सव-पीयूष-पूर-प्रवाह-स्नातस्य दक्षिण-क्षितिचक्र-चक्रवर्तिनाऽपि च सनाथ्यमानस्य केन वा वर्णनीयः स्यादानन्दो गौरसिंहस्य श्यामसिंहस्य च ।

अद्य वृद्धोऽपि देवशर्म्मा महोत्सव-रस-रसायनैस्तरुणीकृत इव क्षणमुद्वाह मण्डपे क्षण जनसमाजे च प्रविशति, क्षणमेष रजत-पात्र-स्थापिता औद्वाहिकीः सामग्रीर्गणयति, क्षण हरिद्रा हरिद्रा, लाजा लाजाः, शमी शमी, दूर्वा दूर्वा' इति सामग्रीरानेतुं छात्रान् त्वरयति, क्षण तिथिपत्र प्रसार्य्य ग्रहगतीरालोकयति, क्षणश्चाऽऽयस्त इव भित्ति-

सोदर्य्याया=समानगर्भजातायाः, भगिन्याः, पाणिपीडनमहोत्सव-एव = विवाहमहोत्सव एव, पीयूषपूरप्रवाह=अमृतमहाधारा, तेन स्नातस्य = निमग्नस्य । दक्षिणक्षितिचक्रस्य, चक्रवर्त्तिना = सम्राजा । सनाथ्यमानस्य=सहकृतस्य, सम्मानितस्य ।

महोत्सवरस एव रसायनानि = जीवनौषधानि, तैः । तरुणीकृत इव= युवकीकृत इव । औद्वाहिकीः = उपयामसम्बन्धिनीः । गणयति = सङ्ख्याति । सामग्री = उपकरणानि । त्वरयति = शीघ्रयति । तिथिपत्रम् =

उपहारों को अपने-अपने हाथ में लिये हजारों नागरिक यातायात से मार्ग को व्याकुल कर रहे थे।

उस समय महाराष्ट्र राज स्वयम् गौरसिंह के महल में पहुँचे। उनके वहाँ उपस्थित होने पर राज्य को प्राप्त करने वाले, बहन के विवाहमहोत्सव में प्रवाहित होने वाली पीयूषधारा में स्नान करने वाले तथा दक्षिण देश के भूभाग के चक्रवर्ती ( शिवाजी ) से सनाथित गौर सिंह तथा श्याम सिंह के आनन्द का वर्णन कौन कर सकता है ?

उस दिन देवशर्मा जी वृद्ध होने पर भी विवाहमहोत्सवरसरूप रसायनों से युवक जैसे बना दिए जाने के कारण झट से विवाह मण्डप में और झट से उपस्थित जन-समाज में चले जाते थे, कभी चान्दी के पात्र में वर्त्तमान विवाह सामग्रियों की गणना करने लग जाते थे, कभी "हल्दी २, लाजा २,

काश्रितः पृष्ठदेशे उपविश्य कण्ठावलम्बिनीं तुलसी-मालिकां करे कृत्वा चक्षुषी सम्मील्य भगवन्नामानि जपति ।

तावदश्रूयत भेरी-पटह-शङ्ख-झर्झरादीनां दविष्ठो ध्वनिः, क्रमेण चायं नेदिष्ठतां प्रतिपेदे । "वरयात्रा वरयात्रा" इति परितः समुदस्थाद् महोत्साहमयः कलकलः । सत्पथाभिमुख-चन्द्रशालासु गवाक्षेषु च सपदि प्रविश्य शतशो गायन्त्यश्चिरण्ट्य उपतस्थिरे । अभितो मार्गं जनानां महान् सम्बाधः । द्वार-समीप-वर्त्तिनि रम्भा-स्तम्भ-

---

पञ्चाङ्गम् । आयस्त इव = श्रान्त इव । भित्तिका श्रितः, भित्तिकाश्रितः । "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति समासः । 'पृष्ठदेशे' इति सप्तम्यन्त भित्तिकाम्वयि द्रष्टव्यम् ।

दविष्ठः = अतिशयदूरस्थितः । नेदिष्ठताम् = अतिशयनिकटताम् । प्रतिपेदे = प्राप । सत्पथस्य = शोभनमार्गस्य, अभिमुखासु = सम्मुखासु, चन्द्रशालासु = शिरोगृहेषु । गवाक्षेषु = वातायनेषु । चिरण्ट्यः = सुवासिन्यः । सम्बाधः = सम्मर्दः । आरक्तानाम् = ईषद्रक्तानाम् ,

---

( भूना हुआ धान ), शमी शमी, दूब दूब" यह कह कर छात्रों को सामग्रियाँ लाने दौड़ाते थे, कभी पञ्चाग खोल कर ग्रहों की गति विधि की गणना करने लग जाते थे और कभी श्रान्त के समान भीत में पीठ के सहारे उठंग कर कण्ठ में लटकती तुलसी माला का हाथ में लेकर आँखें मून्द कर भगवान के नाम जपने लग जाते थे ।

उसी समय भेरी, पटह, शङ्ख तथा भर्झरे आदि की दूरवर्त्ती ध्वनि सुनाई पड़ी जो शनैः शनैः काफी नजदीक आ गई । "वरयात्रा वरयात्रा" इस तरह का कलकल सब तरफ से मचने लगा । सन्मार्ग के सम्मुख बनी चन्द्रशालाओं में तथा खिड़कियों के भीतर झट से प्रवेश कर सुवासिनियाँ तरह तरह के गीत गाने लगीं थीं । मार्ग की दोनों तरफ लोगों की बड़ी भीड़ लग गई । द्वार के समीप में वर्त्तमान, केले के खम्भों से हरे वर्ण

"विचित्रेयं दैव-घटना ! क्व मेद-पाट-वाट-वास्तव्यो गौरसिंहः श्यामसिंहश्च ? क्व जयपुर-प्रान्त-निवासी वीरेन्द्रसिंहो रामसिंहश्च ? क्वेयं सतारा-नगरी ? क्व चैष महामहो महाराष्ट्र-मही-महेश्वरस्य ? गौरोऽपि श्यामोऽपि कोशलाऽपि रामोऽपि वीरोऽपि महाराजोऽपि च सर्वे एवैते प्राणसंशयाऽऽपादिकाः कष्टपरम्पराः सोढं सोढमेव प्रतिनिवृत्ताः। दयतामखिलानां दीन-दयार्द्र-हृदयो दयोदन्वान् दामोदरः; यथैतेषां दयितवान्। नूनं रामं विना कोऽन्यः कोशलाया सौभाग्य-भवनं भवेत् ?

मेदःपाटस्य, वाटे = मार्गे, वास्तव्यः = निवासी। महामहः = महोत्सवः। "मह उद्धव उत्सव" इत्यमरः।

प्राणसंशयापादिकाः = जीवनसन्देहाधायिन्यः। कष्टपरम्पराः = दुःखश्रेणीः। सोढं सोढम् = पुनः पुनरनुभूय। प्रतिनिवृत्ता = प्रत्यागताः। दयताम् = दया करोतु। अखिलानाम् = समस्तानां भूमण्डलप्राणिनाम्, "अधीग र्दयेशा कर्मणि" इति कर्मणि षष्ठी। दीनेषु = खिन्नेषु, दयार्द्रम् = कृपाकोमलम्, हृदयं यस्य सः। दयायाः, उदन्वान् = सागरः। दाम = रज्जुर्यशोदार्पिता, उदरे यस्य सः, दामोदरः = वासुदेवः। दयितवान् = कृपा कृतवान्।

"दैव की यह घटना भी विचित्र है! मेवाड़ के रास्ते में रहने वाले गौर सिंह तथा श्याम सिंह कहाँ ? जयपुर के रहने वाले वीरेन्द्र सिंह तथा राम सिंह कहा ? वह 'सतारा' नगरी कहाँ ? और महाराष्ट्र देश के महेश्वर का वह महान् उत्सव कहाँ ?

गौर सिंह, श्याम सिंह, कोशला ( सौवर्णी ), राम सिंह (रघुवीर सिंह) वीरेन्द्र सिंह तथा महाराष्ट्रराज ये सबके सब प्राण को भी संशय में डालने वाले कष्टों को बारम्बार सहने के बाद ही लौटे हुए व्यक्ति हैं। जिस प्रकार दीनों के प्रति की गई दया से आर्द्र हृदय वाले दयासमुद्र भगवान् दामोदर ने उन सबके ऊपर दया की थी उसी प्रकार समस्त भूमण्डल के जीव-जन्तुओं पर दया किया करें। निश्चित ही 'राम' के बिना कोशला के सौभाग्य का संरक्षक अन्य कौन सा व्यक्ति हो सकता है !

श्रूयते राम एव क्रूरं हतवान्, राम एव च संन्यासिवेषमाकलय्य प्रच्छन्नरूपो महाराजेन सहैव दिल्लीमगमत्, सैन्धवनियामक वेषश्च महाराजस्य प्राणानप्यरक्षत्। ईदृशानामेवोदाराणामाचाराणां फलमेतद् यद् असौ सन्देश हरश्चरोऽप्यधुना कोङ्कणदेशस्यान्यतमो मण्डलेश्वरो राजा सवृत्त। राजपुत्र देशेऽपि च लब्ध पारम्परीण स्थावर-जङ्गम-सम्पत्को जयपुराधीश्वराणां परम-प्रीति पात्रं समपद्यत।

धन्योऽसौ गौरसिंहोऽपि यो रसनारीमाहृतवान्, महासेना-समुद्र वीचि सहस्रैः कोङ्कण-देशं प्लावयितुकामं मायाजिह्ममपि पक्षिराज इव गुप्तसर्पं निभृतं हृत्वा, आनीय माया भवने निरुद्ध-

क्रूरम् = क्रूरकर्माणम्, क्रूरसिंहम्। आकलय्य = धृत्वा। प्रच्छन्न-रूपः = गुप्तवेषः। सैन्धवनियामकवेष = अश्ववाहकनेपथ्यः। अर-क्षत् = अपालयत्। सन्देशहरः = वार्ताहारी। चर = भृत्यः। लब्धा = अधिगता, पारम्परीणा = पितृपितामहादिपरम्पराप्राप्ता, स्थावरा जङ्गमा च सम्पत् येन सः परमप्रीतिपात्रम्=अत्युत्कृष्टस्नेहास्पदम्। समपद्यत=संवृत्तः।

महासेनैव समुद्रस्तस्य वीचिसहस्रैः। प्लावयितुम् = ब्रुडयितुम्। नाश-यितुमिति यावत्। पक्षिराज इव = वैनतेय इव। सुप्तसर्पम् = शयितं सर्पम्। हृत्वा = चोरयित्वा।

सुना जाता है कि 'राम' ने ही क्रूर सिंह की भी हत्या की है, 'राम' ही सन्यासी के वेष में अपने स्वरूप को छिपा कर महाराज के साथ दिल्ली तक गया था और साइस के वेश महाराज के प्राण भी इसने ही बचाए हैं। इन्हीं उदार कार्यों का फल है कि प्रथमतः एक सन्देह वाहक दूत हो कर भी बाद में यह कोङ्कण देश के मण्डलेश्वरों में अन्यतम हो गया है। साथ हीं, राजपुताने में भी पैतृक स्थावर तथा जङ्गम सम्पत्ति को प्राप्त करते हुए जयपुर महाराज का भी प्रेमपात्र बन गया है।

यह गौरसिंह भी धन्य है जिसने रोशनआरा का आहरण किया और महासेनारूपी समुद्र की सहस्र तरङ्गों से कोङ्कणदेश को जलमग्न कर देने की इच्छा रखनेवाले मुअज्जम को भी सोये सर्प को गरुड़ के समान पकड़कर

वान्। अत एव महाराज इममसाधारण वन्धु मन्वानो मण्डलेश्वर पदेनामण्डयत्, अनुज चैतस्यान्यतम सेनापतिमकार्षीत्।

अहह! धन्या भगवती कोशला! या मनोमात्रेण वृतस्य रामसिंहस्यापि प्रनष्टता–श्रवणेन जीवन तृणाय मन्यमाना, समिद्धतमेऽग्नौ प्रवेष्टु प्रक्रान्तवती, कथ कथमपि च, मौनमूरीकृत्यावधूतवेषेण विधूतेतर वासना पूतेन हृदा भगवन्त भूतनाथ चिरमाराधयाम्बभूव। तस्या एव तपसामेष पूरित–सकल–काम परिणाम.।

सत्यम्! कलित दुर्घट घटना-नैपुण्यानां पुण्यानामेव फलमिद

अहह = हर्षे। अग्रिमेऽन्वित्रकम। मनोमात्रेणेत्येतदग्रे द्रष्टव्य। एवकारार्थे च। वृतस्य = पतित्वेन स्वीकृतस्य। समिद्धतमे = अतिप्रज्वलिते। प्रक्रान्तवती = प्रारब्धवती। अवधूतवेषेण = तपस्विनेपथ्येन। विधूताभि = तिरस्कृताभि, इतरवासनाभि – अन्यकामनाभि, पूतेन = पवित्रेण। हृदा = चित्तेन। आराधयाम्बभूव = सेवयामास। पूरिता = पूर्णता नीता सकला, कामा = अभिलाषा, येन स। परिणाम = परिपाक।

कलितम् = प्राप्तम्, दुर्घटघटनानाम् = दुष्करसयोगानाम्, नैपुण्य यैस्ते-

राजधानी से आकर माया भवन में नन्द कर रक्खा था। इसी लिये महाराज ने भी उसे अपना असाधारण बन्धु समझकर मण्डलेश्वर की उपाधि से विभूषित कर दिया और उसके अनुज श्यामसिंह को भी सेनापति के पद पर नियुक्त कर दिया है।

अहो! यह सौभाग्यशालिनी कोशला भी धन्य है जो केवल अपने मनोनीत वर रामसिंह की विनष्टता को सुनकर अपने जीवन को व्यर्थ मानती हुई प्रज्वलित अग्नि में जलने के लिये उद्यत हो गई थी तथा जिस किसी प्रकार मौनव्रत का अवलम्बन कर सन्यासिनी के वेष में अन्यान्य वासनाओं को हृदय से समाप्त कर भगवान् भूतनाथ की चिरकाल तक आराधना की। इसी के तप का यह सर्वाङ्गपूर्ण परिणाम है।

सत्य ही यह भी असम्भव को भी सम्भव बनाने में निपुण पुण्यों का ही

यद् बाल्ये देवशर्म्म-भिक्षा-भाग भोग-भागधेयाऽप्यधुना महाराजाधिराजेन निजकन्येव सोत्साह रामसिंहस्य राज्ञी क्रियते। काऽन्या स्यादितोऽपि धन्य-धन्या !"—

इत्येव परस्परमालपन्त. सहस्रशो जना. परित समुपतस्थिरे।

तावत्समीपमायातो वरयात्रा-समारोह.। एकतान-श्रुतिशतैः सुखेनाऽऽस्वाद्यमाना वाद्याना परतो वाद्यानि, रञ्जित विविध रङ्ग-भङ्गाना मतङ्गानां परतो मतङ्गा, अनवरत-पातित-फेन राजीनां खर-खुराग्र-समुद्धूत-धूलि महान्धकारान्धीकृत महाजीनां वाजिनां

---

पाम्। देवशमण, भिक्षाभागस्य = याचनाशस्य, भोगे = मानवादितोन-भोगे, भागधेयम् = भाग्य यस्या, सा। धन्यधन्या = अतिभाग्यवती।

एकतानश्रुतिशतै = एकाग्रीकृ तानेकश्रोत्रै.। आस्वाद्यमानानाम् = ग्रह्यमाणानाम्। रञ्जिता = रक्तोकृता, रञ्जिता विविधैः, रङ्गै = वर्णैः, भङ्गा = पत्रभङ्गाः, नामैकदेशे नामग्रहणात्, रचनाविशेषा अलङ्कारार्थं क्रियमाणा., येषा तेपाम्। मतङ्गानाम् = करिणाम्। अनवरतम् = सततम्, पातिताः फेनराजयः यैस्तेषाम्। खरैः, खुराग्रैः, समुद्धृतानाम् = उत्थापितानाम्, धूलीनाम् = रजसाम्, महान्धकारेण, अन्धीकृता', महा-

---

परिणाम है कि बाल्यावस्था मे देवशर्मा द्वारा अर्जित भिक्षा के भाग को खाने के भाग्य से युक्त होने पर भी यह कोशला आज महाराजाधिराज द्वारा अपनी पुत्री के समान उत्साह से राजारामसिंह की रानी बनाई जा रही है। इससे अधिक धन्य और कौन हो सकती है ?"

इस प्रकार बातचीत करते हुए हजारों व्यक्ति वहाँ उपस्थित थे।

तबतक वरयात्रा समारोह निकट आ चुका। एकाग्र कानोंवाले श्रोताओं से सुखपूर्वक आस्वाद्यमान वाद्यों के पीछे वाद्य, विविध वर्णों से रञ्जित पत्र-भङ्गवाले हाथियों के पीछे हाथी, सतत फेन गिरानेवाले तथा खुरों के कर्कश अग्रभाग से उडाई गई धूलियों से महान् संग्राम को भी अन्धकाराच्छन्न करने मे समर्थ अश्वों के पाछे अश्व, लाल, पीले आदि अनेक रङ्गों के वस्त्रों

परतो वाजिन·, पीतारुणाऽऽद्यनेक-वर्णनीयाम्वराणां मणि-गण प्रभा-प्रभासिताम्बराणां वीरवराणां परतो वीरवराः, नाना-चित्र-चय-चकितीकृतावलोचक लोचन व्रजानां ध्वजानां परतो ध्वजा, तुण्ड-सौष्ठव-परिस्पर्ध्यग्र-व्यग्रीकृत-शकुन्तानां कुन्तानाञ्च परतः कुन्ताः,— इति स्मरण-मात्रेणापि पराधीना अलौकिक-सामर्थ्य विहीना नवीनाः कथमिव वर्णयेयुः कवि कोविदम्मन्याः ?

नय = महासङ्ग्रामा, यैस्तेषाम्। वाजिनाम् = घोटकानाम्। पीतारुणाद्यनेकवर्णैः वर्णनीयानि = रञ्जनीयानि, प्रशंस्यानि वा, अम्बराणि = वसनानि येषां तेषाम्। मणिगणप्रभाभिः, प्रभासितम् = प्रकाशितम्, अम्बरम् = नभो वसनं वा यैस्तेषाम्। वीरवराणाम् = श्रेष्ठभटानाम्। नानाचित्रचयैः, चकितीकृता = साश्चर्यीकृता, अवलोचकानां लोचनव्रजा यैस्तेषाम्। तुण्डसौष्ठवपरिस्पर्धिना = त्रोटिसौन्दर्यप्रतिद्वन्द्विना, अग्रेण, व्यग्रीकृताः = विमनायिता., शकुन्ताः = पक्षिण., यैस्तेषाम्। कुन्तानाम् = भल्लानाम्। नवीना. कविकोविदम्मन्या कथं वर्णयेयुरिति सम्बन्ध.। नवीनत्वादननुभूतत्वात्स्मरणासम्भवात्सुतरां वर्णनासम्भवः। तदाह—स्मरणमात्रेण पराधीनाः = अस्वाधीना.। स्मर्तुमप्यशक्नुवन्त इत्यर्थः। अथास्ति कश्चिदन्यो वर्णनोपायो न वा ?—तत्राऽऽह-अस्ति परं सोऽपि नवीनेषु नास्ति, एतदेवाह-अलौकिकेन = वैदिकेन, योगादिमाहात्म्यजन्येन, सामर्थ्येन = शक्त्या, विहीनाः = रहिताः।

से मण्डित तथा ( वस्त्रजड़ित ) मणियों की प्रभा से आकाश को भी प्रतिभासित करनेवाले वीरों के पीछे वीर, नाना प्रकार के चित्रों से दर्शकों की आँखों को चकित कर देनेवाली ध्वजाओं के पीछे ध्वजायें और नोक के सौष्ठव में परस्पर प्रतिस्पर्धा रखनेवाले अपने अपने अग्रभाग से पक्षियों को व्यग्र कर देनेवाले भालों के पीछे भाले थे, उनका वर्णन अपने को कवि तथा विद्वान् समझनेवाले नवीन लोग कैसे कर सकते हैं, क्योंकि अलौकिक सामर्थ्य से विहीन होने के कारण नवीन कविमानी तो उनका स्मरण करने में भी समर्थ नहीं हैं।

वरयात्रा-महासमारोहस्यैतस्य शेषभागे परिहित-महा-कञ्चुकैः, आबद्ध पीतारुणोष्णीषैः, आमुक्त मुक्ता माणिक्य वैदूर्य्य-हीरक- मरकत- पद्मरागाद्यगणित- मणि-गणप्रभा- पुञ्ज- पिञ्जरीकृत-निज-मण्डलैः, कमल-मुकुल-कुलाऽऽकलित हार-सौरभ भार-प्रचाराऽऽकृष्ट भ्रमद्-भ्रमर निकर-झङ्कार-स्तूयमानैः, क्षत्रिय-वशावतंसे आवृतः, परस्सहस्र-मौक्तिक जालावृत सर्वाङ्गाऽऽ-कलिताऽऽलोचक लोचन लाभावह शोभा नूपुर-शिञ्जितैर-खिलाना मनो हरन्ती लोल लाङ्गूलेन चामर दोलनमनुकुर्वतो-

परिहितमहाकञ्चुकैः = धारितविपुलचोलकैः। आबद्धानि = वेष्टितानि, पीतारुणानि, उष्णीषाणि यैस्तैः। आमुक्तानाम् = ससक्तानाम्, मुक्त-माणिक्य वैदूर्य-हीरक मरकत पद्मरागादीनाम्, अगणितानाम् = असङ्ख्यातानाम्, मणीनाम्, गणस्य, प्रभापुञ्जैः, पिञ्जरीकृतानि, निजमण्डलानि यैस्तैः। कमलमुकुलकुलैः = सरसिजकोरकव्रातैः, आकलितानाम् = निर्मितानाम्, हाराणाम्, सौरभभारप्रचारेण = सौगन्ध्यभरप्रसारणेन, आकृष्टानाम्, भ्रमताम्, भ्रमराणाम्, निकरस्य, झङ्कारैः, स्तूयमानैः = स्तुतिगोचरीक्रियमाणैः, लुतो प्रेक्षा। क्षत्रियवशावतंसैः = क्षात्रान्वयभूषणैः, आवृतः = वेष्टितः। श्रीमान् रामसिंह इति विशेष्यम्। परस्सहस्राणाम्, मौक्तिकानाम्, जालैः = समूहैः, आवृतैः = सञ्छन्नैः, सर्वैः, अङ्गैः, आकलिता = धारिता, आलोचकानाम् = द्रष्टॄणाम्, लोकनलोभावहा = दर्शनलालसोत्पादयित्री, शोभा = छविः, यया ताम्। लोलडाङ्गूलेन =

वरयात्रा समारोह के अन्त्य भाग में महान् कञ्चुकों को धारण किये हुए; (वस्त्र) सक्त मुक्ता, माणिक्य, वैदूर्य, हीरक, मरकत तथा पद्मराग आदि मणियों की प्रभा से अपनी मण्डली को सुवर्णवर्ण बनाते हुए और कमल की कलियों की बने हार के सौरभ के प्रचार से आकृष्ट भ्रमरों की झङ्कार से स्तूयमान क्षत्रिय वशावतसों द्वारा घिरा हुआ; सहस्राधिक मोतियों से सर्वाङ्ग के व्याप्त होने के कारण दर्शकों की दृष्टि को लुभानेवाली शोभा से सम्पन्न, नूपुरों के शिञ्जित से सबों के मन को हरती हुई चञ्चल पूँछ से चामर डुलाने

मुन्नतग्रीवां स्तब्धकर्णां हरितवर्णां वडवामेकामारूढः, सौवर्ण-शिल्प-सौष्ठवासादितारुण-सर्वाङ्गीण वासाः, कुसुम-कोरक रचित-हार-माला-कङ्कण केयूरावतंस ललामः, विविधालङ्कारालङ्कृतः, ताम्बूल रसारुणिताधरः, प्रतिरूपमिव भगवतः कुसुमधन्वनः, अवतार इव माधुर्य्यस्य, विश्वेषां नयनानि सर्वेषाञ्च मनो मोदयन्, जितवार धराधीशस्य श्रीवीरेन्द्रसिंहस्य कुमारः श्रीमान् रामसिंहो दृष्टः।

---

चञ्चलत्वेन। चामरदोलनम् = चामरचालनम्। अनुकुर्वतीम् = विडम्बयन्तीम्। उन्नतग्रीवाम् = उत्थितकन्धराम्। स्तब्धकर्णाम् = शङ्कुश्रोत्राम्। वडवाम् = अश्वाम्। राजपुताने तदन्तिकेषु च वरो वडवामारुह्य गच्छति। आरूढः = अधिष्ठित। सौवर्णशिल्पस्य = चामीकरतन्तुकाकचित्यस्य, सौष्ठवेन, आसादितानि = युक्तानि, अरुणानि = रक्तानि, सर्वाङ्गीणानि = सकलशरीरव्यापीनि, वासांसि, यस्य सः। कुसुमकोरकरचितैः = कुसुमकलिकानिर्मितैः, हारमालाकङ्कणकेयूरावतंसैः, ललामम् = भूषणं यस्य सः। "ललाम पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु" इत्यमरः। विविधैः, अलङ्कारैः, अलंकृत = भूषितः। ताम्बूलरसारुणिताधर = नागवल्लीदलद्रवरक्तौष्ठः। प्रतिरूपमिव = प्रतिकृतिरिव। कुसुमधन्वन. = कामस्य। माधुर्यस्य = सौन्दर्यस्य। अवतार इव = देहग्रहणमिव।

---

की छवि का अनुकरण करनेवाली खड़े कानोंवाली हरे रङ्ग की अश्वा पर आरूढ; सोने के तार के आकर्षक शिल्प से अरुणवर्ण के सर्वाङ्गीण वस्त्रों से विभूषित; फूलों की कलियों से निर्मित हार, माला, कङ्कन, केयूर तथा अवतंस ( कर्णाभरण ) से रमणीय, विविध अलङ्कारों से अलङ्कृत, ताम्बूल राग से लाल अधरोष्ठवाला, भगवान् कामदेव की प्रतिमूर्त्ति सा, माधुर्य का अवतार-सा, सबके नेत्रों एवम् मन को प्रमुदित करता हुआ जितवार के राजा श्री वीरेन्द्रसिंह का सुपुत्र कुमार रामसिंह देखा गया।

दृष्ट्वैव महाराष्ट्रराज यावत् कुमार रामसिंहस्योपरि प्रसारितं मौक्तिक-जालावली-ललित-प्रान्त महापुण्डरीक-मञ्जिमामत्रं छत्र वाहकोऽस्याऽऽकुञ्चयितुं यतते, तावद् 'नैवं मैवमुद्वाह-महोत्सवे, अलमेतेनाऽऽचारेण"—इति देवेन वारितः पुनस्तथैवावतस्थे। सर्वे च वीरेन्द्रसिंहाद्योऽवलोक्यैवमुदारहृदय सहर्षमहाराजं "विजयतां विजयतां महाराजाधिराज !"—इत्युच्चैर्जगदुः।

अथ द्वारसमीपमायाते वरे, अट्टस्था माङ्गलिक-गीति-गानपरा। सुन्दर्यः सुमनसो ववर्षुः।

---

मौक्तिकजालावलीभिः, ललितः = रम्य, प्रान्त = गोलभागः, यस्य तादृशम्। महापुण्डरीकस्य = विशालकमलस्य, मञ्जिम्न = सौन्दर्यस्य, अमत्रम् = पात्रम्, तत्। छत्रम् = आतपत्रम्। आकुञ्चयितुम् = मीलयितुम्। चक्रवर्तिनोऽग्रे छत्रचामरादि नाम्नैधारणीयमिति मर्यादारक्षणार्थम्। अलमेतेनाऽऽचारेण = नाऽऽचरणीयोऽय व्यवहारः। वारित = निषेधितः।

अट्टस्थाः = अट्टालिकाया विद्यमाना। माङ्गलिकीनाम्, गीतीनाम्, गाने परा = लग्नाः। सुमनसः = पुष्पाणि। 'स्त्रियः सुमनस पुष्पं प्रसून कुसुम सुममि" त्यमर।

---

महाराष्ट्रराज को देखते ही जब कुमार रामसिंह के ऊपर फैलाये, मोतियों की पंक्ति से विभूषित किनारावाले विशाल कमल के सौन्दर्य के आधार छत्र को छत्र-वाहक आकुञ्चित करना चाहा तब महाराज के द्वारा "नहीं, नहीं, विवाह के समय ऐसा नहीं करना चाहिए" यह कहकर छत्र-सङ्कोच करने से रोका गया छत्र-वाहक यथापूर्व छत्र को फैलाये ही रक्खा। उदार हृदय महाराज को देखकर वीरेन्द्रसिंह आदि सब लोग उच्च स्वर से "महाराजाधिराज की विजय हो, विजय हो" कहने लग गये।

तदनन्तर द्वार के समीप वर के आ जाने पर अट्टालिका में माङ्गलिक गीत गानेवाली सुन्दरियों ने फूलों की वर्षा की।

ततो बहुभिराचार-व्यवहारैः सह द्वारपूजायां सवृत्तायां वरेण सह वीरेन्द्रसिंहादयो महाराष्ट्र-देश दिवस्पतिश्चान्त. प्रविविशु । श्यामसिंहस्य परमादरेण सन्तर्पिता सर्वे आत्मानमपि विसस्मर ।

अनुरागिणो हृदयमनुरागी वेत्ति, नापर । चिरवियोग ज्वाला जालावलीढ हृदय सयोगायातिलोल भवति। प्रेय-प्राप्ति साकल्येन धैर्यं धुनोति। तत् को नाम साकल्येन यक्तुं पारयेत पारस्परिकावलोकन-विकसित-विविध-भाव-मङ्ग-तुङ्ग-

---

द्वारपूजायाम् = द्वारे स्थापितानां गणेशगौर्यादीनाम् , स्थितस्य वरस्य च सपर्यायाम् । द्वारशब्दस्य तात्पर्यग्राहकलक्षणामाश्रित्य षष्ठ्यन्तेन विगृह्य समास इति सिद्धान्त. । एतेन द्वारशब्दस्य जडवाचकत्वेन पूजायाश्च चेतनकर्मकत्वेन षष्ठ्यन्तसमासानुपपत्तिमाश्रित्य सप्तम्यन्तसमासोपपत्तिचिन्तार्थं मनीषा सपयन्त परास्ता इति वेदितव्यम् । सवृत्तायाम् = समाप्तायाम् , महाराष्ट्र-देशस्य, दिवस्पतिः = इन्द्र । सन्तर्पिता. = सन्तोषिता । विसस्मरः = विस्मृतवन्त. ।

अनुरागिण. = प्रेमवत । हृदयम् = अन्तःकरणम् । चिरवियोग-ज्वालाजालेन, अवलीढम् = व्याप्तम् । सयोगाय = मिलनाय । अतिलोलम् = अतिचपलम् । प्रेय प्राप्तिः = अतिशयेन प्रियस्य लब्धि । साकल्येन = सर्वतो भावेन । धुनोति = चालयति । पारस्परिकाव-

---

तत्पश्चात् बहुत प्रकार के आचार-व्यवहारों के साथ द्वारा पूजा के समाप्त हो जाने पर वर के साथ वीरेन्द्रसिंह आदि तथा स्वयम् महाराष्ट्रराज ने भी अन्तःपुर में प्रवेश किया। वहाँ श्यामसिंह के उदात्त आतिथ्य से सन्तुष्ट होकर वे सब अपने को भी भूल गये।

एक प्रेमी के हृदय को दूसरा प्रेमी ही जान सकता है, अन्य व्यक्ति नहीं। चिर वियोग की ज्वाला से सन्तप्त हृदय सयोग के लिये बहुत ही चञ्चल ( लालायित ) रहता है। प्रिय पदार्थ की सम्प्राप्ति मनुष्य के धैर्य को सर्वथा शिथिल कर देती है। अतएव पति-पत्नी के पारस्परिक अवलोकन से

तरङ्गाऽऽकुलस्य हृदयस्य दशाम् ?

एतैर्हि लज्जया बलादाकृष्येतस्ततः क्षिप्ताऽपि दृष्टिः शिथिलित-जाल-बन्धना शफरीव तडाग-तलमज्ञात-प्रचारा स्वयं परस्परमभिमुखीभवति। धैर्य्येण गृह्यमाणाऽपि गात्रयष्टिः पुनः पुनः कम्पते। ताल-दल-व्यजन-वीजनैः कौशेय-पट्टाम्बर-सम्मर्दैश्चामरोद्धूननैश्चापह्नियमाणोऽपि मुहुर्मुहुर्निर्झरवारां प्रसार इव प्रस्रवति स्वेद-बिन्दुव्रज। अरुण-वसन-महामाणिक्य-पद्मराग-निचय-प्रभा-सहस्रैर-

लोकनेन = अन्योन्यसाक्षात्कारेण, विकसितानाम्, विविधभावभङ्गानाम्, तुङ्गैः = उन्नतैः, तरङ्गैः आकुलस्य = विचलितप्रायस्य।

एतैः = अनुरागिभिः। आकृष्य = आकृष्य। इतस्ततः = विषयान्तरे। क्षिप्ता = प्रेरिता। शिथिलितजालबन्धना = विश्रृङ्खलितानायबन्धा। शफरीव = मत्स्यस्त्रीव। स्त्रीजातिग्रहणं चापल्यातिशयद्योतनाय। तडागतलम् = सरोवराधोभागम्। अज्ञातप्रचारा = अविदितचलना। अभिमुखीभवति = सम्मुखीभवति। गृह्यमाणाऽपि = धार्यमाणाऽपि। तालदलस्य, व्यजनानाम् = पवनसाधनानाम्, वीजनैः = सञ्चालनैः। चामराणाम्, उद्धूननैः = हिल्लोलनैः। निर्झरवारां प्रसार इव = वारिप्रवाहजलानां प्रसरणमिव। प्रस्रवति = प्रवहति। स्वेद-बिन्दुव्रज = घर्मोदकपृषद्गणः। अरुणवसनानाम्, महामाणिक्यानाम्, पद्मरागाणाञ्च निचयस्य, प्रभासहस्रैः = अगणितच्छटाभिः। अरुणीक्रियमाणाऽपि =

विकसित विविध भावभङ्गिमाओं की प्रचण्ड तरङ्गों से आकुल हृदय की दशा का पूर्ण वर्णन कौन कर सकता है!

प्रेमियों द्वारा अन्योन्य संसक्त दृष्टि बलात् इधर-उधर विक्षिप्त कर दिये जाने पर भी पुनः स्वयम् उसी प्रकार अज्ञानपूर्वक परस्पर अभिमुख हो जाती है जिस प्रकार जाल-बन्धन के शिथिल हो जाने पर मछली पुनः जलाशय के अभिमुख हो ही जाती है। धैर्य से सम्भाली गई भी गात्रयष्टि पुनः पुनः काँप उठती है। ताल के पत्ते की हवा से, रेशमी वस्त्र के पोंछने से और चामर डुलाने से सुखाए जाने पर भी पसीने की बूँदें बारम्बार टपकती रहती

रुणीक्रियमाणाऽपि भूयस्वाहो-दल-द्युतिमासादयति कपोल-पाली।

उभयोः पितृवन्मान्यौ नेदीयांसौ देवशर्म्म – गणेशशास्त्रिणौ। वीरेन्द्र-गौर-श्यामादयोऽभ्यर्णस्था बान्धवाः। सर्वथा रक्षणीय एव विनयो महाराजाधिराजस्य सम्मुखे। तथाऽप्येनयोरावेगः, जडता, स्तम्भः, रोमोद्गमश्च क्रियासमभिहारेण सधैर्य्यं रोरुध्यमाना अपि प्रकटीभवन्त्येव। पाणिग्रहण – समये कैर्भावैरालीढमेनयोर्हृदयमिति तावेव वित्तः।

ऊर्ध्वतनशालासु सुवासिन्यो मङ्गल-गीतानि गायन्ति। उद्वाह-समये ब्राह्मणा ब्रह्मघोषै पारिषदानां कर्णौ पाययन्ति। प्रासादस्य

---

लोहिततामापाद्यमानाऽपि। वालीदलद्युतिम् = पीतिमानम्। आसादयति = प्राप्नो त। कपोलपाली = गण्डस्थलम्।

नेदीयांसौ = निकट स्थितौ। अभ्यर्णस्थाः = समीपस्थाः। विनयः= नम्रता। सधैर्यम् = सधीरतम्, रोरुध्यमाना अपि = बार बार गोप्यमानौ अपि। प्रकटीभवन्ति = आविर्भवन्ति। वित्तः = जानीत। विदो लटः प्र० पु० द्वि०।

ऊर्ध्वतनशालासु = चन्द्रशालासु। ब्रह्मघोषै. = वेदध्वनिभिः। पारिषदानाम् = परिषदि सभायां भवानाम्, मण्डपे तिष्ठताम्। पाययन्ति=पविन-

---

है। अरुणवर्ण के वस्त्र और महामाणिक्य एवम् पद्मराग आदि की अत्यधिक प्रभा से अरुणवर्ण की बनाई गई भी कपोलपाली (गाल) पुन पीली हो जाती है।

पिता के समान दोनों (वर-वधू) के लिए सम्मान्य देवशर्मा जी तथा गणेश शास्त्री जी समीप में ही थे। वीरेन्द्र सिंह, गौर सिंह एवम् श्यामसिंह आदि बान्धव भी निकटस्थ ही थे। महाराजाधिराज के सम्मुख विनय की रक्षा भी अत्यन्त आवश्यक थी। तथापि उन दोनों के प्रेमावेग जड़ता, स्तब्धता एवम् रोमाञ्च धैर्यपूर्वक अवरुद्ध किए जाने पर भी पुनः पुनः प्रकट हो जाते थे। पाणिग्रहण के समय तो किन भावों से उनके हृदय व्याप्त थे—यह वे ही दोनों जानते होंगे।

चन्द्रशालाओं में सुवासिनियाँ मङ्गलगीत गा रही थीं। विवाह के

द्वारे वादका वाद्यानि वादयन्ति । क्षणे क्षणे कुमार्य्यः कुसुमानि वर्षन्ति-इति घनानन्दानुभव-पुरस्सरं समाप्तोऽसौ कोशलापरिणय-महोत्सवः । रामविरहेण चिरग्लाना कोशला पुना रामेण सनाथिता-इति राम-प्राप्ति सकल-सौभाग्य-भवनभूतां कोशलां दर्शं दर्शं मोमुद्यन्तेतमां पौराः ।

शान्तोऽधुना देवशर्म्मणो गौर-श्यामयोश्च चिन्ता-चक्रस्य महाज्वरः । सुखेन निरश्वसद् वीरो वीरेन्द्रसिंहश्च विलोक्य राजपदालङ्कृतं गृहीत सुकुल कन्या पाणिपद्मं निजतनयम् । कृतकृत्यतामन्वभूद् यजमानानन्दानन्दितो गणेशशास्त्री । क्रमेण रामसिंहतिरस्कारस्य

यन्ति । घनस्य=सान्द्रस्य,आनन्दस्य,अनुभवपुरस्सरम् । कोशलाया ,परिणयस्य, महोत्सवः = महामहः । चिरग्लाना = दीर्घकालखिन्ना । सनाथिता = समानिता । रामप्राप्त्या = राममिलनेन, सकलसौभाग्यानाम् , भवनभूताम् = आश्रयभूताम् । मोमुद्यन्तेतमाम् = अतितरां प्रसीदन्तितमाम् । पौराः = नागरिकाः । श्रीराममद्रायोध्याप्रतान्तोऽपि व्यक्तीकृतोऽनेन प्रकारेणेति समासोक्तिरलङ्कारः ।

गृहीतम् , सुकुलस्य = शोभनान्वयस्य, कन्यायाः, पाणिपद्मं येन तम् । कृतकृत्यताम् = विहितविधेयताम् । यजमानानन्देन, आनन्दितः = हृष्टः ।

समय ब्राह्मण लोग वेद-मन्त्रों के उच्चारण से सभ्यों के कानों को पवित्र कर रहे थे । प्रासाद के दरवाजे पर वादक लोग बाजे बजा रहे थे । क्षण-क्षण में कुमारियाँ फूल बरसा रही थीं । इस प्रकार अत्यन्त आनन्द के साथ कोशला का विवाहोत्सव सम्पन्न हुआ । 'राम' के विरह से कोशला चिरकाल तक खिन्न रह कर पुनः 'राम' के साथ मिल चुकी—इस लिए 'राम' की सम्प्राप्ति सब सौभाग्यों के आश्रयभूत कोशला को देख कर सब पुरवासी अत्यन्त प्रसन्न हो रहे थे ।

देवशर्मा तथा गौरसिंह के चिन्ताचक्र का महान् ज्वर शान्त हो गया। राजा के पद से अलंकृत तथा कुलीन कन्या के साथ विवाहित अपने पुत्र को देख कर वीर वीरेन्द्र सिंह ने भी चैन की साँस ली। यजमान के

राज्य दानादि-च्छलेन विहितप्रायश्चित्त इव च सन्तोषमाससाद महाराजः। कोशलारामयो शुद्धोऽनुरागो निर्बाधो निष्प्रतिबन्धोऽधुना क्रमतो यथासमयमासादितैरतिदुर्लभैस्तैस्तैर्विलासैः साफल्यमापेदे।

अधुना पुण्यनगरोपकण्ठस्थायाम्, तारा मण्डल-चुम्बि सौधाग्र-शत विहितामरावती विडम्बनायाम्, नीलगिरि प्रतिम-महामत्त-मतङ्गज प्रकाण्ड गण्ड-मण्डल-सोस्रूयमाण मदधाराऽभ्युक्षित-घण्टा पथायाम्, अनवरतसरीसृयमाणाजानेय सहस्र खर-खुराग्र खननो-

न हि ब्राह्मणाना पृथक् स्वार्थ इति विदन्ति सर्वे। विहितम्, प्रायश्चित्तम्= पापविशोधन येन स। निर्बाध =निर्विघ्न। निष्प्रतिबन्धः=नीरोध। विलासैः =हावभावादिभि।

× × ×

पुण्यनगरस्य, उपकण्ठस्थायाम्=समीपस्थायाम्। तारामण्डलचुम्बिभिः, सौधाग्रशतैः विहिता, अमरावत्या =आखण्डलनगर्याः, विडम्बना=अनुकृतिर्यया तस्याम्। नीलगिरिप्रतिमानाम्=नीलाचलतुल्यानाम्, महामत्तानाम्, मतङ्गजप्रकाण्डानाम्=प्रशस्तकरिणाम्, गण्डमण्डलेभ्यः, सोस्रूयमाणया=अतिशयेन क्षरन्त्या, मदधारया, अभ्युक्षिता =सिक्ता, घण्टापथा =राजमार्गो, यस्या तस्याम्। अनवरतम्=सततम्, सरीसृयमाणानाम्=अतिशयेन सरताम्, आजानेया-

आनन्द से आनन्दित गणेश शास्त्री को भी कृतकृत्यता का अनुभव हुआ। रामसिंह के भ्रमवश तिरस्कार से उत्पन्न पाप के उन्मूलनार्थ राम सिंह के निमित्त राज्य के प्रदान के छल से प्रायश्चित्त करने वाले महाराज भी प्रसन्न हुये। कौशला तथा 'राम' का विशुद्ध प्रेम सभी विघ्न बाधाओं को पार कर समयानुसार विहित अत्यन्त दुर्लभ हाव भाव के रूप में सफल हो चुका।

उस समय पूना नगरी के समीप में अवस्थित, तारामण्डल चुम्बी अग्रभाग वाली अट्टालिकाओं से अमरावती का अनुकरण करने वाली, नीलगिरि तुल्य उन्मत्त गजराजों के गण्डस्थल से बहने वाली मद जलधारा

द्धूत-रेणुका पटल घटाऽऽलिङ्गित प्राचीर परिवेष्टितायाम्, निरन्तर-महाराष्ट्रराज-जयध्वनि-समाकर्णन-सञ्जात-संस्कार-भार-तदानुपूर्वी-रटन-पटु-कीर-सारिकादि-चङ्क्रम्यमाण-विटपावृतोद्यान-कदम्बायाम, सतारा-नगर्यां महोद्यान वर्त्तिन्येकस्मिन् महाप्रासादे सकुटुम्बो महाराष्ट्रपतिर्वसति।

कदाचन पाणिगृहीत्या विहरन्, कदाचन कुमारं लालयन्, कर्हिचित् सैनिकानां व्यूह-रचना-कौशल शस्त्रक्षेप-लाघव-कौशलञ्च परीक्षमाणः, कर्हिचिच्च सैन्धवैर्धावं धावं कन्दुकादि क्रीडा-

---

नाम्, सहस्रस्य, खरखुराग्राणाम्, खननात्, उद्धूतानाम् = उद्गतानाम्, रेणुकानाम् पटलस्य, घटया आलिङ्गितेन = आश्लिष्टेन, प्राचीरेण, परित वेष्टितायाम्, निरन्तरम्, महाराष्ट्रराजस्य, जयध्वने, समाकर्णनेन, सञ्जातेन, संस्कारभारेण = भावनातिशयेन, तदानुपूर्वीरटने = तत्क्रमानुसन्धानपूर्वकभाषणे, पटुभिः, कीरसारिकादिभिः, चङ्क्रम्यमाणैः = कम्प्यमानैः, विटपैः, आवृतानि = आच्छन्नानि, उद्यानकदम्बानि, यस्याः तस्याम्। महोद्यानवर्त्तिनि = विस्तीर्णनिष्कुटान्तर्गते।

पाणिगृहीत्या=भार्यया। व्यूहरचनायाः=सैनिकस्थितिप्रकारनिर्माणस्य, कौशलम् = नैपुणीम्। सैन्धवैः = घोटकैः। कन्दुकादिक्रीडायाः =

---

से सींचे गये राजमार्ग से सम्पन्न, सतत दौड़ते हुए आजानेय अश्व सहस्र के कर्कश खुरों के अग्र भाग से खुरचे गये धूली पटल की घटा से संयुक्त प्राचीर से घिरी हुई और निरन्तर महाराष्ट्रराज की जयध्वनि के श्रवण से उत्पन्न संस्कार के प्रभाव से जयध्वनि के यथाक्रम अभ्यास में प्रवीण शुग्गे तथा सारिका आदि पक्षियों से कम्पित होने वाले वृक्षों से भरी वाटिकाओं से विभूषित 'सतारा' नगरी में एक विशाल उद्यान में अवस्थित महाप्रासाद में महाराष्ट्रराज अपने कुटुम्बों के साथ ठहरे हुये थे।

कभी अपनी पत्नी के साथ विहार करते हुए, कभी कुमार का प्यार करते हुये, कभी सैनिकों की व्यूह रचना नैपुण्य और शस्त्र फेंकने की कुशलता

कुतूहलानि रचयन् विलसति। उत्तरस्यां मथुरापर्य्यन्तमेतस्यैव राज्यम्। एतद्राज्यवर्त्तिनो यवना अप्येतस्य सौजन्येन, औदार्य्येण, गाम्भीर्येण सदाचारेण, सौहार्देन, करुणया, प्रेम्णा च वशंवदा इव सर्वेऽप्येतस्यैव प्रशंसाभिः समयं गमयन्ति। दिल्लीश्वरस्य महाभिमान-मतङ्गजोऽपि महाराजस्य कीर्त्ति-देवधुन्याः कृपाण-धारा-स्थालैर्गम्भीरतरे प्रवाहे ग्राव-शकलवन्निमग्नः। ज्वाला-माला-जटालस्यास्य प्रताप-तपनस्य प्रकाशेन भारत-गौरवं विश्वेषा-मन्तराकाशे प्रचकाशे। धूमेनैव चास्य ध्वान्तैरिवान्धीकृतं दिल्लीश्वरस्य

---

'पोलो' इत्याङ्ग्लदेशे ख्यातायाः, कुतूहलानि = कुतुकानि। महाभिमान एव मतङ्गज इति रूपकम्। महाभिमानस्य सविशेषणत्वेऽपि नित्यसापेक्ष-त्वात्समासः। कीर्त्तिरेव, देवधुनी = स्वर्धुनी, जाह्नवी, तस्याः। ग्रावशकल-वत् = अश्मखण्डवत्। निमग्नः = मुडितः। ज्वालामालया, जटालस्य = वृद्धि गतस्य। प्रताप एव तपनः = दहनः, तस्य। ध्वान्तैः = अन्धकारैः। स्वान्तम् = मानसम्। विधूनितम् = समुज्ज्वालितम्। नि सारा = निस्त-

---

की परीक्षा करते हुए और कभी घोड़ा पर सवार हो कर 'पोलो' खेलते हुये महाराष्ट्रराज सुशोभित हो रहे थे। उत्तर दिशा में मथुरा तक उन्हीं का राज्य था। उनके राज्य में रहने वाले यवन भी उनके सौजन्य, उदारता, गाम्भीर्य, सदाचार, सौहार्द, करुणा तथा प्रेम से वशंवद व्यक्तियों की तरह उनकी प्रशंसा में ही अपना सारा समय व्यतीत किया करते थे। दिल्लीश्वर औरङ्गजेब का महाभिमान रूप गजराज भी महाराष्ट्रराज की कीर्तिस्वरूपी आकाश गङ्गा के कृपाणधारा की तरङ्गों से गम्भीरतर प्रवाह में पत्थल के टुकड़े के समान डूब चुका था। ज्वालाओं से सवर्धित उनके प्रतापानल के प्रकाश से भारतवर्ष का गौरव सबके हृदयाकाश में प्रकाशित हो रहा था। उसी प्रतापानल से उपस्थित धूम से ही दिल्लीश्वर का चित्त उस प्रकार अन्ध बना दिया गया था मानो अन्धकार से ही वह अन्ध बना दिया गया हो। उनकी ध्वजा की उड़ान से मानो शत्रुओं

स्वान्तम्। एतद्ध्वजोद्धूननैरिव विधूनितं प्रत्यर्थिनां धैर्य्यम्, एतच्चामराऽऽहत-समीर-प्रसारैरिव शोषिता निस्साराः पर-मनोरथ-कासाराः।

एकदा केतकी सौरभ-वासित-पानीय-पूरित-पात्रस्थ-मरन्द-तुन्दिल कुसुम-वृन्दामोदान्ध-मधुप-झङ्कृतायां नागदन्तिकाऽवलम्बि कराल-करवाल निपतद्दीपावली प्रवियातनाप्रभूत - प्रभूत -प्रभाप्रभासितायामत्युच्चतया पदार्पित-चित्रगतस्येव समस्त-सतारागृहोद्यान-वापी तडाग-शाला-मन्दिर-चत्वरादेः ससौष्ठवावलोकन-

---

त्वा, निर्जलाः, परमनोरथाः = शत्रुकामा एव, कासाराः = सरांसि। "कासारः सरसी सरः" इत्यमरः।

एकदाऽट्टालिकाया शयानो महाराज स्वप्नममुमपश्यदिति सम्बन्धः। अट्टालिका विशिनष्टि—केतक्या., सौरभेण वासितेन पानीयेन पूरितेषु ,पात्रेषु तिष्ठताम् मरन्दतुन्दिलानाम् कुसुमानाम् वृन्दस्य, आमोदेन = सुगन्धेन, अन्धैः = मत्तैः, मधुपैः, झङ्कृतायाम् = नादितायाम्। नागदन्तिकावलम्बिषु = शङ्कुदोलायमानेषु, करालेषु = खरेषु, करवालेषु = खड्गेषु, निपतन्त्या, दीपावलीप्रवियातनया = आलोकनिचयप्रतिकृत्या, प्रभूताभिः = समुत्पन्नाभिः, प्रभूतप्रभाभिः = विपुलकान्तिभिः, प्रभासितायाम् = भ्राजमानायाम्। ससौष्ठवम्, यदवलोकनचौकर्यम्,

---

का धैर्य उड़ चुका था, उनके चामरों से निकली हवा के प्रसार से मानो शत्रुओं के मनोरथरूपी सरोवर शोषित अत एव निःसार बना दिए गये थे।

एक दिन केतकी पुष्प के सौरभ से सुरभित जल से परिपूर्ण पात्र में वर्त्तमान मकरन्द पूर्ण पुष्पों के आमोद से उन्मत्त भ्रमरों की झङ्कार से झकृत, दीवार में लगी खूटी में लटकते भयङ्कर कृपाणों पर प्रतिबिम्बित होने वाली दीपावली से उत्पन्न विशद प्रकाश से प्रकाशित, अत्यन्त उच्च होने के कारण पैरों पर अर्पित चित्र में उल्लिखित किए गए पदार्थों के समान समस्त 'सतारा' नगरी के गृह, उद्यान, वापी, तड़ाग, शाला

सौकर्य्यं प्रदाया परितो गवाक्ष-मण्डलावृतायां तारामह-मण्डलं स्पृशन्त्यामिवाट्टालिकाया गजदन्त पर्य्यङ्के पय-फेन-निभायां तूलिकायां शयानो महाराजः स्वप्नममुमपश्यत्—

यत् "सौवर्ण पर्य्यङ्के महोपधानावलम्बित पृष्ठदेशोऽवरङ्गजीव उपविष्टोऽस्ति। कदाचिन् पादौ प्रसारयति, कदाचिदाकुञ्चयति, कदाचिद्दक्षतः कदाचिद्वामतश्च परिवर्तते, कदाचिदुष्णीषिकां क्षिपति, कदाचित् व्यजनेन सम्यग् वीजयन्तमपि दासेरं 'बलेन वीजय, बलेन" इति आक्रुश्यति, कदाचित् स्वेदाक्लिन्नं कञ्चुकं दूरतः क्षिपति। मुहुर्मुहुः पानीय पूरित जाम्बूनद-भाजनं शिथिलेन

---

सम्भवायाम् = सद्भाविन्याम्। ताराभलणां, मण्डलम्। स्पृशन्त्याम् = चुम्बन्त्याम्। अत्युच्चायामिति यावत्। गजदन्तपर्य्यङ्के = हस्तिदशननिर्मिते पल्यङ्के। पय फेननिभायाम् = क्षीरडिण्डीरसमायाम्। तूलिकायाम = तूलतल्पाम्। शय्यायामिति यावत्। अमुम्=वक्ष्यमाणम्।

सौवर्णपर्य्यङ्के = चामीकरमण्डितपल्यङ्के। महोपधाने = महाबर्हे, अवलम्बित = आश्रितः, पृष्ठदेशो यस्य स। उष्णीषिकाम् = लघुष्णीषम्। "टोपी" इति हिंदी। दासेरम्=भृत्यम्। आक्रुश्यति=भर्त्सयति। जाम्बून-

---

(प्रकोष्ठ अथवा बैठक) मन्दिर तथा चत्वर आदि के रूप अवलोकन में सुविधा प्रदान करने वाली, सब तरफ से खिड़कियों से भरी और तारामण्डल का स्पर्श-सा करती हुई अट्टालिका में स्थित हाथी के दाँतों के बने पलङ्ग पर बिछे दूध के फेन के समान दीखने वाले रुई के गद्दे पर सोते हुये महाराज ने इस स्वप्न को देखा —

"सुवर्णमय पलङ्ग पर एक विशाल तकिये पर पीठ के सहारे उठंग कर औरङ्गजेब बैठा (लेटा) हुआ है। कभी पैर फैलाता है और कभी सिकोड़ लेता है। कभी दायीं करवट और कभी बायीं करवट बदलता है, कभी अपनी टोपी उतार कर फेंक देता है, कभी अच्छी तरह पंखा झलते हुए दास को भी "ठीक से झलो" कहकर डाँटता है, कभी पसीने से भीगे कञ्चुक को दूर हटा देता है। कभी-कभी जल से परिपूर्ण सुवर्णपात्र को

करेणोत्थाप्य मुखे योजयति, मुहुरुष्णं निश्वसिति, मुहुर्वक्षसि करं विन्यस्य मन्त्र-कीलितो जीर्णाजगर इव स्तब्धनयनोऽवतिष्ठते, कदाचिच्च ललाटतले पिच्छिलीभवत्स्वेदराशिं करेणापहृत्य, श्वास प्रश्वास-च्छलेन लशुन-प्रियाल-पलल-विस्र-पूतिगन्धोद्गारैर्मशकानपि मूर्च्छयन् मन्दं मन्दमेव रटति यद्—

"हा! हतोऽस्मि महाराष्ट्र-वञ्चकेन!! एष मम नासामिव छित्वा कूर्चमिव समूलमुल्लूय श्मश्रु युगलमिवोत्पाट्य पादत्राणेनेवाऽऽहत्य निष्ठीवनेनेवाभिषिच्य धूलिभिरिव चान्धीकृत्य कारा-

दभाजनम् = हिरण्यपात्रम्। विशिथिलेन=दुर्बलेन। योजयति = मेलयति! ननु पिबति। मन्त्रैः कीलित = यन्त्रित। निर्विषीकृत इति यावत्। जीर्णाजगर इव = वृद्धमहासर्प इव। स्तब्धनयनः=स्थगितनेत्र। पिच्छिलीभवत्स्वेदराशिम् = अधिकीभवद्घर्मजलम्। लशुनस्य=रसनस्य प्रियालस्य = ग्रन्थकस्य, "प्याज" इति ख्यातस्य, पललस्य = मांसस्य, च यः, विस्रः = दीर्घकालरक्षितविकृतमांसगन्धः, पूतिगन्धः = दुर्गन्धः, तस्य, उद्गारैः = उद्गमनैः। "पूतिगन्धिस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत्" इत्यमरः। मूर्च्छयन् = मोहयन्। दुर्गन्धस्यात्युत्कटत्वाद् दुर्गन्धप्रियानपि खेदयन्निति यावत्।

नासाम् = घोणाम्। छित्वेव = खण्डयित्वेव। उल्लूय = उच्छिद्य। उत्पाट्य = उन्मूल्य। पादत्राणेन = उपानहा। निष्ठीवनेन=थूत्कारेण।

शिथिल हाथ से उठाकर मुँह में लगाता है, कदाचित् लम्बी साँसें भरता है, बारबार हाथ सिमट कर मन्त्र से अवरुद्ध वीर्य वाले जीर्ण अजगर के समान नेत्रों को स्तब्ध बनाकर बैठ जाता है और कभी ललाटतट से टपकते पसीने को हाथ से पोंछ कर श्वास-प्रश्वास के छल से लहसुन, प्याज तथा मांस के पाक न होने के कारण होने वाली गन्ध तथा अन्य प्रकार की दुर्गन्धि के प्रकटन के कारण मच्छरों को भी मूर्छित करता हुआ बोलता है :—

"हाय! महाराष्ट्र के ठग ने मुझे मार दिया! वह तो कारागार से भी निकल कर भग गया मानो उसने मेरा नाक काट कर, मेरी दाढ़ी को

गारान्निष्क्रान्तः। आः! कथमेव मया प्रथम-साक्षात्कार एव खड्गेन खण्डशः कृतः। संन्यासिभिरालपन् पलायितुकामोऽवगतोऽपि कथन्न सवास-भवनो दग्धः? एतस्य भोज्येषु गरलं मेलयित्वा भवने सर्पान् क्षिप्त्वा वा कथन्नैव कालाजगर-जठर-ज्वलन-ज्वाला-पतङ्गः कृतः।

अहह! निर्गतोऽसौ महाशत्रुरत्रुटित केशाग्रः। किं करोमि, न मे चिन्ता शाम्यति, पश्चात्ताप-तपनोऽयं तापयतितमाम्। प्रसिद्धिं गता मम निष्फल-यत्नता, निखिला अपि मे प्रजाः शत्रुभूताः। पथि मामवलोक्य बालोऽपि हसति, धिङ् माम्! धिक् च मम क्लैब्यं जीवनम्!!

---

अन्धीकृत्य = निर्लोचनीकृत्य। अवगतः = बुद्धः। वासभवनेन सहितः, सवासभवनः। क्षिप्त्वा = सम्प्रेर्य। कालाजगरस्य, जठरज्वलनज्वालायाम्, पतङ्गः = शलभः।

अत्रुटितकेशाग्रः = अच्छिन्नकेशमुख्यभागः। तस्य किमप्यनिष्टं न जातमिति भावः। क्लैब्यम् = नपुंसकम्। अनावश्यकं पुरुषार्थ क्षीणञ्च वृते।

---

उन्मूलित कर, मेरे मूँछ उखाड़ कर, मुझे जूते से ठुकरा कर, थूक से अभिषिक्त कर और मेरी आँखों में धूल झोंक कर मुझे अन्धा बनाकर ही यहाँ से निकल गया। हाय! प्रथम साक्षात्कार के समय ही मैंने उसे खड्ग से खण्ड-खण्ड क्यों नहीं कर डाला? संन्यासियों के साथ भागने की इच्छा से बातचीत कर रहा है—ऐसा जानकर भी मैंने उसे उसके निवास गृह के साथ क्यों नहीं जला दिया! उसके भोजन में विष मिला कर अथवा उसके आवासगृह में भयङ्कर साँप भेजवा कर कालतुल्य अजगर की जठराग्नि की ज्वाला का मैंने उसे पतङ्ग क्यों नहीं बना दिया!

अहा! वह शत्रु बाल बाल बचकर निकल गया। क्या करूँ? मेरी चिन्ता दूर नहीं हो रही है! यह पश्चात्तापस्वरूप अनल मुझे बहुत ही जला रहा है। मेरे प्रयास की विफलता प्रसिद्ध हो चुकी, मेरी सारी प्रजा मेरा शत्रु बन गई। रास्ते में चलते मुझे देखकर बच्चा भी हँसता है। मुझे धिक्कार है! मेरे इस निष्प्रयोजन जीवन को भी धिक्कार है! यहाँ आकर 'शिव' ने

अत्राऽऽगत्य शिवेन स्वाचारेण स्वपौरुषेण च दिल्लीवास्तव्या अपि बहवो वशंवदा विहिताः। किमन्यत्तु तनयोऽपि मम मायाजिह्मस्तमेव समये समये प्रशंसति। दुहिता रसनारी च तद्गतप्राणाऽपक्षीयते। हा हतोऽस्मि! अस्तं प्रयातो मे प्रतापतपनः॥"

जागरे हि, "एक-सम्बन्धि ज्ञानमपर-सम्बन्धि-स्मारकं भवति" स्वापे तु,"एकसम्बन्धि-साक्षात्कारोऽपर-सम्बन्धि साक्षात्कार-कारको जायते"—इति रसनारी-शब्द-साक्षात्कारात्परं प्रत्यक्षीकृतमिव यद्—

एकतो द्वारमुद्घाट्य निःशब्दं रुदती, बाष्प-धारा-स्नपित-स्तन-द्वया, अस्थि-चर्म-मात्र-शेषा, सामर्थ्य-विहीनतयाऽयथोचित-

---

अपक्षीयते = अपचीयते। प्रतापतपनः = प्रतापभानुः।

जागरे = जाग्रदवस्थायाम्। एकस्य, सम्बन्धिनः = सवर्गिणः, ज्ञानम् = बोधः। यथा "पूर्वश्चासिद्धमि" त्यत्र पूर्वशब्दस्मरणम्, यथा वा मातरि पितरि च ज्ञाते पुत्रस्य स्मरणम्। स्वापे = स्वप्नावस्थायाम्। एकस्य सम्बन्धिनः, साक्षात्कारः = प्रत्यक्षम्।

सामर्थ्यविहीनतया = शक्तिराहित्येन। अयथोचितपादविन्यासा =

---

अपने आचरण तथा पौरुष से बहुत से दिल्ली वासी भी वशंवद बना लिए। अधिक क्या कहना? मेरा पुत्र मुअज्जम भी समय-समय पर उसी की प्रशंसा किया करता है। मेरी बेटी रोशनआरा भी उससे अत्यन्त अनुरक्त होकर उसके बिना दिनानुदिन क्षीण होती जा रही है। हा! मैं मारा गया। मेरा प्रतापसूर्य अस्त हो गया।

जाग्रदवस्था में 'एक सम्बन्धी का ज्ञान दूसरे सम्बन्धी का स्मरण कराता है' परन्तु स्वप्न की अवस्था में 'एक सम्बन्धी का प्रत्यक्ष दूसरे सम्बन्धी का प्रत्यक्ष करा देता है' इस कारण से रोशनआरा के शब्द के प्रत्यक्ष-श्रवण-के पश्चात् प्रत्यक्ष सा (महाराज ने) देखा कि एक ओर से दरवाजा खोलकर रोती हुई- अश्रुधारा से धुले स्तनों वाली, (वियोग दुःख के प्रभाव

पाद-विन्यासा, कटि-पर्य्यन्तावलम्बि-केशपाशा, धैर्य्य-विरहात् स्खलदवगुण्ठन-वसना सवेग स्वपितुः सम्मुखमागता रसनारी।

न्पूर्वैना कोपाऽऽकुलः समवादीदवरङ्गजीवो यत्-"कर्कशे! मम शत्रु स्मरन्ती, उन्मादावस्थां नाटयन्ती, मुहुर्मुहुर्मां पीडयसि। तदीप-धमेतस्य समुचितो दण्ड। अस्मिन्नपि क्षणे प्रकृतिं न यासि चेत्ताड्यसे"—

श्रुत्वैतद् विस्फार्य्य नयने निरीक्ष्य तम्, ताटशमरुणैरपाङ्गैर्दहन्तीव स्फुरितेनाधरेण शपमानेव, उच्चस्वरेण रसनारी—'नोन्मादः, प्रकृतिं यामि, स्वयमात्मानं दण्डयामि, शाम्यतु शत्रु-शासनस्य भवतः

---

अयथायोग्याद्विस्थापना। स्खलदवगुण्ठनवसना=निपतदवगुण्ठनवस्त्रा। सवेगम्=सत्वरम्।

कर्कशे!=कठोरे!। उन्मादावस्थाम् = कामकृतामुन्मत्तताम्। नाटयन्ती=अभिनयन्ती। दण्ड =शासनम्। प्रकृतिम्=स्वाभाविकावस्थाम्।

अपाङ्गैः=नेत्रप्रान्तैः। दहन्तीव = ज्वालयन्तीव। प्रस्फुरितेन = चपलितेन। शपमानेव=अनिष्टं कथयन्तीव। शत्रुशासनस्य=रिपुना

---

से) अस्थि-चर्म-मात्र शरीर वाली, शक्तिहीन होने के कारण लड़खड़ाती हुई, कमर तक लटकते हुए केशपाश वाली और अधीर होने के कारण नीचे गिरते हुए घुरके वाली रोशनआरा बहुत वेग से अपने पिता के सम्मुख आई।

उसे देखते ही कोप से व्याकुल औरङ्गजेब ने उससे कहा—"अरी कर्कशा! मेरे शत्रु की याद करती हुई और अपनी उन्मादावस्था का अभिनय करती तू बार बार मुझे कष्ट दे रही है। इसकी दवा समुचित दण्ड ही है। यदि अब भी तू रास्ते पर नहीं आती तो मार खानी होगी।"

यह बात सुनकर आँखें खोल्कर अपने पिता को कोपाकुल देखकर अपनी लाल लाल आँखों से उसे (अपने पिता को) जलाती सी और अपने कम्पमान अधरोष्ठ से उसे अभिशाप देती-सी (रोशनआरा ने) उच्च स्वर से "उन्माद नहीं, मैं अपनी प्रकृति को प्राप्त कर रही हूँ, स्वयम् अपने

पीडा"—इति व्याहृत्य स्वतेजसा सदासेर दिल्लीश्वरमपि धर्षयन्ती, नागदन्तिकावलम्बितामेकां छुरिकां त्सरौ गृहीत्वा, झटिति कोशादाकृष्य, 'ईदृशजीवनान्मरणं श्रेय.'—इति कथयन्ती, बलेनाऽऽहत्य स्ववक्षो विददार, रुधिर-धाराभिश्च समं भूमौ निपपात।

दशामेतां स्वप्ने पश्यन्, स्वयं केनापि बलेनाऽऽहत इव, 'हा हा! हन्त हन्त! कष्टं कष्टम्! विरम विरम!" इति विलपन् झटित्युत्थाय करौ प्रसार्य, "उत्तिष्ठ, एषोऽस्मि"—इति कथयन्, सपदि पर्य्यङ्कादवतीर्य्य, प्रस्खलन्निव कोणात् कोणे समधावद् महाराजः। तावद् व्यजनचालकेन—'महाराज! महाराज! अवधीयताम्, स्वप्नोऽसौ, स्वप्नोऽसौ"—इति साम्रेडनमुक्तश्चक्षुर्मी

शनस्य। धर्षयन्ती = भीषयन्ती। त्सरौ = मुष्टौ। श्रेय = कल्याणम्, शोभनम्। आहृत्य = प्रहारं कृत्वा। विददार = द्विधा कृतवती। रुधिरधाराभिः = लोहितप्रवाहैः।

बलेन = बलात्कारेण। आहत इव = ताडित इव। प्रस्खलन्निव =

को दण्डित कर रही हूँ, शत्रु को विदलित करने वाले आपकी पीडा शान्त हो" यह कहकर अपने तेज से भृत्यसहित औरङ्गजेब को भी डराती हुई, दीवार में लगी खूटी पर अवलम्बित एक छूरे का मूँठ पकडकर शीघ्रता से कोश से उसे निकाल कर "इस तरह के जीवन से मरना ही अच्छा है" यह कहती हुई रोशनआरा ने बलपूर्वक छूरा मारकर अपने हृदय को विदीर्ण कर दिया और रक्तधारा के साथ साथ स्वयम् भी वह जमीन पर गिर गई।

स्वप्नावस्था मे इस दशा को देखते हुये, स्वयम् भी किसी के द्वारा बलपूर्वक आहत से होकर "हा! हा! हन्त! हन्त! बहुत कष्ट है! बहुत कष्ट है! ठहरो, ठहरो!" इस प्रकार विलाप करते हुये झट से उठ कर हाथ फैला कर "उठो, मैं आ गया" यह कहते हुये, शीघ्रता से पलङ्ग से उतर कर गिरते हुये से महाराष्ट्रराज एक कोने से दूसरे कोने की ओर दौड़ने लग गये। उस समय पङ्खा झलने वाले सेवक द्वारा "महाराज! महाराज! घबरायें नहीं, यह स्वप्न है, स्वप्न है" इस प्रकार बार बार कहे जाने पर

सम्मृज्य समद्राक्षीत्—यद् न तत्र रशनारी, न चाऽवरङ्गजीवः।

ततः स्वप्नोऽयमिति जानानोऽपि वञ्चित इव, मुग्ध इव, दीर्घमुष्णं निश्वसन्, तेनैव सघडक्कतिना वक्षसा धमद्धमद्धमन्तीभिर्धमनी-भिर्लोल-लोलाभ्यां लोचनाभ्यां, शुष्कतरेण च कण्ठेन निर्वृत्यै पुनः शयनीयमधिष्ठित करयोरङ्गुलीः सङ्ग्रथ्य, हस्तौ सप्रसारमुत्तानीकृत्य, वदनं व्यादाय, नाडीः सस्तभ्य, जृम्भयाऽऽलस्यमिवोद्गीर्य, किञ्चिज्जलं पीत्वा, शुष्कप्रायां गल-नलिकामार्द्रयित्वा, दुःस्वप्न-जनितारिष्ट-शङ्कां निवर्त्य, भगवन्तं नारायणं मातरं दुर्गां

निपतन्निव। अवधीयताम् = समाश्वस्यताम्। सम्मृज्य = सम्मर्द्य। जानानोऽपि = निश्चिन्वानोऽपि। धमनीभिः = शिराभिः। लोल-लोलाभ्याम् = अतिचपलाभ्याम्। निर्वृत्यै = सुखाय। शयनीयम् = विष्टरम्। सप्रसारम् = प्रसारणपूर्वकम्। उत्तानीकृत्य = उत्थाप्य। व्यादाय = विस्फार्य। गलनलिकाम् = कण्ठस्रोत, दुःस्वप्नजनितस्य,

महाराज ने आँखें पोंछ कर देखा कि वहाँ न तो रोशनआरा थी और न औरंगजेब ही।

तत्पश्चात् 'वह स्वप्न था' इतना समझ कर भी वञ्चित तथा मुग्ध हुये की तरह लम्बी साँस लेते हुये, धड़धड़ाते हृदय, धमकती धमनियाँ, चञ्चल आँखों तथा सूखे कण्ठ से युक्त महाराज पुनः आराम-सुख के लिये शय्या पर चले गये। दोनों हाथों की अंगुलियों को परस्पर फँसा कर, हाथों को उत्तान मुद्रा से * ऊपर उठा कर मुँह फैला कर, नाड़ियों को स्तम्भित कर, जम्भाई लेकर आलस्य को प्रकटित कर, कुछ पानी पीकर शुष्कप्राय गले की नली को आर्द्र बना कर दुःस्वप्नदर्शनजन्य दोष की आशङ्का को निवृत्त कर भगवान् नारायण, माँ दुर्गा तथा कुक्कुट ब्राह्मण का स्मरण कर महाराज

* इस दशा का वर्णन शब्द में नहीं किया जा सकता है। निद्राकुल व्यक्ति की निद्रा से पूर्व की यह मुद्रा अनुभवमात्र गम्य है।

कुक्कुटञ्च स्मृत्वा पुन शिश्ये । सान्द्र-तन्द्रा-मुद्रित नयनस्यास्य सपदि पुनरङ्कान्यालिलिङ्ग निद्रा ।

स्वप्न-जर्जरीकृत-निद्रस्य सुप्तोत्थितस्य पुनः शयनेऽपि न भवत्येव सुषुप्तिरिति कथमपि सुप्तोऽप्येष पुनरपश्यद् यद्—ज्वर-जर्जरितो जराजीर्णो जयपुर-ज्या-जानिर्महाराजो जयसिंहः काञ्चन-पर्य्यङ्कमधिष्ठित, महोपबर्हाश्रितः, अर्द्धोपविष्टः, निश्चिदुच्छ्वसन्, बाल-व्यजनेन वीज्यमानः, भव-रोग-भेषज-भूतानि भगवन्नामानि भज्यमानेन स्वरेण जपन् स्वामिमुख एव स्थितोऽस्तीति।

---

अरिष्टस्य = दुर्योगस्य, शङ्का । कुक्कुटम् = एतन्नामकं ब्राह्मणविशेषम् ।

वाराणस्या दक्षिणेऽस्ति कुक्कुटो नाम वै द्विजः ।
तस्य स्मरणमात्रेण दुःस्वप्नः सुखदो भवेत् ॥

इति स्कान्देऽभिहितत्वात् । गजेन्द्रमोक्षपाठोऽपि दुःस्वप्नफलनाशक इति स्मर्यते । शिश्ये = सुष्वाप । सान्द्रया = घनीभूतया, तन्द्रया, मुद्रिते नयने यस्य तस्य । आलिलिङ्ग = आशिश्लेष ।

स्वप्नेन, जर्जरीकृता, निद्रा, यस्य तस्य । सुषुप्ति = स्वप्नविरहितस्वापः । जयपुरस्य, ज्या = भूमि, जाया यस्य सः जयपुरज्याजानिः । "जायाया निङ्" । भवरोगस्य भेषजभूतानि = औषधायमानानि ।

---

पुनः सो गये। घनी तन्द्रा से निमीलित नेत्र वाले महाराज को पुनः निद्रा आ गई।

स्वप्न से निद्रा के विघटित हो जाने के कारण सुप्तोत्थित व्यक्ति के पुनः सो जाने पर भी उसे गाढ़ी नींद नहीं आती है—अतः किसी प्रकार सोने के बाद भी महाराज ने देखा कि ज्वर से जर्जरित, जरा से जीर्ण एवम् जयपुर की पृथिवी के स्वामी महाराज जयसिंह सुवर्णमय पलंग पर तकिये के सहारे लेटे हुये, लम्बी साँस भरते हुये, चामरों से पंखा किये जाते हुये और संसारात्मक रोग की औषधि भगवन्नाम का भग्न स्वर से जप करते

दृष्टवांश्च यज्जयपुरेश्वरः किञ्चित् स्वामिमुखं परिवृत्य निजेन सहैवमालपितवान्—

जय०—वीर ! दिष्ट्या मम चरम-निश्वास-विमोक्षणात् प्रागेव समुपस्थितोऽसि ! त्वां दृष्ट्वा भारतभुवं पुत्रवतीं मन्वानः सुखेन प्राणानुत्स्रक्ष्यामि। न मे सामर्थ्यमुत्थायाऽऽश्लेष्टुमिति न गृह्यतां मम दोषः।

स्वयम्—महाराज ! एवमल्पीयसा समयेनेदृशीं दशामापत्स्यते देवः—इति स्वप्नेऽपि नाभूदनुभवः।

जय०—देहः क्षणभङ्गुरः, तत्रापि च समयेऽस्मिन् देहत्याग एव मे हर्षदः।

---

दिष्ट्या = भाग्येन। चरमनिश्वास-विमोक्षणात् = अन्तिमश्वासत्यागात्। मरणादिति यावत्। समुपस्थितः = समुपयातः। उत्स्रक्ष्यामि = त्यक्ष्यामि। न गृह्यताम् = नावधार्यताम्।

आपत्स्यते = प्राप्स्यति। अनुभवः = सम्भावना।

क्षणभङ्गुरः = अत्यल्पसमयनाश्यः।

---

हुये उनके समक्ष ही स्थित थे। यह भी देखा कि जयपुरेश्वर उनकी ओर देख कर उनके साथ कुछ बातचीत कर रहे थे—

जय०—वीर ! सौभाग्य से मेरी मृत्यु से पूर्व ही आप यहाँ आ चुके हैं। आपको देखकर भारतभूमि पुत्रवती मानता हुआ मैं प्राणत्याग करूँगा। अब मुझमें उठकर गले लगाने की शक्ति नहीं है। अतः आप इसके लिये मेरी त्रुटि न समझें।

स्वयम्—महाराज ! मैंने तो स्वप्न में भी यह अनुभव नहीं किया था कि आप इतने ही थोड़े समय में इस स्थिति को प्राप्त कर लेंगे।

जय०—शरीर क्षणभङ्गुर है और इस समय तो मेरे लिये शरीर त्याग ही हर्षप्रद है।

स्वयम्—देव ! किमिति ?

जय०—तथैव प्रतिज्ञातवानस्मि—यद् दिल्लीं गतो भवानवहेल्येत चेत् प्राणांस्त्यक्ष्यामि, बहुशश्च साभिमानमुक्तवानस्मि यद्—न भवत्यस्मादृक्षाणां क्षत्रियाणां भग्ना प्रतिज्ञा। तद्भवन्तं मैत्र्या विश्वास्य दिल्लीं प्रेष्य, महायन्त्रणामनुभावितवानस्मि। तदेव कल्मषमलीमसेन देहेन नाहमात्मानं कलुषयितुमुत्सहे।

स्वयम्—[ कर्णौ पिधाय ] देव ! शान्तं पापम् ! शान्तं पापम् !! [ अञ्जलिं बद्ध्वा ] महाराज ! नास्य विश्वास-घातस्याल्पिष्ठमपि कारणं देवः। दिल्ली-कलङ्को वा मम दुरदृष्टानि वा कारणम्। अत्रभवतस्तु आशिषामेव परिणामो यज्जीवन् निवृत्तोऽस्मि-

---

अवहेल्येत = तिरस्क्रियेत। भग्ना = त्रुटिता। महायन्त्रणाम् = विपुल मानसिक खेदम्। कल्मषमलीमसेन = पापमलिनेन। कलुषयितुम् = दूषयितुम्। उत्सहे = समर्थो भवामि।

अल्पिष्ठम् = न्यूनतमम्। जीवन् = प्राणान् धारयन्। निवृत्तः =

---

स्वयम्—देव ! ऐसा क्यों !

जय०—मैंने ऐसी ही प्रतिज्ञा की थी कि यदि दिल्ली जाने पर आपका वहाँ अपमान होगा तो मैं प्राणत्याग कर दूँगा और अनेक बार मैं अभिमान के साथ घोषणा कर चुका हूँ कि मेरे जैसे क्षत्रियों की प्रतिज्ञा वृथा नहीं होती। मैत्री द्वारा आपको विश्वास दिलाकर दिल्ली भेजकर मुझे बहुत बड़े मनोदुःख का अनुभव करने को बाध्य किया गया है। इसलिये पाप-कलुषित शरीर का धारण कर मैं अपनी आत्मा को कलुषित करना नहीं चाहता।

स्वयम्—[ कान मूँदकर ] देव ! पाप शान्त हो ! पाप शान्त हो ! महाराज ! आप इस विश्वासघात के कारण नहीं हैं। इसका कारण तो वह दिल्लीकलङ्क है अथवा मेरा दौर्भाग्य ही। यह भी आपके आशीर्वाद का ही परिणाम है कि मैं जीवित ही वहाँ से अपनी राजधानी लौट आया। अतः आपके लिये ग्लानि करना उचित नहीं। क्षत्रियराज ! रक्षा करें, रक्षा करें !

इत्यस्थाने ग्लानिः! त्रायतां त्रायतां क्षत्रियराजः !! मादृशान् हेतू-कृत्य क्षत्रिय वंशावतंसानां युष्मादृशाणामस्मत्परम-पूज्यानां लेश-मात्रेणापि क्लेशः शुभोदर्क्क-विघटक एव स्यात्। मा मां ग्लपय! न्नु मे जीवनं मलिनय!! अवरङ्गेऽप्रीविद्धश्चेत् तत्सम्बन्ध-सूत्रं त्रोटयित्वा स्वतन्त्रो राजपुत्र-राज्यसिंहासनमलङ्करोतु देवः। ससेन. - सकोशः सप्रजोऽहं सन्नद्धोऽस्मि चरणौ सेवितुम्। मनि अवरङ्गेन युयुत्सौ संवृत्ते, मरुधराधीशोऽपि ततो दिल्ली-कलङ्क-शोणित-पङ्क-चर्चा - व्याकुल-कृपाणादुदयपुराधीश- श्रीराज-सिंहात्, इतश्च दिल्ली-दुरित-दर्प-दलन-दीर्घ - भुजदण्डोद्यत्प्रचण्ड-दण्डादस्मभवतो विभ्यदगत्या मैत्रीमेव रक्षिष्यति। मयि च प्रपन्ने

---

प्रत्यागतः। अस्थाने = अनवसरे। हेतूकृत्य = कारणीकृत्य, शुभोद-र्कस्य = शुभपरिणामस्य, विघटकः = नाशकः। स्वतन्त्रः = अकरदः। सकोशः = सनिधिः। युयुत्सौ = योद्धुमिच्छौ। दिल्लीकलङ्कशोणितपङ्कस्य, चर्चया = सम्मर्देन, व्याकुलः कृपाणः, यस्य तस्मात्। दिल्लीदुरितस्य = दिल्लीपापस्य, अवरङ्गजीवस्य दर्पदलनाभ्याम्, दीर्घाभ्याम्, भुजदण्डाभ्याम्, उद्यन् = उदयं प्राप्नुवन्, प्रचण्डः दण्डः = दमनं यस्मात्तस्मात्।

---

मुझमें साधारण व्यक्तियों के कारण यदि क्षत्रिय वंशावतंस आप जैसे परम-पूज्यों को थोड़ा भी क्लेश होगा तो उससे सत्परिणाम का विघटन ही होगा। आप मुझे लज्जित न करें। मेरे जीवन को मलिन नहीं करें। यदि आप औरङ्गजेब से अप्रसन्न हो गये हैं तो उससे सम्बन्ध तोड़कर स्वतन्त्ररूप से राजपुताने की राजगद्दी पर बैठ जाँय। अपनी सेना, अपने कोश तथा अपनी प्रजा के साथ मैं आपके चरणों की सेवा करने के लिये उद्यत हूँ। औरङ्गजेब के साथ जब आप युद्ध करने को तैयार हो जायेंगे तब दिल्ली-कलङ्क के रक्तपङ्क के लेप में व्याकुल कृपाणवाले उदयपुर महाराज तथा दिल्लीपाप के दर्प के विदलन में विशाल भुजदण्ड के प्रभाव से दिये जाने-वाले प्रचण्ड दण्ड के प्रदाता आपके भय से मरुप्रदेशाधिपति भी अगत्या

सर्वोऽपि दक्षिण देशोऽत्रभवतः स्वेदेन सह स्व-शोणितं पातयितुं सज्जोऽस्ति; एवमस्माकं महामण्डले परस्परमैक्ये सञ्जाते के नाम वराका मौद्गलाः ? का वाऽल्पीयस्येषां शक्तिः ? स्मृत्वाऽपीदशमैक्यमस्माकं स्फुरति मे बाहुः, उत्साहैः धमन्ति च धमन्यः। त्यज्यतां विश्वास-घातकस्य क्ररतरस्यास्य अवरङ्गहवकस्य सङ्गः। पुनर्भारताभिजन-प्रताप-पताका दोधूयन्तां हिम-सानुषु, अकूपार-कूलेषु च। स्पृशतु च भारतीय-भेरी-नादः पारसीकानाम्, आरब्याणाम्, काम्बोजीयानाम्, त्रिवृत्तानम्, चीनानाम्, वर्मणाम्, सिंहलानाञ्च कर्णम्!!

---

बिभ्यत् = भयं कुर्वाणः। प्रपन्ने = शरणागते। धमन्यः = नाड्यः। धमन्ति = प्रफुल्ला भवन्ति। हिमसानुषु = प्रालेयाद्रिनितम्बेषु। अकूपाराणाम् = वारिधीनाम्, कूलेषु = तटेषु च। त्रिवृत्तानाम् = "त्रितानियाँ" इति ख्यातानाम्। वर्मणाम् = "बर्मा" इति ख्यातानाम्। अन्ये स्फुटाः, व्याख्याताश्च प्राक्।

---

हम लोगों के साथ मैत्री ही बनाये रक्खेंगे। जब मैं आपकी शरण में चला आऊँगा तब यह समस्त दक्षिणदेश आपके पसीने के साथ अपने रक्त को बहाने के लिये तत्पर हो जायेगा और इस प्रकार हम लोगों के महामण्डल में परस्पर एकता की स्थापना हो जाने पर ये क्षुद्र मुगल तथा इनकी शक्ति किस काम की होगी ? इस तरह की एकता का स्मरण करने पर भी मेरी बाहें स्फुरित हो उठती हैं, उत्साह से धमनियाँ धमकने लग जाती हैं। इस विश्वासघाती क्रूरतर नीच औरङ्गजेब का साथ छोड़ें। पुनः हिमालय के शिखर पर और समुद्र के तट पर भारतवासी की विजयपताका फहराये और भारतीयों की भेरी का शब्द पारसीकों, अरबियों, कम्बोजदेशवासियों, त्रिवृत्तदेशवासियों, चीनियों, बर्मावासियों तथा सिंहलदेशनिवासियों के कानों तक पहुँचे।

—

जय०—वीर ! तथैवाचिरात्सर्वं सम्पत्स्यते, किन्तु वृद्धस्य मे सत्यप्रतिज्ञता-महाव्रतं मा जर्जरय !

स्वयम्—[ किञ्चिदुच्छ्वस्य ] महाराज ! जाज्वल्यमाने यवन-प्रताप-तपने कथं सर्वं तथैव सम्पत्स्यते ?

जय०—वीर ! यवनानां प्रताप-तपनोऽसौ तथा विलयं यास्यति, यथैतस्याऽऽख्यानकमपि न श्रोष्यते परतः ।

स्वयम्—महाराज ! भवादृशे गृहीत-सेनापति-कार्ये कथं यवन-राजस्य विपच्छङ्का ?

जय०—एषोऽहमपि परलोकं प्रस्थितप्रायः ।

स्वयम्—देव ! तथाऽपि वीरसू राजपुत्र भूमिः । अत्रभवति भारतं विरहय्य लोकान्तरं सनाथितवत्यपि कुमाररामसिंहस्तथैव मर्य्यादया सेनापति-कार्य्यं निर्वक्ष्यति—इति कथं सम्भाव्यते

---

जर्जरय = शिथिलय । आख्यानकम् = कथानकम् ।

वीरसू = वीरप्रसविनी । निर्वक्ष्यति = सञ्चालयिष्यति ।

---

जय०—वीर ! कुछ ही समय में वैसा ही होनेवाला है । किन्तु मुझ वृद्ध के सत्यप्रतिज्ञतास्वरूप महान् व्रत का विघटन न करें ।

स्वयम्—[ कुछ लम्बी साँस लेकर ] महाराज ! यवनों के प्रतापसूर्य के देदीप्यमान रहते सब कुछ वैसा ही कैसे होगा ?

जय०—वीर ! यवनों का यह प्रताप सूर्य इस प्रकार अस्त हो जायेगा कि बाद में इसका नाम भी लोग नहीं सुन सकेंगे ।

स्वयम्—महाराज ! जब तक आप जैसे वीरवर यवनों के सेनापति का कार्य करते रहेंगे तबतक उनकी विपत्ति की कैसे शङ्का भी हो सकती है ?

जय०—मैं भी तो अब परलोक पहुँच-सा जा चुका हूँ ।

स्वयम्—देव ! तथापि राजपुताने की पृथिवी वीरों की माता है । भारत को छोड़कर आपके परलोक प्रस्थान के बाद भी तो कुमार रामसिंह इसी मर्यादा के साथ सेनापति का कार्य करते रहेंगे । ऐसी दशा में यह

भवत्कुल-कृपाणावलम्बस्य प्रलम्बस्य यवन-राज्यस्य शैथिल्यम् ?

जय०—[ उच्छ्वस्य ] वीर! सत्य वद्सि, मयि महाध्वन्य-पृथ्वन्ये सवृत्तोऽपि न वार विरहिना भवेद् भारत भूमि, राजपुत्र देशे गृहे गृहे मादृशा मत्तोऽप्यधिकाश्च रण धीरा वीराः समुल्लसन्ति। परन्तु राज्यमाभ्यन्तर बलमवलम्ब्य स्थिर भवति, न तु बाह्यम्। स्नेह पाश बद्धाः सुहृदः प्रजा भृत्याश्च राजार्थे प्राणानपि तृणाय मन्यन्ते, क्रौर्य्य-कण्टकोत्सारिताश्च त एव राजान हन्तुमवसर प्रतीक्षन्ते। प्रत्यक्षमेव दृश्यताम्! यदि भवता सह मैत्री स्वच्छेन निश्छद्मना च हृदा समरक्षिष्यद् दिल्लीपति, तदखण्डस्तस्य प्रतापो दक्षिण देशेऽपि बद्धमूलः प्राज्वलिष्यत्। भवत्खड्गमाश्रित्य स विजयपुराधि महाराजानपि व्यजेष्यत, प्रासारयिष्यच्च स्वप्रताप सिंहल द्वीपेऽपि। एव मत्प्रतिज्ञा रक्षण-

वद्सि = कथयसि। महाध्वनि=मृत्युमार्गे। क्रौर्यमेव कण्टकम्, तेन उत्सारिताः = उत्खाताः, सिंहलद्वीपे = रामेश्वरादनतिदूरे समुद्रगर्भस्थे

कैसे सम्भावित है कि आपके कुल में उत्पन्न वीरों के कृपाणों पर आश्रित यवनों का विशाल राज्य शिथिल हो जायेगा?

जय०—[ लम्बी साँस लेकर ] वीर! आपका कहना ठीक है, मृत्यु-मार्ग पर मेरे प्रयाण के पश्चात् भी यह भारतभूमि वीरहीन नहीं हो जायेगी। राजपुताने में घर घर में मेरे जैसे और मुझसे भी बड़े-बड़े रणधीर वीर भरे हैं। परन्तु राज्य आभ्यन्तर बल पर सुदृढ होता है, बाह्यबल पर नहीं। स्नेहपाश में निबद्ध मित्र, प्रजा तथा सेवक राजा के निमित्त अपने प्राणों को भी तुच्छ समझते हैं, किन्तु क्रूरतारूपी काँटों से दूर हटाये गये मित्र आदि राजा के हनन की ही प्रतीक्षा करते रहते हैं। प्रत्यक्ष ही देखें—यदि आपके साथ स्वच्छ तथा निश्छल हृदय से दिल्लीश्वर मैत्री की रक्षा करते तो आज दक्षिणदेश में भी उनका अखण्ड प्रताप बद्धमूल हो गया होता। आपके खड्ग का सहारा लेकर वे विजयपुराधीश्वर को भी जीत सके होते और सिंहलद्वीप में भी अपने प्रताप को फैला सके होते। साथ ही अपनी प्रतिज्ञा

सद्गुणश्चावलोक्याहमपि द्विगुणतरोत्साहेन मैत्र्युचितकार्य्याणि निरवक्ष्यम् । मयि भवति च तथाऽनुगते; शेषाः सर्वेऽपि महाराजास्तं सममानयिष्यन् । आवयोर्मन्त्रणामुररीकृत्य यदि स वैदिक-धर्म्म-विरोधमत्यक्ष्यत्, ततः सर्वा अपि प्रकृतयः पितरमिवैनमपूजयिष्यन् । एवं स्ववशीकृताखिल भारतवर्षस्य वर्षीयसोऽस्य प्राज्य राज्य वर्षाणां सहस्रेणाप्यभेद्य समपत्स्यत । परमधुना दुराचारैरेतस्य न कोऽपि भारतीय एवं स्निह्यति—इति सत्स्वपि वीर-सहस्रेषु अचिरादिलयं यास्यति यवन-राज्यम्, विजयपुर-गोलखण्ड-नगराद्यधीशाः प्रसिद्धाः शत्रवोऽस्य । चिरशत्रुरुदयपुराधीश, नन्दक-सम्प्रदायाऽऽचार्य्य-तिरस्कारिणाऽस्य पाञ्चालवीराः सर्वेऽपि शिक्ष्या विपक्षाः । भारतचन्द्रादि-महामात्य-जनावहेलनेन

द्वीपविशेषे । भ्रमादनेके तमेव लङ्कात्मना जानन्ति, किन्तु भूमध्यरेखाया, तदसत्त्वाद्वाल्मीकिप्रदर्शित-शतयोजनात्मकान्तरालस्य चाविद्यमानत्वान्नासौ लङ्केति निर्धारितमिति वेदितव्यम् । वर्षीयसः = अतिवृद्धस्य । प्राज्यम् = समृद्धम् । शिक्ष्या = "सिक्ख" इति ख्याताः । भारतचन्द्रादीनाम्, महा-

के रक्षण में उन्हें दत्तचित्त देखने पर मैं भी द्विगुण उत्साह से मैत्री के निर्वाह के लिये उचित कार्य करता रहता । मेरे तथा आपके अधीनस्थ हो जाने पर अन्य सभी महाराज उनका सम्मान करते । हम दोनों की मन्त्रणा को मानकर यदि वे वैदिक धर्म से अपना विरोध छोड़ देते तो समस्त प्रजा पिता के समान उनकी पूजा करती । इस प्रकार से समस्त भारतवर्ष को वश में कर लेनेवाले उन वृद्ध यवनसम्राट् का विशाल राज्य हजार वर्षों के के बाद भी अक्षुण्ण बना रहता । परन्तु उनके दुराचारों के कारण कोई भी भारतवासी उनके साथ प्रेम नहीं करते । अतः असंख्य वीरों के रहने पर भी यवनराज्य शीघ्र ही विलीन होनेवाला है । विजयपुर तथा गोलखण्ड आदि के महाराज यवनसम्राट् के प्रसिद्ध शत्रु हैं, उदयपुराधीश भी पुराने शत्रु हैं और गुरुनानक के सम्प्रदाय आचार्यों के तिरस्कारक इस यवनाधीश के पञ्जाबनिवासी सभी सिक्खसम्प्रदाय के वीर विपक्षी हैं । भारतचन्द्र

मद्वदेशे न कोऽप्यस्य मित्रम्। भवान् जगद्विदित एतस्य सपत्नः। रामकाश्च रामसिंहादयोऽप्येतस्य विश्वास-घातकतायाः स्मारं स्मारं सन्धि बन्धं शिथिलीकृतवन्त—इति न चिरमवतिष्ठते यवनराज्यम्।

स्वयम्—[ रोष-ज्वलित-नयनः ] देवोऽश्वमेघ-यज्ञे शाकल्यैः साकं यवन राज्य प्रतापमपि हुतवान्, यद्गीतानि गायं गायं योषितो बालान् शाययन्ति—इति कथन्न स्यान्नाश एषां कदाचारिणां प्रजा-मृग-वृकाणाम्॥

जय०—[ प्रवृद्धोच्छ्वासवेगः ] वीर! प्रत्यक्षमिव पश्यामि यत् कोप-ज्वलन-ज्वाला परितः प्रवृद्धाः। अत्यन्त यत्नमानोऽपि

मान्यानाम्, अवहेलनेन = तिरस्करणेन, अयदा-मङ्गलादिकाव्यरचयिता वङ्गभाषाया महाकवि श्रीभारतचन्द्रोऽजरङ्गजीवेन दिल्लीमाहूतस्तिरस्कृतश्चेति तेनैवालेखीति मूलकारानुमोदिता टिप्पणी।

शाकल्यैः = हविष्यैः। गायं गायम् = गीत्वा गीत्वा, शाययन्ति = स्वापयन्ति। प्रजा एव मृगाः, वृकाणाम् = दीर्घोदराणाम् "हुंडार" इति ख्यातानाम्। प्रजाहिंसकानामिति भावः।

आदि महामान्य व्यक्तियों के तिरस्करण से वङ्गाल में भी उनका कोई मित्र अवशिष्ट नहीं है। आप उनके विश्वविख्यात शत्रु हैं ही। मेरे बन्धु रामसिंह आदि भी उनकी विश्वासघातकता का स्मरण कर उनके साथ अपने सन्धि-बन्धन को शिथिल कर चुके हैं। अतः यवनों का साम्राज्य चिरकाल तक नहीं रहनेवाला है।

स्वयम्—[ *रोष से आँखें लाल कर* ] *अश्वमेध यज्ञ में 'शाकल्य'* के साथ साथ श्रीमान् ने यवन राज्य के प्रताप का भी हवन कर दिया। जिनके गीत गा गा कर स्त्रियाँ बच्चों को सुलाया करती हैं इसलिए इन दुराचारी तथा प्रजारूपी मृग के लिये भेड़िये का विनाश क्यों न हो!

जय०—[ वेग से लम्बी साँसें भरते हुये ] वीर! मैं तो प्रत्यक्ष-सा देख रहा हूँ कि कोपानल की ज्वालाएँ चारों तरफ धधक रही हैं। कठिन

न पारयत्यवरङ्गजीवः प्रशमयितुम्। एष रोदिति, विलपति, अतिपश्चात्तापैस्तप्यते, सर्वोऽपि चास्य पराक्रमी घृतधारेव ज्वाला-जालमेतद् द्विगुणयति, न तु शमयति। सोदर्य्याणां शिरश्छित्वा जरा-जर्ज्जरं जनकञ्च कारागारे निगृह्य, हत्या काण्ड सहस्रैः पर-लोकं यन्त्रणामयं विधाय, धूम-ध्वान्तेनेव दुर्य्यश सङ्घातेनाऽऽत्मानमावृत्य च समासादितमस्य राज्यं स्वयं हस्तात् स्खलति। एतस्य नैजा अप्यमात्या बान्धवा सैनिका प्रकृतयश्च प्रत्यर्थिनः सवृत्ताः, सर्वेऽपि भारतीया एत हस्तावुद्यम्य शपन्ति। कोप ज्वलन-ज्वाला-धूम्याभिर्मशका इव परितो यवन वराका प्रनष्टा।

महाराष्ट्र-वीरा दिल्लीं विलुण्ठन्ति। भग्नोऽसौ दिल्लीश्वर-प्रासाद। क्वासौ वराकः कदर्य्योऽवरङ्गजीवः—इत्यस्य देहोऽपि नोपलभ्यते।

घृतधारेव = सर्पि प्रवाह इव। यन्त्रणामयम् = सन्टप्रायम्। कोपज्वलनज्वालानाम्, धूम्याभि = धूमसमूहैः।

प्रयास के बाद भी औरङ्गजेब उन्हें शान्त करने में समर्थ नहीं हो रहे हैं। स्वयम् तो रोते हैं, विलाप करते हैं और अत्यन्त पश्चात्ताप से सन्तप्त हो रहे हैं तथा उनके सहायक और घृत की धारा के समान उन ज्वालाओं को द्विगुणित बना रहे हैं, न कि शान्त कर पा रहे हैं। अपने सगे भाइयों के शिर काट कर, जरा से जर्जर जनक को कैद कर, हजारों हत्या काण्डों से अन्य लोगों को सङ्कट ग्रस्त बना कर एवम् धूमकृत अन्धकार के समान अपने दुर्यशः समूह से अपनी दृष्टि को आच्छन्न कर अर्जित उनका राज्य अपने आप उनके हाथों से जा रहा है। उनके अपने भी अमात्य, बान्धव, सैनिक तथा प्रजागण उनके शत्रु हो चुके हैं और सभी भारतीय लोग हाथ उठा कर उन्हें शाप दिया करते हैं। कोपानल की ज्वाला से उपस्थित धूम समूह से मच्छरों की तरह वे दुष्ट यवन चारो ओर विनष्ट प्राय हो हो चुके हैं।

महाराष्ट्र के वीर दिल्ली को लूट रहे हैं। दिल्लीश्वर का प्रासाद गिर चुका है। वह वराक (बेचारा) औरङ्गजेब कहाँ है ? उसका तो शरीर भी उपलब्ध नहीं होता।

आः ! किं स्वप्नमिव पश्यामि ? [ दीर्घं निश्वस्य ] विश्वम्भर ! विलक्षणस्ते महिमा। भगवन् ! चिरमुद्भ्रान्तोऽस्मि जालेष्वेतेषु। सम्प्रति दर्शयाऽऽत्मानम् ! [ उछ्वस्य ] दिष्ट्या दृष्टोऽसि ! अहो शोभा ! स्मृत एव सपदि समायातोऽसि। शारदाऽऽकाश-श्यामेषु त्वदाङ्गेषु तारका इव स्वेद बिन्दवो भासन्ते। गलित-कुसुमबन्धनाः कुञ्चित मेचक कचाः स्वेदार्द्रौ कपोलौ चुम्बन्ति। सौदामिनी वृन्द-विनिन्दकमिदं वसनमंसात् स्खलति। मौक्तिकहारा कुसुममालिकाश्च परस्परं सङ्ग्रथिताः। [ सगद्गदम् ] कन्दरान् प्रविश्य, कर्णौ सम्मुद्रय, चक्षुषी सम्मील्य, श्वासमवरुध्य, मनो नियम्य, योगिराजैरपि कथं कथमपि ध्येयं देहि ते पादाम्बुजम्।

जालेषु = इन्द्रजालायमानेषु जगत्सु। स्वप्नेष्विति यावत्। शारदाकाशवत्, श्यामेषु = नीलेषु, सौदामिनीवृन्दस्य = तडिद्गणस्य। विनिन्दकम् = विजेतृ। योगिराजैरपि कथं कथमपि, अविजितहृषीकाणामात्मात्मीयगणनिपष्टिमनसान्तु का कथा।

आः ! क्या मैं स्वप्न देख रहा हू ? [ दीर्घ श्वास लेकर ] विश्वम्भर ! तुम्हारी महिमा विचित्र है। भगवान् ! इन विभ्रम जालों में मैं चिरकाल से भ्रमण कर चुका। अब अपने दर्शन दो। [ लम्बी साँस लेकर ] सौभाग्य से तुम्हारे दर्शन हो चुके। अहो ! कैसी अद्भुत शोभा ! स्मरण करते ही यहाँ आ गए। शरदृतु के आकाश के समान साँवले तेरे शरीर में तारों के समान पसीने की बूँदें पभासित हो रही हैं। कुसुम बन्धन से रहित तेरे घुँघराले और काले बाल पसीने से भींगे तेरे कपोलों को चूम रहे हैं। बिजली के समूह की निन्दा करने मे समर्थ यह तेरा वस्त्र कन्धे से गिर रहा है। मोतियों के हार एवम् फूल की मालाएँ परस्पर सग्रथित हैं। [ गद्गद स्वर में ] पर्वत की कन्दराओं में जा कर, कान मूँद कर, आँखें बन्द कर, प्राणयाम कर एवम् मनोवृत्तियों को रोक कर योगिराजों द्वारा यथा-कथञ्चित् ध्यान करने योग्य अपने चरण कमल मुझे भी ( दर्शन करने के लिए ) दो।

[ दीर्घमुच्छ्वस्य मन्देन स्वरेण ] नारायण ! दामोदर ! विश्वम्भर ! जगदीश्वर ! हरे ! हरे ! [ ततो दौर्बल्यमस्य वाचमरुणत् ]।

विलोक्यैवमुपरतप्राय राजपुत्र रणधीरता धुरन्धरम्, आत्मान नियन्तुमपारयन् बालक इव महाराष्ट्रराज उच्चै रुरोद, निद्रा चास्य समभज्यत। चिर विचार-मग्न इव चोत्थाय भगवन्त सूर्यं प्रणनाम।

× × ×

अथ महाराष्ट्रदेशे गृहे गृहे जयध्वनिः, गृहे गृहे भेरीनादः, गृहे गृहे च शस्त्रपरिष्कार। गुञ्जा-तोलनेन खिन्नमिव हिरण्य

---

समभज्यत = भग्ना। सूर्यं प्रणनाम = प्रत्यूहवारणार्थं दुःस्वप्नफलनिवारणार्थञ्च भास्कर नमश्चक्रे। प्रातरभवदिदशि व्यङ्गयम्। प्रात कालदृष्टश्च स्वप्नो नानर्थको भवतीति गाधयन् सत्यघटनया साम्य प्रस्तौति। अत एव स्वाप्निकानामानि वास्तविकविषयघटनाया सन्निश्रितानीति वेदितव्यम्।

× × ×

गुञ्जाभिः = रत्तिकाभिः, "रत्ती" इति हिन्दी, तोलनेन। खिन्नमिव=

---

[ दीर्घ श्वास लेकर मन्द स्वर से ] नारायण ! दामोदर ! विश्वम्भर ! जगदीश्वर ! हरे हरे ! [ तत्पश्चात् दुर्बलता ने उनकी वाणी को अवरुद्ध कर दिया ]।

उपर्युक्त रीति से राजपूताने की रणधीरता के धुरन्धर जयपुर महाराज को मुर्दा सा देख कर अपने को नियन्त्रित करने में असमर्थ महाराष्ट्र राज बालक के समान जोरों से रोने लग गये और उनकी निद्रा टूट गई। चिर काल तक विचार मग्न की तरह बैठ कर उठे और सूर्य को प्रणाम किया।

× × ×

आज के दिन महाराष्ट्र देश में घर घर में विजयध्वनि हो रही थी। घर घर में डङ्के पर चोट पड़ रही थी और घर घर में शस्त्रों का परिष्कार हो रहा

गर्भस्य हरेरेकं रूपमिव हिरण्यमानन्दयितुमष्टोत्तरं शतं यावदात्मना सन्तोल्य, ब्राह्मणेभ्यो व्यतरन्महाराष्ट्रपतिः। तावदागत्य विजयध्वजेनोक्तम्—देवानां प्रताप-तपन-प्रभावेण मथुरापर्यन्तं सपत्ना यवना अपसारिताः। अकस्माच्च मोहाबत्तखानो दिल्लीश्वरस्यान्यतमः सेनानीर्महत्या सेनया समायातः, किन्तु "हन्यतां हन्यतां जित जितम्"—इति सद्द्वेडं सेनासमुद्रे सोत्फालं पतितेषु महाराष्ट्रकं वीरेषु:

दुःखितमिव। खेदकारणं दर्शयति-हरेरेकं रूपं हिरण्यमिति। परमपुरुषस्वरूपसुवर्णस्य नीचतमगुञ्जासाम्यप्रदर्शनात्खेदः, एतच्च प्राचीनेन कविना केनचिदपि प्रदर्शितम्—

"उचिताऽपि तुले! किं तुलयसि गुञ्जाफलैः कनकम्"

हिरण्यस्य भगवद्रूपत्वञ्च—

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥

इति मानवादिषु सर्वकारणीभूतस्य हैमत्वोक्त्या स्फुटमेव। विश्वपद्मोत-श्रुतमथ्राक्षरो प्रतिपादितमिति वेदितव्यम्। अष्टोत्तरशतं यावत्=अष्टोत्तरशतवारम्। आत्मना सन्तोल्य, तुलादानमिति कथ्यते, लोकैः सर्वेभ्यो वस्तुदानेभ्यः प्रशस्यञ्चेदम्।

मोहाबत्तखानः="मोहब्बत खाँ" इति ख्यातः।

था। हिरण्यगर्भ भगवान् के एक स्वरूप-सा मान कर एक रत्ती भर सोना तौलनेमें खिन्नता का अनुभव करते हुए महाराष्ट्रराजने एक सौ आठ ब्राह्मणों को प्रसन्न करने के लिए अपने परिमाण के समान परिमाण का (तुलादान) सुवर्ण दिया। उसी समय आकर विजयध्वज ने कहा—श्रीमान् के प्रताप सूर्य के प्रभाव से मथुरा तक तो आपके शत्रु यवन पहले ही हटा दिए गए थे। पश्चात् एकाएक दिल्लीश्वर का अन्यतम सेनापति मुहब्बत खाँ बहुत बड़ी सेना के साथ आया; किन्तु "मारो, मारो, जीत लिया, जीत लिया" यह कहते हुए महाराष्ट्र वीर जब ललकारते हुये उसके सेना समुद्र

ते प्रहरमात्र-युद्धेनैव विमुखा अभूवन । रिपूणां रक्त-चन्दन-क्षोदेनेव गाढ-रक्तेन समभ्यर्च्य, अलि-कुलाऽऽकुले कमलैरिव चैषां सश्मश्रुवदनैः समपूज्यत भगवती वसुन्धरा, हतशेषा भटम्मन्याश्च पलायिताः । विलक्षणोऽयमत्र भवत प्रभावो यद्—"विजयतां महाराष्ट्रराजः"—इति गर्जनं श्रुत्वैव पश्चादनवलोक्यन सर्वोऽपि यवन भटः पलायते ।

इत्याकर्ण्य सर्वेऽपि सभास्थाः खणखणित-खड्गा वीरास्तार-तरेण स्वरेण "जयति सनातनो धर्म्मः, विजयतां महाराष्ट्रपतिः"—इत्यादि सहर्षमवोचन् ।

समस्तेऽपि महाराष्ट्र देशे सर्वत्र समुत्थितं भेरी झर्झर पणवादि-नाद सहकृतं प्रतिध्वनि निवह सहस्र गुणितं जयध्वनि ध्वानममुं कन्दरि-कन्दरेष्वपि प्रविष्टं गृहीत-ब्रह्मचारि-गुरु वेषेण वीरधीरेन्द्र-

---

में कूद पड़े तब एक पहर के युद्ध से ही उसकी सेना विमुख हो गई। रक्तचन्दन के रस के समान शत्रुओं के गाढ़ रक्त से हम लोगों ने भगवती वसुन्धरा की अर्चना कर पीछे भ्रमरों से आकुल कमलों के समान उन यवनों के मूँछ युक्त मुखों से भी उसकी (भगवती वसुन्धरा की) पूजा की। मरे हुए वीरों से अतिरिक्त यवन पक्षीय वीरम्मन्य ( अपने को वीर मानने वाले ) भाग गए। श्रीमान् का प्रभाव ही ऐसा विलक्षण है कि "महाराष्ट्रराज की विजय हो" यह शब्द सुनते यवनवीर इस तरह जी जान से भागने लग जाते हैं कि पीछे भी उलटकर वे नहीं देखते।

यह सुनकर सभा मे उपस्थित सभी वीर अपने अपने खड्ग को खट-खटाते हुए उच्च स्वर से "सनातन धर्म की जय है, महाराष्ट्रराज की विजय हो" इत्यादि शब्द कहने लगे।

समस्त महाराष्ट्र देश में सब तरफ से उच्चारित, भेरी, झाँझ एव पणव आदि वाद्य यन्त्रों के नाद से समन्वित, प्रतिध्वनियों से सहस्रगुणित एवम् पर्वत की गुफा में भी प्रविष्ट उस विजयध्वनि को ब्रह्मचारिगुरु के वेष को

सिंहेन कुटीरे पूजितः स एव योगिराजोऽपि कथ कथमपि समाधिसन्धावर्थोपीत्।

श्रुत्वैव च कन्दराद् बहिरागत्य, शैलसानु समारुह्य, त्राटकी-त्रुटितावरोधया दृष्ट्या सुदूर पश्यन्, आपूर्वसमुद्रमापश्चिमसमुद्रमालङ्कमाविन्ध्यञ्च कुसुमितमिवोद्यानम्, प्रफुल्लकमल

स एव योगिराज =य आदिमनिश्वासे कथादौ स्मृत। योगिराजचरितेनैव समारम्भ तेनैव समापयन् उपक्रमोपसहारयोरैक्य प्रदर्शयति। समाधिसन्धौ = चित्तनिरोधविरामकाले। ध्वनिरय समाधिभङ्गश्च दैवाद्वा योगिना तत्कालस्य पूर्वत एव ज्ञातत्वाद्वा समकालमेव समभूदिति तत्त्वम्।

त्राटक्या=योगमुद्राविशेषेण,त्रुटितः,अवरोध =प्रतिबन्धो यस्या एवम्भूतया। चक्षुषो भ्रुवोरन्तरे स्थापन त्राटकी। तया चक्षुषोर्नियता शक्तिरप्रतिहता भवति। अत एव योगी सर्वं द्रष्टु शक्नोतीति तात्पर्यम्। आलङ्कम् = आसिंहलमिति तात्पर्यम्। वस्तुतस्तु लङ्कासिंहलयोर्भेद इति पूर्वं प्रतिपादितम्। राक्षसराजनगरी भूमध्यरेखाया विद्यमाना रामेश्वरकूलाच्छतयोजनदूरे स्थिता लङ्का रामरावणयुद्धसमाप्तावेव समुद्रेण जलप्लाविता, अधुनाऽपि जलमग्नैव तिष्ठति, तस्याश्च कियानशो दृष्टिगोचरो भवतीति वेदितव्यम्।

भवति चात्रेतिहासवचनम्

"सप्तमेऽहनि ता लङ्का समुद्रः प्लावयिष्यति।" इति।

धारण करने वाले, वीर वीरेन्द्रसिंह द्वारा अपनी कुटिया में पूजित उन योगिराज ने भी अपनी समाधियों के सन्धिक्षण में किसी न किसी तरहसुना।

सुनते ही कन्दरा से बाहर निकल कर, पर्वत की चोटी पर चढ़कर 'त्राटकी' नाम की योगमुद्रा से दूरदर्शन में होने वाले दृष्ट्यवरोध को मिनष्ट कर दूर तक देखने पर पूर्व समुद्र से पश्चिम समुद्र तक लङ्का से विन्ध्याचल तक विस्तृत उद्यान, विकसित कमलों से परिपूर्ण सरोवर तथा दानववृन्द के,

मिव तडागम् , विध्वस्त दानववृन्दमिव चेन्द्रपुरम् , महाराष्ट्रराज्यं पश्यन् , बहुश आशिषो वदन् पुनः समाधिमाकलयितुं तमेव कन्दरं प्रविष्टः ।

प्रविशंश्च मन्दमन्दमेवमपठत्—

---

अस्मद्रचितपुराणमतदीपिकाया सुविशद निरूपितमिदम् ।

यतो धर्मस्ततो जय इति पद्यखण्ड विशदयन् धर्मपदस्य वास्तविक तत्त्वञ्च प्रदर्शयन् तमेव पद्यखण्ड विवर्द्धय पठति–यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जय इति ।

शेषाशेषवचोविमन्थनविधौ मन्थानदण्डायिता
यस्यौ यस्य निपीय पाणिनिगवीचिन्तापराः शाब्दिकाः ।
सोऽयं पण्डितपण्डितार्चितपदो नारायणान्तो हरः
ख्यातो भूवलयेऽधिकाशि निवसन् यस्य त्रिपाठी गुरुः ॥१॥
तर्के कर्कशतामुपागतवती यद्भारती भारते
गङ्गात्मत्वमुपागता विदलयत्यान्वीक्षिकीदूषणम् ।
सोऽयं श्रीशिवदत्तमिश्रविबुधो गौडाब्जिनीवल्लभो
य प्राबोधयदञ्जसा मतिमतामामोदावहं दर्शनम् ॥२॥
वैयासे गणितो ग्रहीयगणिते पारङ्गतः पण्डितः
श्रीमान् भागवतो बभूव जनको यस्यातिपौराणिकः ।
य प्रासूत सतीशिरोमणिरनल्पै राजिता सद्गुणै-
र्देवी दिव्यशरीरिणी भगवती कीर्त्या स्थिता भूतले ॥३॥

---

विध्वस से शान्त इन्द्रपुर ( स्वर्ग ) के समान महाराष्ट्र राज्य देखकर, बहुत आशीर्वाद देकर पुनः समाहित होने के लिये वे योगिराज उसी कन्दरा में घुस गये ।

घुसते समय मन्द मन्द स्वर से वे पढ़ रहे थे—"जहाँ धर्म है वहीं कृष्ण हैं और जहाँ कृष्ण हैं वहीं विजय है," और

यद्—"यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः।"

"हिंस्रः स्वपापेन विहिंसित खलः

साधुः समत्वेन भयाद् विमुच्यते"

इति महाकविश्रीमदम्बिकादत्तव्यासविरचिते शिवराजविजये

द्वादशो निश्वासः।

इति तृतीयो विरामः।

॥ समाप्तोऽयं ग्रन्थः॥

---

पाण्डेयोत्तररामजीत्यभिहित सोऽय सिपाहोद्भवो

व्यासोक्ते शिवराजवीरविजये विद्वज्जनाङ्गीकृते।

सप्त्यङ्काङ्कवसुन्धरापरिमिते श्रीवैक्रमाब्दे वरे

पूर्णायामथ माघवेऽन्वगमयच्छ्रीवैजयन्तीमिमाम् ॥४॥

श्रीशिवराजविजयवैजयन्त्यां द्वादशनिश्वासविवरणं समाप्तम्।

इति तृतीयो विरामः।

---

"हत्यारा दुष्ट अपने ही पापों से विनष्ट हो जाता है एवम् समदृष्टि के प्रभाव से सज्जन स्वयम् भय से मुक्त हो जाते हैं।"

कृतिषु प्रथमः प्रथितो यः श्रीमानम्बिकादत्त.।
यस्तत्कृतिषु प्रथम प्रथितः शिवराजविजयोऽस्य ॥१॥
लक्ष्मीनाथ पितरमनिशं बुद्धिमत्याख्ययाऽम्बा
ख्याता नत्वा परममहिता मिश्रनारायणेन।
वाराणस्यामिह विरचिते राष्ट्रभाषाऽनुवादे
तार्तीयीकः परिणतिमगादन्तिमोऽस्य विरामः ॥२॥
पुनः पुन परिश्रयो मादृशामल्पमेधसाम्।
वाग्विस्तरे दुस्तरेऽस्मिन्, क्षन्तव्य स मनस्विभि ॥३॥
ऋतुनेत्राम्बरश्रोत्रमिते ( २०२६ ) विक्रमवत्सरे।
प्रपूरितोऽनुवादोऽय सज्जनेभ्य समर्प्यते ॥४॥

महाकवि अम्बिकादत्तव्यास विरचित
शिवराजविजय उपन्यास का बारहवाँ निश्वासानुवाद समाप्त हुआ।
तृतीय विराम समाप्त हुआ।

शुभमस्तु, भारते भातु भारती।

---